विज्ञान-गुण-अवयविदृष्टान्तेन द्रव्यस्य क्रमाक्रमवर्तिपर्यायव्यापकत्वसाधनम् १२. २९.
संग्रहः सन्मात्रं विषयीकरोति १३. ४.
ब्रह्मवादः संग्रहाभासः १३. ५.
नैगमस्य लक्षणम् १३. १०.
नैगमाभासस्य लक्षणम् १३. ११.
गुणगुण्यादीनां न भेदैकान्तः १३. १४.
सत्तातद्वतां भेदैकान्तनिरासः १३. १९.
भिन्नसत्तासमवायात् न सदसतोः सद्व्यवहारः १३. २१.
प्रामाण्यं व्यवहारात् १४. १.
शुद्धमशुद्धं द्रव्यं पर्यायं वा व्यवस्थापयता प्रमाणं मृग्यम् १४. ३.
सांख्याभिमततत्त्वस्वरूपस्य नैगमाभासता १४. ७.
गुणानां परमं रूपमित्यादिकारिकायाः खण्डनम् १४. ९.
स्वयमज्ञस्य न ज्ञानसमवायात् ज्ञत्वम् १४. १२.
व्यहारनयस्य स्वरूपम् १४. १७.
व्यवहाराभासस्य स्वरूपम् १४. १८.
व्यवहारः अर्थाभिधानप्रत्ययात्मकः १४. १९.
अविसंवादस्य लक्षणम् १४. २१.
ऋजुसूत्रनयस्य स्वरूपम् १४. २८.
सापेक्षस्य नयत्वम् निरपेक्षस्य दुर्नयत्वम् १५. ३.
शब्दनयस्य लक्षणम् १५. ७.
अभिरूढनयस्य स्वरूपम् १५. ८.
इत्थम्भूतनयस्य लक्षणम् १५. ८.
कालकारकलिंगभेदादर्थभेदः १५. १०.
एवम्भूतस्य लक्षणम् १५. ११.
कुर्वत एव कारकत्वम् १५. ११.
विज्ञानस्य अनागतविषयत्वम् १५. १४.
स्मृतेः प्रामाण्यप्रदर्शनम् १५. १८.
प्रतिभासभेदेऽपि एकार्थविषयत्वमविरुद्धम् १५. २५.
अक्षज्ञानवत् शब्दार्थज्ञानमपि अविसंवादि १६. ३.
अस्पष्टमपि शब्दज्ञामनुमानवत् प्रमाणम् १६. ४.
एकान्ते कालस्य वर्त्तनालक्षणत्वासंभवः १६. १५.
एकान्ते षट्कारक्यसंभवः १६. १७.
स्त्रीपुंनपुंसकशब्दानां व्युत्पत्तिः १६. १८.
इन्द्रशक्रपुरन्दरशब्दानां व्युत्पत्तिः १६. २०.
एकस्यापि अनेकसामग्रीसन्निपातात् षट्कारकीकल्पना १६. २६.
नयदुर्नययोर्लक्षणम् १७. २.
प्रमाणस्य लक्षणम् १७. ३.
तर्कस्य प्रामाण्यप्रदर्शनम् १७. ७.
स्मरणप्रत्यभिज्ञानुमानादीनां प्रामाण्यप्रदर्शनम् १७. ९.
अन्तिममंगलम् १७. १२.

इति प्रमाणनयप्रवेशः ।

मंगलाचरणम्, प्रमाणनयनिक्षेपनिरूपणप्रतिज्ञा च १८. ५.
प्रमाणस्य स्वरूपम् १८. ८.
न्यासस्य स्वरूपम् १८. ८.
नयस्य स्वरूपम् १८. ९.
अचेतनस्य न प्रामाण्यम् १८. १०.
ज्ञानस्य नार्थजन्यता अपि तु इन्द्रियानिन्द्रियजत्वम् १८. १२.
ज्ञानं स्वस्य अर्थकार्यतां न वेत्ति १८. १७.
अन्वयव्यतिरेकाभावात् नार्थः कारणम् १८. २४.
अर्थस्य कारणत्वे संशयाद्यनुत्पत्तिप्रसंगः १८. २५.
अतः इन्द्रियमनसी कारणम् अर्थो विषयः १९. १.
सन्निकर्षोऽपि न प्रमाणम् १९. ५.
आलोकस्य न कारणता परिच्छेद्यत्वात् १९. ११.
आलोकाभावेऽपि तमोज्ञानं भवति १९. १५.
नावरणं तिमिरादि परिच्छेद्यत्वात् १९. २०.
क्षयोपशमतारतम्येन ज्ञानस्य अभिव्यक्तिः १९. २४,
'नाकारणं विषयः' इत्यस्य निरासः १९. २७.
नार्थादयः कारणं विज्ञानस्य २०. ४.
तज्जन्म-ताद्रूप्य-तद्व्यवसितीनां न प्रामाण्यहेतुता २०. ६.
नार्थजन्यं ज्ञानम् २०. ८.
नार्थसारूप्यभृज्ज्ञानम् २०. ९.
ज्ञानं स्वहेतूत्थमेव परिच्छेदात्मकम् २०. १६.
व्यवसायात्मकं ज्ञानमेव आत्मार्थग्राहकत्वात् प्रमाणम् २०. २३.
निर्विकल्पस्य न प्रामाण्यं नापि विकल्पजनकता २०. २५.
प्रत्यक्षपरोक्षतया द्विधा प्रमाणम् २१. ४.
प्रादेशिकप्रत्यक्षस्य स्वरूपम् २१. ६.
अनिन्द्रियप्रत्यक्षस्य स्वरूपम् २१. ७.
अतीन्द्रियप्रत्यक्षस्य स्वरूपम् २१. ८.
सुनिश्चितासंभवद्बाधकप्रमाणत्वात् अतीन्द्रियप्रत्यक्षसिद्धिः २१. ९.
श्रुतं परोक्षं प्रमाणम् २१. ९.
अर्थापत्त्यादीनां परोक्षेऽन्तर्भावः २१. १०.
श्रुतस्य स्याद्वाद-नयसंज्ञितौ द्वौ उपयोगौ २१. १४.
सकलादेशः स्याद्वादः २१. १५.
विकलादेशो नयः २१. १५.
स्याद्वादस्य निरूपणम् २१. १६.
स्याद्वादस्य प्रमाणत्वम् २१. १९.
साकल्यमनन्तधर्मात्मकता २१. २०
वैकल्यमेकान्तः २१. २१.
नयः सम्यगेकान्तरूपः २१. २५.
'स्याज्जीव एव' इत्यत्र अनेकान्तविषयः स्याच्छब्दः २१. २५.
'स्यादस्त्येव जीवः' इत्यत्र एकान्तविषयः स्याच्छब्दः २१. २६.
अप्रयुक्तोऽपि स्यात्कारः अर्थादेव प्रतीयते २२. १.

विधिनिषेधानुवादातिदेशादिवाक्येषु स्याद्वादं विना न प्रस्तुतार्थसिद्धिः २२. ५.
वर्णपदवाक्यानामर्थवाचकत्वम् २२. १०.
शब्दस्य वक्त्रभिप्रायवाचित्वनिरासः २२. १५.
अभिप्रेतव्यभिचारित्वमपि शब्दस्य २२. १६.
नैगमादयो नयाः श्रुतभेदाः २२. २४
नया द्रव्यपर्यायमूलाः २२. २५.
नहि मतिभेदा नयाः २२. २८.
नापि मनोमतिभेदाः नयाः २३. १.
मूलनयौ द्रव्यपर्यायार्थिकौ २३. २.
द्रव्यमेकान्वयात्मकम् २३. २.
तदतत्परिणामित्वादेकत्वम् २३. ३.
सदृशपरिणामात्मकत्वादन्वयि २३. ३.
पर्यायः पृथक्त्वं व्यतिरेकश्च २३. ८.
पृथक्त्वस्य स्वरूपम् २३. ८.
व्यतिरेकस्य स्वरूपम् २३. ९.
व्यवहार-निश्चयपर्यायियोः स्वरूपम् २३. १०.
न नैगमस्य प्रमाणता २३. १८.
नैगमस्य स्वरूपम् २३. २१.
नैगमाभासस्य स्वरूपम् २३. २१, २४.
धर्मधर्मिणोः गुणप्रधानभावेन विवक्षा नैगमे २३. २६.
संग्रहादौ एकविवक्षा २३. २६.
संग्रहनयस्य स्वरूपम् २४. १, ३.
ब्रह्मवादः संग्रहाभासः २४. २, ३.
व्यवहारनय-तदाभासयोः स्वरूपम् २४. ६.
ऋजुसूत्र-तदाभासयोः स्वरूपम् २४. १५.
नैगमादयश्चत्वारोऽर्थनयाः २४. २३.
शब्दादयस्त्रयोऽर्थनयाः २४. २४.
शब्दनयस्य स्वरूपम् २४. २५.
अभिरूढनयस्य स्वरूपम् २४. २६.
शकटोदयादीनां भविष्यद्विषयकत्वनिर्णयेन 'बुद्धेरकारणं विषयः' इत्यस्य निरासः २५. १.
शब्दज्ञानं विवक्षाव्यतिरिक्तार्थग्राहि २५. ५.
कालस्य लक्षणम् २५. ६.
कारकस्य लक्षणम् २५. ७.
लिंगस्य लक्षणम् २५. ७.
पर्यायभेदादप्यर्थभेदः २५. ८.
क्रियाभेदादर्थभेदः २५. १०.
वर्णपदवाक्यव्युत्पादकं शास्त्रमवितथम् २५. ११.
निरपेक्षत्व-सापेक्षत्वयोर्लक्षणम् २५. १४.
श्रुतादर्थमधिगम्य नयैः परीक्ष्य निक्षेपैः न्यस्य अनुयोगैः अनुयुज्य सम्यग्दर्शनादित्रयं प्राप्य मोक्षप्राप्तिः २५. १८.
श्रुतमनादि सादि च २५. २६.
प्रमाणस्य स्वरूपम् २५. २६.
नयस्य स्वरूपम् २५. २६.
न्यासस्य स्वरूपम् २५. २९.
नामस्थापनाद्रव्यभावरूपेण चतुर्धा निक्षेपः २५. २९.
नामनिक्षेपस्य लक्षणं तदनेकत्वञ्च २६. १.
स्थापनाया लक्षणम् २६. २.
द्रव्यनिक्षेपस्य लक्षणम् २६. ३.
भावनिक्षेपस्य लक्षणम् २६. ३.
निक्षेपस्य फलम् २६. ४.
मोक्षसुखस्य स्वरूपम् तत्प्राप्त्युपायाश्च २६. ७.
नैयायिकादिकल्पितमोक्षस्य निरासः २६. १०
शरीरादिकं न ज्ञानावरणादिरूपम् २६. ११.
शास्त्राध्ययनस्य फलम् २६. १४.
जिनेश्वरपदप्राप्त्युपायः २६. २२.

इति प्रवचनप्रवेशः।

---

## § २. न्यायविनिश्चयस्य विषयानुक्रमः[1]

मंगलश्लोकः २९. १.
न्यायविनिश्चयकरणप्रतिज्ञा २९. २.
प्रत्यक्षलक्षणम् २९. ३.
इन्द्रियप्रत्यक्षस्य लक्षणम् २९. ४.
एकस्मिन् विषये समक्षेतरसम्प्लवः ३० ५.
न अभिलापवत्त्वं विकल्पस्य लक्षणम् ३०. ७.
चक्षुरादिबुद्धीनां व्यवसायात्मकत्वम् ३०. ८.
अर्थज्ञाने सत एव नीलादिस्थूलरूपस्य प्रतिभासः ३०. ९, १०.
परोक्षज्ञानवादनिरासः ३१. ११.
ज्ञानस्य स्वसंवेदनसिद्धिः ३१. १३.
सुखादयः स्वसंवेद्याः ३१. १५.
विषयेन्द्रियविज्ञानमनस्कारादयो लिंगाः न अस्वसंविदितज्ञानस्यानुमापकाः ३१. १७.
असिद्धादर्थपरिच्छेदान्न ज्ञानस्य सिद्धिः ३१. १८.
ज्ञानान्तरवेद्यज्ञानवादनिरासः ३२. १९.
अचेतनज्ञानवादनिरासः ३२. २५.
प्रतिबिम्बवादनिरसनम् ३२. २६.
साकारज्ञानवादनिरासः ३३. २८.
अतीतस्य न आकारार्पकता ३३. ३२.
अतः स्वहेतोरेव बुद्धेः प्रकाशनियमो न प्रतिबिम्बतः ३३. ३३.
आत्मा सत्यासत्यज्ञानाभ्यां बहिरर्थमेव यथार्थेतरतया अवलोकते ३४. ३७.
विषयज्ञानतज्ज्ञानविवेकोऽपि शक्तिनियमादेव ३४. ३८.
अर्थज्ञानस्मृतौ अर्थस्मरणे ज्योतिर्मनस्कारादिभिः अतिप्रसंगस्य परिहारः ३४. ३९.
परिच्छेदशक्तिनियमादेव विषयप्रतिनियमो नाकारादिधारितया ३४. ३९.

---

१ विषयानुक्रमेऽस्मिन् स्थूलांकाः पृष्ठसूचकाः सूक्ष्मांकाश्च श्लोकसंख्यासूचका ज्ञेयाः।

आत्मा तत्कालेऽविद्यमानोऽपि
तद्वस्तु प्रत्येतुमलम् ३५. ४१.
प्रत्यभिज्ञानाद्यतीतानुमितिदर्शनादपि
असदर्थज्ञानसंभवः ३५. ४४.
भ्रान्तौ स्वप्ने वा सत एव केश-कामिन्यादेः
प्रतिभास इति शंकाया निरासः ३६. ४६.
स्वप्ने अन्तःशरीरवर्तितया कामिन्यादेः सत्त्वं
न बहिरवस्थिततया इति प्रज्ञाकरा-
शंकाया निरासः ३६. ४७.
अद्वयवादनिरासः ३६. ५०.
विभ्रमवादनिरासः ३६. ५१.
संविदद्वैतवादनिरासः ३७. ५६.
असदर्थविषयत्वेऽपि सर्वज्ञानानां यत्रार्थक्रिया-
प्राप्त्या परितोषः तदेव तत्त्वसिद्धिनिबन्धनं
यथा मणिप्रभायाम मणिज्ञानम्
इत्याशंकानिरासः ३८. ६१.
स्वांशमात्रावलम्बित्वे विकल्पानां न ततो
व्यवहारसिद्धिः ३८. ६४.
विचारसाफल्यमिच्छद्भिः विकल्पः अर्थ-
क्रियाकारिबहिरर्थविषयकोऽभ्युगन्तव्यः ३८. ६५.
सन्तानान्तरविकल्पस्य बहिरर्थविषयत्वमन्त-
रेण न तत्सिद्धिः ३८. ६५.
बहिः सदेव विषं मरणप्रयोजकं न तु
विषज्ञानम् ३९. ६९.
वितथाकारविज्ञप्तिमात्रवादनिरासः ४०. ७५.
संवेदनाद्वैतप्रक्रियया ब्रह्माद्वैतसिद्धि-
प्रसञ्जनम् ४०. ७६.
विज्ञानवादनिरासः ४०. ७८.
सन्तानान्तरविकल्पस्य बहिरर्थविषयत्व-
प्रसाधनम् ४१. ८२.
सहोपलम्भनियमादर्थज्ञानयोरभेदस्य
निराकरणम् ४१. ८३.
कल्पिताद्धेतोर्न साध्यसिद्धिः अतो हेतुः
बहिर्विषयकोऽभ्युपेयः ४१. ८४.
रक्तारक्तादिविरुद्धधर्मप्रसञ्जनेन बौद्धस्य
अवयविनिरासाशंका ४१. ८७.
तदाशंकापरिहारपुरस्सरं बहिरर्थसिद्धिः ४२. ८८
चित्रज्ञानदृष्टान्तेन अनेकान्तसिद्धिमुपहसतो
बौद्धस्य परिहासः ४२. ९०.
विभ्रमादिवादपरिहार-अनेकात्मकार्थ-
सिद्धयोरुपसंहारः ४२. ९१.
चित्रज्ञानवादनिरासः ४२. ९२.
वासनाभेदात् बहिरर्थादिभेदकल्पनानिरासः ४२. ९६.
सन्निवेशादिभिर्बुद्धिमत्पूर्वकत्वं साधयन्तं
नैयायिकं प्रतिक्षिपतां बौद्धानां तद्दृष्टा-
न्तेनैव बाह्यार्थसिद्धिप्रदर्शनम् ४३. ९८.
परमाणुरूपं बहिरर्थं मन्यमानानां सौत्रा-
न्तिकानां प्रतिक्षेपः ४३. १०२.
अवयवव्यतिरिक्तावयविवादिनां
योगानां प्रतिक्षेपः ४३. १०२.
अवयवावयविनोः समवायवृत्तेः खंडनम् ४३. १०३.
'वृक्षे शाखा' इति प्रतीतिबलात् तयोस्ता-
दात्म्यमेव न समवायः ४४. १०४.
परमाण्वतिरिक्त-अवयविस्वीकारे गौरवा-
धिक्यादयोऽनेके दोषाः ४४. १०५.
केवलम् भेदकल्पनयैव अवयव-अवयवि-
इत्यादिभेदव्यवहारो न तु वस्तुतः ४४. ११०.
द्रव्यस्य लक्षणम् ४४. १११.
गुणपर्याययोर्लक्षणम् ४४. १११.
गुणपर्याययोः भेददर्शनम् ४५. ११२.
द्रव्यस्य लक्षणं व्युत्पत्तिश्च ४५. ११३.
भेदज्ञानात् प्रादुर्भावात्यययोः अभेद-
ज्ञानाच्च स्थितेः सिद्धिः ४५. ११४.
सतो लक्षणम् ४५. ११५
पूर्वोत्तरपर्याययोः तादात्म्यम् ४५. ११६.
सकलं वस्तु प्रत्यक्षतः एव उत्पादादित्र-
यात्मकंप्रतीयते ४५. ११६.
सर्पदृष्टान्तेनापि त्रयात्मकत्वम् ४५. ११७.
सामान्यविशेषयोः स्वरूपम् ४५. ११८.
सहक्रमविवर्त्तिस्वगुणैः एकं स्वलक्षणम् ४५. ११८.
परिणामस्य लक्षणम् ४६. १२१.
वस्तुनः परिणामलक्षणत्वं एकानेका-
त्मकत्वञ्च ४६. १२१.
एकत्र अनेकधर्मसद्भावे न कोऽपि
विरोधः ४६. १२२.
अन्वयव्यतिरेकयोर्लक्षणम्
प्रत्यक्षेतराभ्यामेव भेदाभेदप्रकल्पनम् ४६. १२४.
उत्पादादित्रयात्मकत्वसमर्थनम् ४६. १२४.
भिन्नाभिन्नात्मकत्वसमर्थनम् ४६. १२६.
प्रत्यक्षपरोक्षात्मकत्वसमर्थनम् ४७. १२८.
सन्तानसमुदायादयोऽपि क्रमाक्रमानेका-
न्त एव सुघटाः ४७. १२९.
प्रत्यभिज्ञानस्य स्मरणप्रत्यक्षाभ्यामति-
रिक्तत्वप्रदर्शनम् ४७. १३१.
शब्दादावपि प्रत्यभिज्ञानं सुघटम् ४७. १३२.
शब्दादावदृष्टमपि उपादानं सिद्धयति ४७. १३३.
व्यावृत्तिभेदाद् भेदकल्पनाया निरासः ४८. १३५.
बौद्धानां विपरीतकल्पनाया निदर्शनम् ४८. १३६.
न प्रत्यक्षतः अत्यासन्नासंसृष्टपरमाणूनां
प्रतिभासः ४८. १४०.
अतः द्रव्यपर्याययोर्न अत्यन्ताभेदभेदौ ४८. १४१.
न निरंशसामान्यस्य अनेकत्र समवाया-
दिसम्बन्धात् वृत्तिः ४८. १४३.
विजातीयव्यावृत्यात्मकसामान्यस्य
निरासः ४९. १४४.
विभिन्नाः सामान्यविशेषादयो न सन्ति
अत उभयात्मकं तत्त्वम् ४९. १४५.
न स्थूलादिकं संवृत्या कल्प्यम् ४९. १४७.
निरंशे वस्तुनि सर्वात्मतया ग्रहणप्रसंगः ४९. १४७.

वस्तु दृश्येतरात्मकम्, अतः 'दृष्टस्य भावस्य दृष्टः सकलो गुणः' इति धर्मकीर्तिमतस्य प्रतिक्षेपः ४९. १४९.
'कल्पनापोढं प्रत्यक्षम्' इति लक्षणस्य निरासः ४९. १५०.
अनेकान्तात्मनो वस्तुनः उपसंहारः ४९. १५०.
वैशेषिकादिकल्पितस्य नित्यसर्वगत-निरंशसामान्यस्य निरासः ५०. १५१.
सामान्यविशेषात्मकवस्तुन उपसंहारः ५०. १५३.
बौद्धपरिकल्पितनिर्विकल्पकप्रत्यक्षस्य निरासः ५०. १५५.
विकल्पजननादपि न निर्विकल्पस्य प्रामाण्यम् ५०. १५६.
बौद्धपरिकल्पितमानसप्रत्यक्षस्य निरासः ५० १५७.
शान्तभद्रकल्पितमानसप्रत्यक्षलक्षणस्य निरासः ५१. १५८.
अनेकमनसां क्रमाक्रमोत्पत्तौ प्रति-सन्ध्यभावप्रदर्शनम् ५१. १५९.
धर्मोत्तरकल्पितमानसप्रत्यक्षलक्षणस्य प्रतिक्षेपः ५१. १६२.
स्वसंवेदनप्रत्यक्षनिराकरणम् ५१. १६३.
योगिप्रत्यक्षस्य खण्डनम् ५१. १६५.
सांख्यकल्पितश्रोत्रादिवृत्तिरूप-प्रत्यक्षस्य निरासः ५१. १६५.
नैयायिककल्पितसन्निकर्षात्मक-प्रत्यक्षस्य निरासः ५२. १६६.
नैयायिकस्य काश्चित् विरुद्धेष्टयः ५२. १६७.
अतीन्द्रियप्रत्यक्षस्य लक्षणम् ५२. १६८.
बौद्धमते तत्त्वोपदेशस्य संभावनैव नास्ति ५२. १६९.

**इति प्रथमः प्रत्यक्षप्रस्तावः ।**

अनुमानस्य लक्षणम् ५२. १७०.
प्रत्यक्षवदनुमानमपि बहिःसदर्थविषयम् ५२. १७१.
साध्यस्य लक्षणम् ५३. १७२.
साध्याभासस्य लक्षणम् ५३. १७२.
सत्तासाधने असिद्धादिदोषत्रयस्य परिहारः ५३. १७३.
भावधर्मत्वे असिद्धत्वस्य परिहारः ५३. १७४.
अपक्षधर्मोऽपि हेतुः ५३. १७६.
सौत्रान्तिकं प्रति सत्तासाधनम् ५४. १७९.
अदृश्यस्यापि सत्ता सिद्धयति ५४. १७९.
अस्पष्टावभासित्वेऽपि प्रमाणमनुमानं प्रत्यक्षवत् ५४. १८२.
अनुमानमपि स्वलक्षणविषयमेव ५४. १८३.
वस्तुष्वेव प्रतिबन्धपरिज्ञानात् अनुमानस्य साफल्यम् ५४. १८४.
सत्तासामान्यस्य विशेषात् कथञ्चिद्-भेदाभेदौ ५४. १८५.
सामान्यस्य कथञ्चित्सम्बन्धासम्बन्धौ ५४. १८६.
नैयायिककल्पिते सामान्ये दोषप्रदर्शनम् ५५. १८७.
सदृशपरिणामलक्षणसामान्यादेव अनुगतप्रत्ययादिकं संभवेत् ५५. १८८.
सर्वथा भेदाभेदपक्षयोः नानेकोपाधिसंभवः ५५. १८९.
उपाधितद्वतोः कथञ्चिद्भेदाभेदौ ५५. १९०.
निरंशवस्तुवादे सकलग्रहणप्रसंगः ५५. १९१.
विशेषाणामानन्त्यात् न तत्र सम्बन्धग्रहण-संभवो यतोऽनुमानम् ५५. १९२.
सौगतस्य अन्यापोहात्मकसामान्येऽपि न सम्बन्धग्रहः ५५. १९३.
अपोहे दोषप्रदर्शनम् ५६. १९४.
वासनाजन्यविकल्पतोऽपि न अपोहप्रति-पत्तिः संभाव्या ५६. १९५.
सदृशासदृशात्मकं सत् ५६. १९७.
सदृशपरिणामात्मके सामान्य एव संकेतग्रहात् शब्दव्यवहारः ५६. १९८.
वस्तुनः सदृशासदृशात्मकत्वसमर्थनम् ५६. २००.
सादृश्याभावे विभ्रमज्ञानस्याहेतु-कत्वापत्तिः ५७. २०३.
वस्तुनो भेदाभेदात्मकत्वस्योपसंहारः ५७. २०४.
अभेदशब्देन सदृशपरिणाम एव गृह्यते ५७. २०६.
शब्दस्य अर्थसंस्पर्शित्वे सर्वं शाब्दं ज्ञानं प्रमाणं स्यात् ५८. २०७.
विवक्षावाचकत्वे शब्दस्य सत्यासत्य-विभागाभावः ५८. २०८.
अर्थ एव संकेतो न ज्ञानाकारेषु ५८. २०९.
स्वमतेन संकेतप्रवृत्तिप्रकारः ५८. २१०.
भेद-सामान्य-तद्वत्सु न संकेतः ५८. २११.
एकत्व-सादृश्यनिबन्धनः संकेतः ५८. २१२.
संकेतितस्य शब्दस्य प्रवृत्तिप्रकारः ५८. २१४.
मेचकादिवत् एकत्रापि अनेकधर्म-सद्भावे न विरोधः ५९. २१५
सामान्याभावेऽपि सदृशपरिणामात् तन्निमित्तकः व्यवहारः सुघटः ५९. २१६.
सदृशपरिणामस्यानेकत्वेपि संकेतवशा-देकरूपतया व्यवहारः ५९. २१८.
द्विधा प्रत्यभिज्ञा, एकत्वनिबन्धना सादृश्यनिबन्धना च ५९. २१९.
प्रधानास्तित्वसाधने हेत्वभाव एव ५९. २२०.
सुषुप्तावस्थायामपि उपयोगात्मक एव आत्मा विद्यते ५९. २२२.
आत्मैव कर्मणां कर्त्ता तत्फलस्य च भोक्ता संसारी मुक्तश्च ६०. २२३.
भूतचैतन्यवादनिरासः ६०. २२५.
जैननये गुणव्यवहारप्रकारः ६०. २२७.
गुणगुणिनोः भेदाभेदात्मकत्वम् ६०. २२८.
न शरीरगुणः चैतन्यम् ६१. २२९.
वैशेषिकनिरूपितस्य पृथक् गुणपदार्थस्य निरासः ६१. २३०.
आकारभेदादपि न गुणिनः पृथग्गुणाः ६१. २३३.

गुणगुणिनोः वास्तवस्यैकत्वस्याभावे पृथक्त्वमप्युपचरितं स्यात् ६१. २३४.
ज्ञानस्य जीवच्छरीरधर्मत्वमपि न संभवति ६२. २३५.
देहज्ञानयोः गुणगुणिभावनिरासः ६२. २३७.
भवस्य लक्षणम् ६२. २३९.
कायो न चैतन्यस्य कारणमात्रम् ६२. २४१.
नापि कायः परिणामिकारणम् ६२. २४२.
संसारवैचित्र्यं कर्मवैचित्र्यात् ६२. २४६.
इन्द्रियाणां सह प्रत्येकं वा न चैतन्यकारणता ६२. २४८.
जातिस्मरणादिहेतुभ्यः पृथगात्मसिद्धिः ६३. २४९.
'गर्भगतरसविशेषादभिलाषादयः' इति मतस्य निरासः ६४. २५१.
रागादिदर्शनादपि पृथगात्मसद्भावः ६४. २५४.
बुद्धेः पुरुषधर्मत्वे चार्वाकेण उद्भावितानां दोषाणां परिहारः ६४. २५७.
बौद्धसम्मतज्ञानप्रवाहस्य आत्मत्वनिरासः ६५. २५८.
बौद्धमते कार्यकारणप्रवाहात्मकः ज्ञानसन्तान एव न संभवति ६५. २६२.
अन्वयिद्रव्याभावे सन्तानकल्पनाप्यसंभाव्या एव ६६. २६४.
कार्यकारणयोः सर्वथा भेदनिरासः ६६. २६७.
साधनस्य लक्षणम् ६६. २६९.
साधनाभासस्य लक्षणम् ६६. २७०.
चलाचलादिविरुद्धधर्माध्याससंभवादनेकान्तात्मकं तत्त्वम् ६७. २७१.
समवायादपि न चलादिव्यपदेशसंभवः ६७. २७२.
अनेकान्तात्मकतत्त्वाभावे सकलव्यवहाराद्यभावः ६७. २७३.
अचेतनस्यापि स्कन्धात्मन एव सप्रदेशस्य दर्शनम् न निरंशस्य ६७. २७६.
चित्रज्ञानदृष्टान्तेन स्कन्धस्य सिद्धिः ६८. २७९.
स्कन्धापेक्षया एकत्वेऽपि भागानां दर्शनादर्शनस्थितिर्न विरुद्धा ६८. २८०.
स्कन्धस्य तादात्म्यमेव सम्बन्धः ६८. २८३.
स्कन्धः रूपादिगुणानामभेद एव न तु रूपादिभ्यो भिन्न इति ६८. २८५.
स्कन्धस्यैकत्वेऽपि एकेन्द्रियेण तद्ग्रहणे नेन्द्रियान्तरस्य वैफल्यम् ६९. २८७.
प्रमेयत्वं हेतुः अनेकान्तात्मकवस्तुसत्त्वसाधन एव साधुः ६९. २८८.
अभावोऽपि प्रमेयम् ६९. २८९.
भावान्तरमेव अभावः न तु तुच्छरूपः ६९. २९१.
अग्निदृष्टान्तेन भावस्यैव अभावात्मकत्वप्रदर्शनम् ६९. २९२.
प्रमेयत्वस्य गमकत्वे अविनाभाव एव निबन्धनम् ६९. २९४.
सत्त्वं हेतुः परिणामप्रसाधकम् ७०. २९६.
संवृतिसिद्धमपि सत्त्वं क्षणिके न संभवति ७०. २९६.
अनेकान्तात्मनि तु सत्त्वं प्रतीतिसिद्धम् ७०. २९७.
निरंशपरमाणुरूपस्य अवयविरूपस्य वा अर्थस्य न प्रमाणतः प्रतीतिः ७०. २९८.
यद्यपि अनेकान्तात्माऽर्थः समर्थः तथापि अपेक्षातः सहकारिकारणापेक्षा भवति ७०. २९९.
परिणामाभावे कारणादुत्पत्तिर्दुघटा ७०. ३०१.
अन्यानपेक्षत्वं हेतुः न विनाशप्रसाधकमपि तु परिणामप्रसाधकम् ७०. ३०२.
भेदाभेदात्मनोऽर्थस्य स्वस्वरूपतया प्रमाणतः लोकतश्च प्रतीतिः ७१. ३०३.
सत्त्वं हेतुः न क्षणिकत्वादिप्रसाधकम् अन्यथानुपपत्तिविरहात् ७१. ३०४.
स्थूलाद्याकारो नारोपितः किन्तु वास्तवः ७१. ३०५.
'अणवः क्षणिकात्मानः स्पष्टावभासिनः' इति बौद्धमतस्योपहासः ७१. ३१०.
विकल्पबुद्धौ यत्प्रतिभाति स्थूलादिरूपं तदेव वस्तुस्वरूपम् ७२. ३११.
ज्ञानस्य स्वपरनिर्णयात्मकत्वेऽपि न प्रतिक्षणपरिणामादेः सांकर्यम् ७२. ३१३.
अप्रत्यक्षाणामपि क्षणपरिणामादीनां प्रमाणान्तरेण प्रतिभासः ७२. ३१४.
ज्ञानं स्वरूपवत् परमपि प्रकाशयति ७३. ३१५.
चित्रज्ञानस्यापि क्षणिकस्य अप्रतिभासनात् ७३. ३१७.
जीव अनावृतः सन् सर्वार्थग्राही भवति ७३. ३१९.
जीवे न सदृशापरापरोत्पत्तेः प्रत्यभिज्ञानम् अपि तु एकत्वात् ७३. ३२०.
त्रैरूप्यखंडनपुरस्सरम् अन्यथानुपपत्तिरूपस्यैकलक्षणस्य उपसंहारः ७४. ३२३.
अनुमानान्न हेतुसम्बन्धप्रतिपत्तिः ७४. ३२५.
अनलधूमाद्योः वास्तव एव कार्यकारणभावः ७४. ३२६.
अन्यथानुपपत्तिः प्रत्यक्षानुपलम्भाभ्यां प्रतीयते ७४. ३२७.
व्याप्यव्यापकभावादिसम्बन्धावगतिः तर्काख्यप्रमाणात् ७४. ३२८.
तर्कस्य प्रामाण्यसमर्थनम् ७४. ३३०.
तर्कस्य श्रुतज्ञानेऽन्तर्भावः ७४. ३३१.
श्रुतज्ञानस्य बहुभेदत्वसमर्थनम् ७५. ३३२.
अनुपलम्भहेतोः समर्थनम् ७५. ३३५.
दृश्यानुपलम्भस्य अन्यथानुपपत्तिबलादेव गमकत्वम् ७५. ३३६.
अनुपलब्धेः प्रपंचः ७५. ३३७.
तादात्म्यतदुत्पत्त्यभावेऽपि तुलोन्नामरसादीनां हेतुत्वसमर्थनम् ७५. ३३८.
'पात्रकेसरिस्वामिनापि हेतोः त्रैविध्यनियमः प्रतिषिद्धः' इति प्रदर्शनम् ७६. ३४०.
पूर्वचरहेतोः समर्थनम् ७६. ३४१.
हेत्वाभासविवेचनम् ७६. ३४२.
सत्त्वादयो न क्षणिके नित्ये वा गमका अपि तु परिणामे एव ७६. ३४४.

अन्वयस्य लक्षणम् ७६. ३४६.
क्षणिकत्वसाधनाय प्रयुक्ताः सत्त्व-कृतकत्वादयो हेतवो विरुद्धाः ७६. ३४८.
सर्वज्ञाभावसाधने वचनादयोऽनैकान्तिकाः ७६. ३४९.
त्रैरूप्याद् गमकत्वे तु वचनादीनां सद्धेतुता स्यात् ७७. ३४९.
व्यापकविरुद्धोपलब्ध्यादिनापि तद्बाधा ७७. ३५२.
अतो वचनादयोऽन्यथानुपपत्तिवैकल्यादेव अगमकाः ७७. ३५३.
विवक्षामन्तरेणापि वचनप्रवृत्तिः भवति ७७. ३५४.
विज्ञानहेतुकमेव वचनं न विवक्षाहेतुकम् ७७. ३५६.
सत्यामपि विवक्षायां सत्यहितवचनविवक्षा निर्दोषैव ७७. ३५६.
सर्वज्ञवक्तृकवचनानां यथार्थतैव ७८. ३५७.
पुरुषत्वादीनामपि सर्वज्ञत्वेन न विरोधः, अतस्तेऽपि सर्वज्ञाभावसाधने अनैकान्तिका एव ७८. ३५८.
संसारिणां तु ज्ञानावरणवशान्न सर्वप्रकाशसामर्थ्यम् ७८. ३६१.
परदुःखपरिज्ञानेऽपि न सर्वज्ञस्य दुःखित्वम् ७८. ३६४.
असिद्धहेत्वाभासविवेचनम् ७८. ३६५.
विरुद्धासिद्धसन्दिग्धाकिञ्चित्करादिभेदैः बहुधा असिद्धहेत्वाभासः ७९. ३६५.
क्षणिकत्वसाधने सत्त्वादिकमसिद्धम् ७९. ३६७.
शब्दस्य भेदाभेदात्मकत्वसमर्थनम् ७९. ३६८.
पुद्गलपरमाणूनां परिणामभूतः शब्दः ७९. ३६९.
अकिञ्चित्करहेत्वाभासविचारः ७९. ३७०.
दूषणाभास (जाति) लक्षणम् ७९. ३७१.
धर्मकीर्त्तिसमुद्भावितदध्युष्ट्रादेरेकत्वप्रसंगस्य दूषणाभासता ७९. ३७२.
अतो भेदाभेदात्मनि न कश्चिद्दोषः ८०. ३७३.
साधर्म्यादिसमजातीनामकथने कारणम् ८०. ३७६.
जयेतरव्यवस्थाविचारः ८०. ३७७.
धर्मकीर्तिकल्पितनिग्रहस्थानस्य खण्डनम् ८०. ३७९.
दृष्टान्ताभासस्य विवेचनम् ८०. ३८०.
दृष्टान्तं विनापि साध्यसिद्धिरतो न तदनुद्भावनं निग्रहस्थानम् ८०. ३८१.
वादस्य लक्षणम् ८१. ३८३.
निग्रहस्य स्वरूपम् ८१. ३८३.
वादस्य लक्षणम् ८१. ३८४.
शास्त्रान्तरं न निःश्रेयसनिबन्धनं किन्तु जैनशास्त्रमेव ८१. ३८६.

**इति द्वितीयः अनुमानप्रस्तावः ।**

प्रवचनस्य स्वरूपम् ८१. ३८७.
पुरुषातिशये यदि संशयः कथं सुगतः सर्वज्ञत्वेनेष्टः ? ८२. ३८८.
सुगतादयः सदोषा एव ८२. ३९३.
सुगतस्य कृपापि न संभाव्या ८२. ३९३.
मिथ्याभावनातो न तत्त्वज्ञानसमुत्पत्तिः ८२. ३९४.
अनादिवासनापि न संभाव्या ८२. ३९५.
आत्मदर्शनस्य सुघटत्वान्न नैरात्म्यं साधु ८३. ३९६.
सुगतस्य करुणया स्थितिरपि न संभाव्या ८३. ३९७.
वास्तविकसन्तानस्य मोक्षकथने आत्मन एव स नामान्तरेण कथितः स्यात् ८३. ३९८.
वेदोऽपि न मोक्षप्रतिपादकः ८३. ४००.
सार्वज्ञ्यज्ञाने संशयैकान्त अक्षादौ चञ्चले कथमाश्वासः ? ८३. ४०१.
आगमः पौरुषेय एव ८४. ४०५.
सर्वज्ञाभावसाधने स्व-सर्वानुपलम्भौ असिद्धानैकान्तिकौ ८४. ४०६.
विप्रकृष्टार्थग्राहि ज्ञानममि स्पष्टं भवति सत्यस्वप्नेक्षणिकादिज्ञानवत् ८४. ४०७.
आत्मनो ज्ञानस्वभावत्वेऽपि आवरणकर्मवशान्न सर्वे सर्वदर्शिनः ८४. ४०८.
आवरणविगमे तु सर्वार्थसाक्षात्कारिता भवत्येव ८४. ४१०.
निरावरणस्य केवलिनो न पुनः कर्मबन्धः ८४. ४११.
सर्वज्ञज्ञानस्य आगमपूर्वकत्वेऽपि नान्योन्याश्रयः ८५. ४१२.
ज्योतिर्ग्रहादिगतीनां फलोपदेशकत्वादपि सर्वसाक्षात्कारित्वसिद्धिः ८५. ४१४.
अनुमेयत्वात् हेतोरपि सर्वज्ञसिद्धिः ८५. ४१५.
न ग्रहादिगतिफलोपदेशः तत्साक्षात्कारित्वमन्तरेण केवलं वेदात् संभाव्यः ८५. ४१६.
अनादिसम्प्रदायादेव वेदस्य यथार्थत्वनिर्णये अन्धपरम्परा, म्लेच्छादिव्यवहारस्य च यथार्थत्वप्रसंगः ८५. ४१७.
वेदस्य अनादित्वे दोषप्रदर्शनम् ८६. ४१८.
शब्दमात्रस्य नित्यत्वे दोषप्रदर्शनम् ८६. ४२२.
पुद्गलोपादानकत्वेऽपि शब्दस्य सूक्ष्मत्वान्न तदुपादानोपलब्धिः ८६. ४२५.
स एवायं शब्द इति प्रत्यभिज्ञानं सादृश्यात् नत्वेकत्वात् ८६. ४२५
दर्शनस्य परार्थत्वादपि न नित्यः शब्दः ८७. ४२८
शब्दस्य प्रामाण्यं न नित्यत्वात् किन्तु तदर्थवेदिपुरुषपूर्वकत्वात् ८७. ४२९.
संकेतो हि व्यवहारानुसारेण बहुधा ८७. ४३०.
शब्दस्य न स्वतः सर्वार्थयोग्यता ८७. ४३१.
संकेतानुसारेणैव अर्थप्रत्यायकत्वं शब्दस्य ८७. ४३२.
सौगतमते न वर्णपदवाक्यव्यपदेशसंभवः ८८. ४३३.
जैनमते तु परिणामी शब्दः श्रोत्रगोचरः ८८. ४३४.
शब्दस्य अपौरुषेयत्वे दोषप्रदर्शनम् ८८. ४३६.
पौरुषेयोऽपि शब्दः सम्यग्ज्ञानाङ्कुशित एव सत्यार्थप्रतिपादकः ८८. ४३६.
सत्यस्य स्वरूपम् ८८. ४३७.
मोक्षमार्गविषयभूतानां जीवादितत्त्वानां स्वरूपनिरूपणम् ८८. ४३८.

आश्रवबन्धसंभवप्रकारः ८९. ४४२.
तत्त्वज्ञानात् कर्मसंवरनिर्जराप्रकारः ८९. ४४३.
दोषाणां स्वरूपम् ८९. ४४५.
नैरात्म्यभावनातो न किञ्चित्फलम् ८९. ४४५.
नैरात्म्यभावनाया न मार्गत्वं न च तत्र मैत्र्यादिसंभावना ८९. ४४६.
जैनमते तु सम्यग्दर्शनादिषु प्रमोदादेः संभवात् ८९. ४४७.
सुगतस्य न करुणादिसंभवः ८९. ४४८.
जैनमते मोक्षस्य स्वरूपम् ८९. ४४९.
एकान्तनित्यत्वेऽपि न मोक्षस्य संभावना ८९. ४५०.
सप्तभंगिस्वरूपनिरूपणम् ९०. ४५१.
सप्तभंगानां क्रमनिरूपणम् ९०. ४५२.
स्यात्पदप्रयोगसाफल्यप्रदर्शनम् ९०. ४५३.
प्रतीतार्थस्यापि स्यात्पदस्य प्रयोगः लोकव्यवहारानुसारेण कर्त्तव्यः ९०. ४५४.
स्यात्कारार्थे मन्दमतीन् प्रति- स्यात्पदप्रयोगः सफल एव ९० ४५६.
स्याद्वादे सशयादिदोषप्रसंगपरिहारः ९१. ४५८.
जैनागम एव प्रमाणम् ९१. ४६०.
सर्वज्ञत्वादिगुणाभावे न आगमप्रामाण्यसंभावना ९१. ४६२.
गुणाधीनमेव प्रवचनस्य प्रामाण्यम् ९१. ४६३.
प्रवचनस्य प्रमाण्ये सर्वज्ञत्वसंसिद्धिः ९१. ४६४.
ज्ञस्वभावस्यात्मनो ज्ञानवरणपरिक्षये सार्वज्ञ्यं समुत्पद्यते ९१. ४६६.
ज्योतिर्ज्ञानाद्युपदेशकत्वादपि सर्वज्ञत्वसिद्धिः ९२. ४६६.
शास्त्रप्रणयनं तद्विषयानुपदेशालिंगा- न्वयव्यतिरेकाविसंवादित्वविशेषण- विशिष्टमेव सर्वज्ञत्वप्रसाधकम् ९२. ४६७.
न सुगतादीनां शास्त्रप्रणेतृत्वम् ९२. ४६८.
शास्त्रमपि सर्वज्ञपूर्वकतया प्रमाणं न अपौरुषेयम् ९२. ४६८.
प्रत्यक्षपरोक्षरूपेण प्रमाणविभागः ९२. ४६९.
स्मरणप्रामाण्यप्रदर्शनम् ९२. ४७०.
तर्कस्य प्रामाण्यसमर्थनम् ९२. ४७१.
नैयायिकपरिकल्पितोपमानस्य लक्षणम् ९२. ४७२.
यद्युपमानस्य पृथक् प्रामाण्यं तदा अनेकधा प्रमाणानि स्युः ९३. ४७२.
स्मरणादिकं श्रुतज्ञानेऽन्तर्भूतम् ९३. ४७३.
सम्प्रदायाविच्छेदादागमस्य प्रामाण्यम् ९३. ४७४.
मतिज्ञानादीनां प्रत्यक्षपरोक्षतया प्रविभागः ९३. ४७४.
मतिज्ञानस्य प्रत्यक्षत्वं लोकव्यहारापेक्षया ९३. ४७४.
स्याद्वादः प्रमाणम् ९३. ४७५.
प्रमाणस्य साक्षात्परम्परया च फलनिरूपणम् ९३. ४७६.
नयानां विवरणं नयचक्रग्रन्थे द्रष्टव्यम् ९३. ४७७.
प्रवचनस्य प्रयोजनप्रदर्शनम् ९३. ४७८.
केवलज्ञानार्थमेव स्याद्वाद उपास्य इति केवलज्ञानस्वरूपनिरूपणम् ९४. ४७९.
शासनाराधनायाः फलनिरूपणम् ९४. ४८०.


---

## § ३. प्रमाणसंग्रहस्य विषयानुक्रमः[1]


मंगलाचरणम् ९७. १.
प्रत्यक्षपरोक्षरूपेण प्रमाणानां संग्रहः ९७. ४.
प्रत्यक्षस्य लक्षणम् ९७. ५.
प्रत्यक्षस्य त्रिधा विभागः ९७. ५.
श्रुतस्य प्रत्यक्षानुमानागमनिमित्तकतया त्रैविध्यम् ९७. ६.
अर्थानुकारिणो ज्ञानस्य न प्रामाण्यम् ९७. ९.
चक्षुरादिज्ञानस्य सामान्यविशेषात्म- कार्थविषयत्वम् ९७. १८.
ज्ञानं सदर्थनियतम् ९८. ९.
प्रमाणस्य तत्त्वार्थनिर्णयः फलम् ९८. ९.
अतीन्द्रियज्ञानाभावे न प्रवचनस्य प्रमाणता ९८. २५.
मुख्यप्रत्यक्षस्य लक्षणम् ९९. ११.
अर्थसंवादात् स्मृतिः प्रमाणम् ९९. १५.
प्रत्यभिज्ञापि प्रमाणम् ९९. २०.
तर्कस्य लक्षणम् १००. ५.
प्रत्यक्षानुपलम्भतः तर्कसमुद्भूतिः १००. ५.
प्रत्यक्षानुमानाभ्यां न व्याप्तिग्रहः १००. ९.
उत्पत्तिमतां न नित्यं निमित्तम् १००. १७.
अवयविनो वृत्तिविकल्पादिदोष- प्रदर्शनम् १००. २६.
कुतर्कस्य लक्षणम् १०१. ३.
विवक्षातो वाचोवृत्तिस्वीकारः कुतर्कः १०१. ४.
विज्ञानगुणदोषाभ्यां वाग्वृत्तिः गुणदोषवती भवति १०१. ७.
शरीरमपि न गुणदोषकारणम् १०१. ९.
दोषावरणयोरपि न वाग्घेतुता १०१. १०.
परोक्षेऽपि अविनाभावसिद्धिः १०१. १६.
तर्कस्य प्रामाण्यप्रसाधनम् १०१. १९.
'नाप्रत्यक्षमनुमानव्यतिरिक्तं मानम्' इत्यस्य खण्डनम् १०१. २४.
साध्यस्य लक्षणम् १०२. १.
साध्याभासस्य लक्षणम् १०२. २.


---

[1] विषयानुक्रमेऽस्मिन् स्थूलांकाः पृष्ठसंख्याबोधकाः सूक्ष्मांकाश्च पंक्तिसंख्यासूचका विज्ञेयाः ।

सदसदेकान्तयोः न साध्यत्वम् १०२. ५.
साधनस्य लक्षणम् १०२. ९.
नित्यसर्वगतस्वभावसामान्यस्य न साध्यत्वम् १०२. २०.
एकस्य चलाचलादिविरुद्धधर्माध्यासादनेकान्तात्मकता १०२. २५.
सामान्यविशेषात्मके वस्तुनि संशयादिदोषपरिहारः १०३. ४.
अभावस्य प्रमेयत्वं भावस्य च अप्रमेयत्वं नास्ति १०३. १९.
'एकं चित्रम्' इति धर्मकीर्त्तेः आक्षेपस्य परिहारः १०३. २८.
सति अविनाभावे त्रैरूप्यं निरर्थकम् १०४. ३.
कृतिकोदयादिहेतूनां त्रैरूप्याभावेऽपि गमकत्वम् १०४. ५.
कृतिकोदयादिषु न कालादीनां धर्मित्वम् १०४. ५.
सात्मकं जीवच्छरीरं प्राणादिमत्त्वादित्यस्यापि गमकत्वम् १०४. ६.
विधौ साध्ये उपलब्धयः १०४. १६.
स्वभावोपलब्धिः १०४. १९.
स्वभावकार्योपलब्धिः १०४. २१.
स्वभावकारणोपलब्धिः १०४. २३.
सहचरोपलब्धिः १०४. २५.
सहचरकार्योपलब्धिः १०४. २६.
सहचरकारणोपलब्धिः १०४. २८.
असद्व्यवहाराय अनुपलब्धयः १०५. १.
स्वभावानुपलब्धिः १०५. २.
कार्यानुपलब्धिः १०५. ४.
कारणानुपलब्धिः १०५. ५.
स्वभावसहचरानुपलब्धिः १०५. ८.
सहचरकार्यानुपलब्धिः १०५. ९.
सहचरकारणानुपलब्धिः १०५. ११.
सद्वृत्तिनिषेधाय विरुद्धोपलब्धयः १०५. १६.
स्वभावविरुद्धोपलब्धिः १०५. १७.
कार्यविरुद्धोपलब्धिः १०५. १९.
कारणविरुद्धोपलब्धिः १०५. २०
व्याप्यसिद्धिः व्यापकसाधिनी १०५. २०.
व्यापकानुपलब्धिः व्याप्याभावप्रसाधिका १०५. २५.
स्वभावविरुद्धव्याप्तोपलब्ध्योः व्यापकानुपलब्धावन्तर्भावः १०५. २७.
स्वभावविरुद्धकार्यानुपलब्ध्योः कार्यानुपलम्भेऽन्तर्भावः १०५. १८.
अन्तर्व्याप्त्या हि गमकत्वं न बहिर्दर्शनादर्शनाभ्याम् १०६. ५.
सर्वत्र न दृष्टान्तस्यावश्यकता १०६. १०.
सर्वथा विभ्रमवादो न युक्तः १०६. २५.
अप्रत्यक्षोऽपि आत्मा सिद्धयति १०७. ११.
सहचरहेतोः समर्थनम् १०७. १५.
सर्वथा नित्ये सत्त्वं हेतुर्विरुद्धः १०७. २१.
विरुद्धस्य लक्षणम् १०७. २३.
कौटस्थ्ये विक्रियाविरोधः १०८. ४.
अचलात्मनि प्राणादीनां सत्त्वं विरुद्धम् १०८. १९.
अचलात्मनि सन्निवेशादि विरुद्धम् १०८. २३.
अचलात्मनि चक्षुरादीनां सत्त्वं विरुद्धम् १०८. २७.
अचलात्मनि शब्दादीनां सत्त्वं विरुद्धम् १०८. ३०.
अचलात्मनि सुखादीनां सत्त्वं विरुद्धम् १०९. १.
सहोपलम्भनियमः विरुद्धः १०९. ३.
कर्त्तुरस्मरणादयः सन्दिग्धाः १०९. ६.
अनैकान्तिकभेदा निश्चितसन्दिग्धादयः १०९. १२.
वक्तृत्वादिति हेतुः अनैकान्तिकः १०९. १३.
असिद्धहेत्वाभासनिरूपणम् १०९. २१.
सहोपलम्भस्य खण्डनम् १०९. २५.
स्वसर्वोपलम्भयोः अनैकान्तिकासिद्धत्वम् ११०. ३.
अकिञ्चित्करहेत्वाभासनिरूपणम् ११०. ६.
अज्ञातस्य हेत्वाभासस्य निदर्शनम् ११०. ९.
सर्वथा नित्येऽर्थक्रियाऽभावसमर्थनम् ११०. १८.
विरुद्धाव्यभिचारिणो विरुद्धेऽन्तर्भावः १११. ५.
वादस्य लक्षणम् १११. १५.
सर्पदृष्टान्तेन भावस्य परिणामित्वप्रसाधनम् ११२. ११.
उत्पादादित्रयात्मकत्वसमर्थनम् ११२. १५.
उत्पादादिषु विनाशादिसमर्थनम् ११३. ५.
जयपराजयव्यवस्था ११३. ६.
जातेर्लक्षणम् ११३. २२.
अचलात्मनि सत्त्वादयः सिद्धसेन-देवनन्दि-समन्तभद्रमतेन असिद्ध-विरुद्ध-अनैकान्तिकात्मकाः ११३. २१.
स्वपररूपेण भावाभावात्मकत्वम् ११४. ६.
शून्यादीनां जाड्यहेतुत्वम् ११४. २२.
प्रतिज्ञाऽसाधनत्वादीनामह्लीकनिबन्धनत्वम् ११४. २६.
निष्कलप्रत्यक्षत्वादिकस्य पशुत्वहेतुता ११४. २६.
प्रेत्यभावादीनां विलोपे अलौकिकता ११४. २८.
तामसहेतुत्वम् आत्मविलोपस्य ११५. १.
प्राकृतहेतुत्वम् संस्कृतपदसाधुत्वविचारस्य ११५. ३.
प्रवचनस्य लक्षणम् ११६. ६.
पुरुषातिशयोऽज्ञेयश्चेत् कथं तत्र सन्देहः ११६. १८.
अपौरुषेयं शास्त्रं निरर्थकम् ११७. २.
सन्निकर्षान्न रूपज्ञानम् ११८. १.
श्रोत्रं नाप्राप्यकारि ११८. १६.
तत्त्वज्ञानचारित्रयोः मोक्षहेतुता ११९. १०
चेतनस्य कर्मबन्धसिद्धिः ११९. २०.
दोषप्रभवः संसारः ११९. २८.
मोहादिसम्बन्धादज्ञानादयः १२०. २.
पुद्गलद्रव्यमपि व्यावृत्त्यनुगमात्मकम् १२१. १८.
शरीरादिभ्यः चैतन्यं पृथक् १२१. २६.

सप्तभंगीस्वरूपम् १२२. १६.
शब्दार्थयोर्नित्यः सम्बन्धः १२४. ७.
संख्याकालकारकलिंगतः शब्देषु भेदः १२४. २०
आत्मज्ञानादिभेदानामानन्त्यं नयचक्रतो ज्ञेयम् १२५. २७.
नैगमादिनयसप्तकस्य स्वरूपम् १२६.
प्रमाणनयनिक्षेपाणां स्वरूपम् १२७. २.
ज्ञानं प्रमाणं न शब्दादि १२७. ४.
कपिलादिसिद्धान्तो नयः १२७· १७.


---



श्रीमद्भट्टाकलङ्कदेवविरचितम्

# [ अकलंकग्रन्थत्रयम् ]

---

स्वोपज्ञविवृतिसहितम्

# ॥ लघीयस्त्रयम् ॥




श्रीमद्भट्टाकलङ्कदेवविरचितम्

स्वोपज्ञविवृतिसहितम्

# ॥ लघीयस्त्रयम् ॥

## प्रमाणप्रवेशे प्रथमः प्रत्यक्षपरिच्छेदः।

[§ १. तत्र शास्त्रस्यादौ शास्त्रकारो निर्विघ्नेन शास्त्रपरिसमाप्त्यादिकं फलमभिलषन्निष्टदेवताविशेषं नमस्करोति—]

**धर्मतीर्थकरेभ्योऽस्तु स्याद्वादिभ्यो नमोनमः।**
**ऋषभादि-महावीरान्तेभ्यः स्वात्मोपलब्धये ॥१॥**

[§ २. स्वप्रमाणादिलक्षणवर्त्मनि कण्टकशुद्ध्यर्थं निराकुर्वन्नाह—] 5

**सन्तानेषु निरन्वयक्षणिकचित्तानामसत्स्वेव चेत्,**
**तत्त्वाहेतुफलात्मनां स्वपरसङ्कल्पेन बुद्धः स्वयम्।**
**सत्त्वार्थं व्यवतिष्ठते करुणया मिथ्याविकल्पात्मकः,**
**स्यान्नित्यत्ववदेव तत्र समये नार्थक्रिया वस्तुनः ॥२॥**

[§ ३. स्वमते प्रमाणादिलक्षणप्ररूपणार्थमिदमुपक्रमते······अक्षुण्णसकलशास्त्रार्थसङ्ग्रहसमर्थमादिश्लोकमाह—] 10

**प्रत्यक्षं विशदं ज्ञानं मुख्यसंव्यवहारतः।**
**परोक्षं शेषविज्ञानं प्रमाणे इति सङ्ग्रहः ॥३॥**

सन्निकर्षादेरज्ञानस्य प्रामाण्यमनुपपन्नम् अर्थान्तरवत्। नैवं 'ज्ञानम्' इत्येव प्रमाणम् अतिप्रसङ्गात्, संव्यवहारानुपयोगिनः संशयविपर्यासकारणस्य अकि- 15

---

१ वृषभा– न्यायकु०। २ नविज्ञान– ज०। ३–विपर्यय– न्यायकु०।

श्चितकरस्य च ज्ञानस्य भावाऽविरोधात्। § १) "*नहि तत्त्वज्ञानमित्येव यथार्थनिर्णयसाधनम्*" इत्यपरः; तेनापि तत्त्वनिर्णयं प्रति साधकतमस्य ज्ञानस्यैव प्रामाण्यं समर्थ्येत वस्तुबलायाततदर्थान्तिरस्यापि परम्परया तत्कारणतोपपत्तेः। तन्नाऽज्ञानस्य प्रमाणता अन्यत्रोपचारात्। ज्ञानस्यैव विशदनिर्भासिनः प्रत्यक्षत्वम्, इतरस्य परोक्षता ॥३॥

5 [§ ४. के पुनर्बुद्धेर्वैशद्याविशद्ये यदुपेतत्वेन प्रत्यक्षेतरयोर्भेदः स्यादिति चेदुच्यते–]

**अनुमानाद्यतिरेकेण विशेषप्रतिभासनम्।**
**तद्वैशद्यं मतं बुद्धेरवैशद्यमतः परम् ॥४॥**

तत्र सांव्यवहारिकम् इन्द्रियाऽनिन्द्रियप्रत्यक्षम्। मुख्यमतीन्द्रियज्ञानम्। तदस्ति सुनिश्चितासम्भवद्बाधकप्रमाणत्वात् सुखादिवत्। यावज्ज्ञेयव्यापिज्ञान-
10 रहितसकलपुरुषपरिषत्परिज्ञानस्य तदन्तरेणानुपपत्तेः। तदभावतत्त्वज्ञो न कश्चिदनुपलब्धेः खपुष्पवत्। ननु जैमिनिरन्यो वा तदभावतत्त्वज्ञः सत्त्वपुरुषत्ववक्तृत्वादेः रथ्यापुरुषवत्। पुरुषातिशयसम्भवे अतीन्द्रियार्थदर्शी किन्न स्यात्? अत्राऽनुपलम्भमप्रमाणयन् सर्वज्ञादिविशेषाभावे कुतः प्रमाणयेत् अभेदात्? साधकबाधकप्रमाणाभावात् तत्र संशीतिः इत्यनेन प्रत्युक्ता; बाधकस्यैवाऽसम्भवात्।
15 सर्वत्र बाधकाभावेतराभ्यां भावाभावव्यवहारसिद्धिः, तत्संशयादेव सन्देहः। तत एवानुभवप्रामाण्यव्यवस्थापनात् इत्यलमतिप्रसङ्गेन ॥४॥

[§ ५. ननु च इन्द्रियाऽनिन्द्रियप्रत्यक्षस्य वर्त्तमानमात्रपर्यवसितत्वेन हेयोपादेयाऽविषयत्वात् कथं संव्यवहारनियुक्तत्वमित्यारेकायामाह–]

**अक्षार्थयोगे सत्तालोकोऽर्थाकारविकल्पधीः।**
20 **अवग्रहो विशेषाकाङ्क्षेहाऽवायो विनिश्चयः ॥५॥**

विषयविषयिसन्निपातानन्तरमाद्यं ग्रहणम् अवग्रहः। विषयस्तावत् द्रव्यपर्यायात्मार्थः विषयिणो द्रव्य-भावेन्द्रियस्य। द्रव्येन्द्रियं पुद्गलात्मकम्। लब्ध्युपयोगौ भावेन्द्रियम्। * अर्थग्रहणशक्तिर्लब्धिः। उपयोगः पुनरर्थग्रहणव्यापारः। * अर्थग्रहणं योग्यतालक्षणम्। तदनन्तरभूतं सन्मात्रदर्शनं स्वविषयव्यवस्थापनविक-
25 ल्पमुत्तरपरिणामं प्रतिपद्यते अवग्रहः। पुनः अवगृहीतविशेषाकाङ्क्षणम् ईहा। तथेहितविशेषनिर्णयोऽवायः। कथञ्चिदभेदेऽपि परिणामविशेषाद्भेदः ॥५॥

[§ ६. अवायानन्तरं धारणामुक्त्वा चतुर्विधमतिज्ञानमुपसंहरन् कारिकार्धमाह–]

**धारणा स्मृतिहेतुस्तन्मतिज्ञानं चतुर्विधम्।**

---

१ कारिकेयं ज० प्रतौ नास्ति। २ तत्रा– ज०। ३ बाधकभावे– ज०। * एतदन्तर्गतः पाठो नास्ति ज०। ४ अवग्रहगृहीत– ई०।

स्मृतिहेतुर्धारणा संस्कार इति यावत्। ईहा-धारणयोरपि ज्ञानात्मकत्वमुन्नेयं तदुपयोगविशेषात्।

[§ ७. इदानीं स्वसंविदामपि बह्वादिभेदमवग्रहादिकम् अवग्रहादीनाञ्च पूर्वपूर्वस्य प्रमाणत्वे फलत्वमुत्तरोत्तरस्य दर्शयन्नाह—]

**बह्वाद्यवग्रहाद्यष्टचत्वारिंशत्स्वसंविदाम् ॥६॥** 5
**पूर्वपूर्वप्रमाणत्वं फलं स्यादुत्तरोत्तरम् ।**

परमार्थैकसंवित्तेर्वेद्यवेदकाकारयोः प्रमाणफलव्यवस्थायां क्षणभङ्गादेरपि प्रत्यक्षत्वं प्रसज्येत। ततः किम्? गृहीतग्रहणात् संवृतिवत्तदनुमानं [1]प्रमाणं न स्यात्। तदनयोः समारोपव्यवच्छेदाविशेषात् संवृतेरपि प्रमाणान्तरत्वं स्यात्। सर्वस्यैव निर्विकल्पकज्ञानस्य समारोपव्यवच्छेदाकाङ्क्षिणः प्रमाण्यं न स्यात् ततः संव्यवहाराभावात्। अर्थक्रियार्थी हि प्रमाणमप्रमाणं वाऽन्वेपते। रूपादिक्षणक्षयादिस्फुटप्रतिभासाविशेषात् खण्डशः प्रामाण्यं यदपेक्षं तदेव फलं युक्तम्। तत्त्वतं[2]स्तत्कृतो न भवति, भावे वा निर्णीतिः अखण्डशः कुतो न भवेत्? बहुबहुविधक्षिप्रानिसृताऽनुक्तध्रुवेतरविकल्पानामवग्रहादेः स्वभावभेदान्न विरु[3]द्ध्यते। प्रतिभासभेदेपि स्वभावभेदाभावकल्पनायां क्रमवृत्तिधर्माणामपि तथा भावात् कुतः क्रमः सुखदुःखादिभेदो वा परमार्थतः प्रतिष्ठापयेत् सहप्रतिभासवत्? तदयमेकमनेकाकारं क्षणिकज्ञानं कुतश्चित्प्रत्यासत्तेः प्रतिभासभेदानामुपयन् क्रमवर्तिनामपि तथैकत्वं प्रतिपत्तुमर्हति हर्षविषादादीनाम्, अतोऽनेकान्तसिद्धिः। प्रमाणफलयोः क्रम[4]भेदेऽपि तादात्म्यमभिन्नविषयत्वञ्च प्रत्येयम् ॥६॥

[5]इति भट्टाकलङ्कविरचिते [6]न्यायकुमुदचन्द्रोदये (? लघीयस्त्रये) प्रमाणप्रवेशः (शे) प्रथमः परिच्छेदः॥ 20



## प्रमाणप्रवेशे द्वितीयः प्रमेयपरिच्छेदः।



[§ ८. समीचीनश्च विषयः प्रमाणस्य यादृशो भवति तं दर्शयन् प्रकृतमर्थञ्चोपसंहरन्नाह—]

**तद्द्रव्यपर्यायात्मार्थो बहिरन्तश्च तत्त्वतः ॥७॥**

भेदाभेदैकान्तयोरनुपलब्धेः अर्थस्य सिद्धिरनेकान्तात्। नान्तर्बहिर्वा स्वल-

१ 'प्रमाणं' नास्ति ई०। २–तस्तत्ततो इत्यपि पाठः न्यायकु०। ३ विरुद्धचेत् ज०। ४ क्रमभावेऽपि न्यायकु०। ५ इति प्रत्यक्षप्रतिपादकः प्रथमः परिच्छेदः सम्पूर्णः। ई०। ६ ज०, ई० प्रत्योः सन्धिवाक्येषु क्वचित् न्यायकुमुदचन्द्रस्य न्यायकुमुदचन्द्रोदयस्य वोल्लेखः लघीयस्त्रयव्याख्याभूतस्य प्रभाचन्द्रकृतन्यायकुमुदचन्द्रस्य भ्रमादेव जातः। –सम्पा०।

क्षणं सामान्यलक्षणं वा परस्परानात्मकं प्रमेयं यथा मन्यते परैः; द्रव्यपर्यायात्मनोऽर्थस्य बुद्धौ प्रतिभासनात्। न केवलं साक्षात्करणमेकान्ते न संभवति; अपितु–

**अर्थक्रिया न युज्येत नित्यक्षणिकपक्षयोः।**
**क्रमाक्रमाभ्यां भावानां सा लक्षणतया मता ॥८॥**

5 'अर्थक्रियासमर्थं परमार्थसत्' अङ्गीकृत्य स्वपक्षे पुनरर्थक्रियां स्वयमेव निराकुर्वन् कथमनुन्मत्तः? स्वभूतिमात्रमर्थक्रियां विपक्षेऽपि कथं निरस्येत्, मिथ्याव्यवहारं वा? संवित्तेरभेदेऽपि विषयाकारस्यैव विषयसाधनत्वं नाकारान्तरस्य। ततः–

[§ ९. तस्माद् विषयाकारस्य विषयसाधनत्वात्–]

**नाभेदेऽपि विरुद्धयेत् विक्रिया विक्रियैव[1] वा।**

10 परमार्थैकत्वेऽपि मिथ्याव्यवहारभेदात् ज्ञानस्यानेकार्थक्रियाकारिणः प्रतिभासाः परमार्थसंवेदिनः तत्त्वं भेदाभेदात्मकं साधयन्ति।

[§ १०. एवं तावत् सौत्रान्तिकमतमनेकान्तनान्तरीयकं प्रदर्श्य साम्प्रतं योगाचारमतं तन्नान्तरीयकं प्रदर्शयन्नाह–]

**मिथ्येतरात्मकं दृश्यादृश्यभेदेतरात्मकम् ॥९॥**
15 **चित्तं सदसदात्मैकं तत्त्वं साधयति स्वतः।**

चित्रनिर्भासिनः तत्त्वमविभाग[2]विज्ञानस्य दृश्यं यदि क्रमेणापि सदसदात्मकं विवर्त्तेत ततः सिद्धं द्रव्यपर्यायात्मकम् उत्पादव्ययध्रौव्ययुक्तं वस्तुतत्त्वमन्तर्बहिश्च प्रमेयम्। एकान्तस्यानुपलब्धेः तदनेकान्तात्माऽर्थः इति ॥९॥

इति[3] श्रीभट्टाकलङ्कविरचिते न्यायकुमुदचन्द्रोदये (? लघीयस्त्रये) परपरिकल्पितद्रव्यखण्डनमने-
20 कान्तनयेन द्रव्यव्यवस्थापनं नाम द्वितीयः परिच्छेदः ॥



## प्रमाणप्रवेशे तृतीयः परोक्षपरिच्छेदः।



[§ ११. अथेदानीं परोक्षप्रमाणप्ररूपणायाह–]

**ज्ञानमाद्यं मतिः संज्ञा चिन्ता वा (चा) भिनिबोधिकम्[4] ॥१०॥**
**प्राङ्नामयोजनाच्छेषं श्रुतं शब्दानुयोजनात्।**

---

१ 'अविक्रियैव वा' इत्यपि पाठः न्यायकु०। २–गज्ञान– न्यायकु०। ३ इति न्यायकुमुदचन्द्रे (?) प्रमेयस्वरूपप्रतिपादकः द्वितीयः परिच्छेदः समाप्तः। ई०। ४–बोधकम् ई०। –बोधनम् मु० लघी०।

अविसंवादस्मृतेः फलस्य हेतुत्वात् प्रमाणं धारणा। स्मृतिः संज्ञायाः प्रत्यवमर्शस्य। संज्ञा चिन्तायाः तर्कस्य। चिन्ता अभिनिबोधस्य अनुमानादेः। प्राक् शब्दयोजनात् शेषं श्रुतज्ञानमनेकप्रभेदम् ॥१०॥

[§ १२. ननु व्याप्तिप्रतीत्यर्थं तर्कलक्षणप्रमाणाभ्युपगमोऽनुपपन्नः प्रत्यक्षतोऽनुमानतो वा तस्याः प्रतीतिसिद्धेः इत्याशङ्कां निराकुर्वन्नाह–] 5

अविकल्पधिया लिङ्गं न किञ्चित्सम्प्रतीयते ॥११॥
नानुमानादसिद्धत्वात् प्रमाणान्तरमाञ्जसम्।

नहि[1] प्रत्यक्षं 'यावान् कश्चिद्धूमः कालान्तरे देशान्तरे च पावकस्यैव कार्यं नार्थान्तरस्य' इतीयतो[2] व्यापारान् कर्त्तुं समर्थं सन्निहितविषयबलोत्पत्तेरविचारकत्वात्। नाप्यनुमानान्तरम्[3]; सर्वत्राऽविशेषात्। नहि साकल्येन लिङ्गस्य लिङ्गिना व्याप्तेरसिद्धौ[4] क्वचित् किञ्चिदनुमानं नाम। § २) "तत्राप्रत्यक्षमनुमानव्यतिरिक्तं प्रमाणम्" इत्ययुक्तम्; लिङ्गप्रतिपत्तेः प्रमाणान्तरत्वात् ॥११॥ 10

[§ १३. कीदृशं तदनुमानमित्याह–]

लिङ्गात्साध्याविनाभावाभिनिबोधैकलक्षणात् ॥१२॥
लिङ्गिधीरनुमानं तत्फलं हानादिबुद्धयः। 15

नहि तादात्म्यतदुत्पत्ती ज्ञातुं शक्येते विनाऽन्यथानुपपत्तिवितर्केण[5], ताभ्यां विनैव एकलक्षणसिद्धिः। नहि वृक्षादिः छायादेः स्वभावः कार्यं वा। नचात्र विसंवादोऽस्ति ॥१२॥

[§ १४. अत्रैवार्थे दृष्टान्तान्तरमाह–]

चन्द्रादेर्जलचन्द्रादिप्रतिपत्तिस्तथानुमा ॥१३॥ 20

नहि जलचन्द्रादेः चन्द्रादिः स्वभावः कार्यं वा ॥१३॥

[§ १५. अपरमपि कार्यादिभ्योऽर्थान्तरं हेतुमुपदर्शयति–]

भविष्यत्प्रतिपद्येत शकटं कृतिकोदयात्।
श्व आदित्य उदेतेति ग्रहणं वा भविष्यति ॥१४॥

तदेतद्भविष्यद्विषयमविसंवादकं ज्ञानं प्रतिबन्धसञ्ज्ञां प्रमाणसञ्ज्ञाञ्च प्रतिरुणद्धि ॥१४॥ 25

---

१ न प्रत्य– न्यायकु०। २–तियतो ज०। ३–नुमान्त– ई०। ४ व्याप्तिर– ज०। ५–पत्तितर्केण न्यायकु०। –पत्तिवित– ज०।

[§ १६. अथेदानीम् 'दृश्यानुपलब्धिरेव गमिका नान्या संशयहेतुत्वात्' इति नियमं निराकुर्वन्नाह–]

**अदृश्यपरचित्तादेरभावं लौकिका विदुः।**
**तदाकारविकारादेरन्यथानुपपत्तितः ॥१५॥**

5 अदृश्यानुपलब्धेः संशयैकान्ते न केवलं परचित्ताभावो न सिद्ध्यति अपि तु स्वचित्तभावश्च; तदनंशतत्त्वस्य अदृश्यात्मकत्वात्। तथा च कुतः परमार्थसतः क्षणभङ्गसिद्धिः? तद्विपरीतस्य अभेदलक्षणस्यैव स्यात् ॥१५॥

[§ १७. ननु चाभेदलक्षणतत्त्वस्य सविकल्पकप्रत्यक्षेण सर्वात्मना प्रतिपन्नत्वात् किं तत्र क्षणभङ्गाद्यनुमानेन? इत्याशङ्कापनोदार्थमाह–]

10 **वीक्ष्याणुपारिमाण्डल्यक्षणभङ्गाद्यवीक्षणम्।**
**स्वसंविद्विषयाकारविवेकानुपलम्भवत् ॥१६॥**

स्थूलस्यैकस्य[1] दृश्यात्मन एव पूर्वापरकोट्योरनुपलम्भात् अभावसिद्धेरनित्यत्वं बुद्धेरिव वेद्यवेदकाकार[2]भेदस्य परमार्थसत्त्वम्, न पुनः परिमण्डलादेर्विज्ञाना ऽनंशतत्त्ववत्। नापि क्षणिकपरिमण्डलादेरविभागज्ञानतत्त्वस्य वा जातुचित्स्वयमुपलब्धिः
15 तथैवाऽप्रतिभासनात्। तत्कथञ्चित् तत्स्वभावप्रतिभासे अनेकान्तसिद्धिः ॥१६॥

[§ १८. एवं परस्य अनुपलब्धिं निराकृत्य अधुना स्वभावादिहेतुं निराकुर्वन्नाह–]

**अनंशं बहिरन्तश्च प्रत्यक्षं तदभासनात्।**
**कस्तत्स्वभावो हेतुः स्यात् किं तत्कार्यं यतोऽनुमा ॥१७॥**

साक्षात्स्वभावमप्रदर्शयतो निरंशतत्त्वस्यानुमितौ स्वभावहेतोरसम्भवः स्वभा-
20 वविप्रकर्षात्। तत एव कार्यहेतोः; कार्यकारणयोः सर्वत्रानुपलब्धेः। न चात्र प्रत्यक्षानुपलम्भसाधनः प्रभवः कार्यव्यतिरेकोपलक्षिता वा कारणशक्तिः, तदङ्गीकरणं प्रमाणान्तरमन्तरेणानुपपन्नम्। स्वयमुपलब्धस्य प्रागूर्ध्वं चानुपब्धेः कृतकत्वादनित्यत्वं सिद्ध्येन्नान्यथा ॥१७॥

[§ १९. यतो विकल्पबुद्धौ सिद्धायां तत्कल्पितोऽखिलोऽयं व्यवहारः स्यात्, न च
25 तत्सिद्धिः स्वतः परतो वा घटते इत्यावेदयति–]

**धीर्विकल्पाविकल्पात्मा बहिरन्तश्च किं पुनः।**
**निश्चयात्मा स्वतः सिद्ध्येत् परतोप्यनवस्थितेः ॥१८॥**

सर्वविज्ञानानां स्वसंवेदनं प्रत्यक्षमविकल्पं[4] यदि; निश्चयस्यापि कस्यचित्

---

१–द्विपरी– ज०। २–स्यादृश्या– ज०। ३–रप्रभेद– न्यायकु०। ४–कल्पकं ई०।

स्वत एवाऽनिश्चयात्। निश्चयान्तरपरिकल्पनायामनवस्थानात् कुतः तत्संव्यवहार-
सिद्धिः? ततः स्वार्थेऽपि कथञ्चिदभिलापसंसर्गयोग्यायोग्यविनिर्भासैकज्ञानं प्रति-
पत्तव्यं स्वरूपवत् ॥१८॥

[§ २०. एवं परं प्रति तर्कादिकं प्रमाणान्तरं प्रतिपाद्य इदानीमुपमानस्य प्रमाणान्तर-
त्वनियमं विधुरयन्नाह–]		5

उपमानं प्रसिद्धार्थसाधर्म्यात् साध्यसाधनम्।
तद्वैधर्म्यात् प्रमाणं किं स्यात् संज्ञिप्रतिपादनम् ॥१९॥

प्रसिद्धार्थसाधर्म्यमन्यथानुपपन्नत्वेन निर्णीतश्चेत् लिङ्गमेव, ततः प्रतिपत्तिर-
न्यथा न युज्यते[1]। प्रत्यक्षेऽर्थे संज्ञासंज्ञिसम्बन्धप्रतिपत्तेः प्रमाणान्तरत्वे वृक्षोऽयमिति
ज्ञानं वृक्षदर्शिनः प्रमाणान्तरम् गवयोऽयमिति यथा गवयदर्शिनः, प्रसिद्धार्थसाध-		10
र्म्यात् साध्यसिद्धेरभावात् गौरिव गवयः इति श्रुत्वा गवयदर्शिनः तन्नामप्रतिपत्ति-
वत्। प्रत्यक्षेषु इतरेषु तिर्यक्षु[2] तस्यैव पुनरगवयनिश्चयः किन्नाम प्रमाणम्? हानो-
पादानोपेक्षाप्रतिपत्ति[3]फलं नाप्रमाणं भवितुमर्हति ॥१९॥

[§ २१ तथा अपरमपि परस्य अनिष्टं पूमाणं दर्शयन्नाह–]

प्रत्यक्षार्थान्तरापेक्षा सम्बन्धप्रतिपद्यतः।		15
तत्प्रमाणं न चेत्सर्वमुपमानं कुतस्तथा ॥२०॥

आगमाहितसंस्कारस्य तदर्थदर्शिनः तन्नामप्रतिपत्तिः साकल्येन प्रमाणम-
प्रमाणं वा न पुनरुपमानमेव। यथा एतस्मात्पूर्वं पश्चिममुत्तरं दक्षिणं वा ग्रामधानकमे-
तन्नामक[4]मित्याहितसंस्कारस्य पुनस्तद्दर्शिनः तन्नामप्रतिपत्तिः। कश्चायं निश्चयः
संज्ञासंज्ञिसम्प्रतिपत्ति[5]साधनमेव समक्षेऽर्थे प्रमाणान्तरं न पुनः सङ्ख्यादिप्रतिपत्ति-		20
साधनमिति? ॥२०॥

[§ २२. एतदेव दर्शयन्नाह–]

इदमल्पं महद् दूरमासन्नं प्रांशु नेति वा।
व्यपेक्षातः समक्षेऽर्थे विकल्पः साधनान्तरम् ॥२१॥

दृष्टेष्वर्थेषु परस्पर[6]व्यपेक्षालक्षणम् अल्पमहत्त्वादि[7]ज्ञानम् अधरोत्तरादिज्ञानं		25
द्वित्वादिसङ्ख्याज्ञानम् अन्यच्च प्रमाणम्, अविसम्वादकत्वात् उपमानवत्। अर्थाप-

१ युज्येत ज०। २ 'तिर्यक्षु' नास्ति ई०। ३–त्तिप्रमाणं ई०। ४–कं ये तन्नाम–ई०। ५ संज्ञा-
सम्प्रति– ज०। ६–रव्य–ई०। ७ अल्पबहुत्वादि–ई०।

चिरनुमानात् †प्रमाणान्तरं नवेति किन्नश्चिन्तया सर्वस्य परोक्षेऽन्तर्भावात्†। तत्स-मञ्जसं प्रत्यक्षं परोक्षं चेति द्वे एव प्रमाणे अन्यथा तत्सङ्ख्यानवस्थानात् ॥२१॥

इति श्रीमद्भट्टाकलङ्कविरचिते न्यायकुमुदचन्द्रोदये (? लघीयस्त्रये) परपरिकल्पितानु-मानादिखण्डने स्वमतप्रणीतप्रमाणद्वयव्यवस्थापने तृतीयः परिच्छेदः ॥



5 # प्रमाणप्रवेशे चतुर्थः आगमपरिच्छेदः ।



[§२३. अथ प्रमाणाभासत्वेन प्रसिद्धं विज्ञानं कथञ्चिदेव तदाभासं न सर्वथेति प्रदर्शयन्नाह–]

**प्रत्यक्षाभं कथञ्चित्स्यात् प्रमाणं तैमिरादिकम् ।**
**यद्यथैवाविसंवादि प्रमाणं तत्तथा मतम् ॥२२॥**

10 तिमिराद्युपप्लवज्ञानं चन्द्रादावविसंवादकं प्रमाणम् यथा तत्सङ्ख्यादौ विसम्वा-दकत्वादप्रमाणं प्रमाणेतरव्यवस्थायाः तल्लक्षणत्वात् । नहि ज्ञानं यदप्यनुकरोति तत्र प्रमाणमेव समारोपव्यवच्छेदाकाङ्क्षणात् । कथमन्यथा दृष्टे प्रमाणान्तरवृत्तिः कृतस्य करणायोगात्? तदेकान्तहानेः कथञ्चित्करणानिष्टेः । तदस्य विसंवादोप्य-वस्तुनिर्भासात् चन्द्रादिवस्तुनिर्भासानाम् अविसम्वादकत्वात् ॥२२॥

15 [§२४. साम्प्रतं कल्पनापदेन यत्परेण तदाभासमुक्तं तदपि प्रत्यक्षं साधयन्नाह–]

**स्वसंवेद्यं विकल्पानां विशदार्थावभासनम् ।**
**संहृताशेषचिन्तायां सविकल्पावभासनात् ॥२३॥**

सर्वतः संहृत्य चिन्तां स्तिमितान्तरात्मना स्थितोऽपिचक्षुषा रूपं संस्थानात्मकं स्थूलात्मकमेकं सूक्ष्मानेकस्वभावं पश्यति न पुनः असाधारणैकान्तं स्वलक्षणम् । 20 प्रतिसंहारव्युत्थितचित्तस्य तथैवाऽस्मरणात् । तस्मादविशदमेव अविकल्पकं प्रत्य-क्षाभम् । न विशदेतरविकल्पयोः विषयभेदैकान्तः प्रत्यासन्नेतरार्थप्रत्यक्षाणाम् एकार्थविषयतोपपत्तेः ॥२३॥

[§२५. न हीमाः कल्पना अप्रतिसंविदिता एवोदयन्ते व्ययन्ते च यतः सत्योऽप्यनु-पलक्षिताः स्युरिति । तद्दूषयन्नाह–]

---

†† एतदन्तर्गतः पाठो नास्ति ई० । १ इति न्यायकुमुदचन्द्रे (?) परोक्षप्रमाणसंख्यास्वरूपप्रति-पादकः तृतीयोऽन्तर्भूतः परिच्छेदः ॥छ॥ ई० । २–हारव्यु– ई० ।

**प्रतिसंविदितोत्पत्तिव्ययाः सत्योपि कल्पनाः ।**
**प्रत्यक्षेषु न लक्ष्येरंस्तत्स्वलक्षणभेदवत् ॥२४॥**

सदृशापरापरोत्पत्तिविप्रलम्भात् तद्विशेषादर्शिनोऽनवधारणम् असमीक्षिताभिधानम्; सर्वथा तत्सादृश्यानिष्टेः। प्रतिसंहारैकान्तः संभवति न वेति चिन्त्यमेतत्। कथञ्च प्रत्यक्षबुद्धयः सर्वथाऽविकल्पाः पुनर्विकल्पेरन्? ॥२४॥ 5

[§ २६. ततः स्थितमर्थमुपदर्शयन्नाह–]

**अक्षधीः स्मृतिसंज्ञाभिश्चिन्तयाऽऽभिनिबोधिकैः ।**
**व्यवहाराविसंवादस्तदाभासस्ततोऽन्यथा ॥२५॥**

प्रत्यक्षस्मृतिप्रत्यभिज्ञोहानुमानादिभिः अविसंवादसिद्धेः अर्थेषु तत्प्रामाण्यम्, अन्यथा तदाभासव्यवस्था। तथैव श्रुतज्ञानतदाभासव्यवस्था ॥२५॥ 10

[§ २७. ननु श्रुतज्ञानं प्रमाणमेव न भवति तत्कथं तद्व्यवस्था इत्याशङ्क्याह–]

**प्रमाणं श्रुतमर्थेषु सिद्धं द्वीपान्तरादिषु ।**
**अनाश्वासं न कुर्वीरन् क्वचित्तद्व्यभिचारतः ॥२६॥**

श्रुतज्ञानं वक्त्रभिप्रायादर्थान्तरेऽपि प्रमाणम्। कथमन्यथा द्वीपदेशनदीपर्वतादिकमदृष्टस्वभावकार्यं दिग्विभागेन देशान्तरस्थं प्रतिपत्तुमर्हति निरारेकमविसंवादं च[1] ॥२६॥ 15

[§ २८. ननु चार्थाभावेऽपि श्रुतेः प्रायः प्रवृत्तिदर्शनान्न क्वचिदप्यसौ प्रमाणमित्याशङ्क्याह–]

**प्रायः श्रुतेर्विसंवादात् प्रतिबन्धमपश्यताम् ।**
**सर्वत्र चेदनाश्वासः सोऽक्षलिङ्गधियां समः ॥२७॥** 20

नहि इन्द्रियज्ञानम् अभ्रान्तमव्यभिचारीति वा विशेषणमन्तरेण प्रमाणम् अतिप्रसङ्गात्। तथाविशेषणे श्रुतज्ञाने कोऽपरितोषः? यथा कृतिकादेः शकटादिज्ञानं स्वभावप्रतिबन्धमन्तरेण तथैवादृष्टप्रतिबन्धार्था[2]भिधा[3]नं ज्ञानमविसंवादकम्। नहि दृष्टेऽनुपपन्नं नाम। क्वचिद् व्यभिचारे साकल्येनाऽनाश्वासे वक्त्रभिप्रायेऽपि वाचः कथमनाश्वासो न स्यात् तत्रापि व्यभिचारसम्भवात्? तथाऽनिच्छतः श्रु[4]तिकल्पनादुष्टादेः उच्चारणात् ॥२७॥ 25

[§ २९. किञ्च–]

**आप्तोक्तेर्हेतुवादाच बहिरर्थाविनिश्चये ।**
**सत्येतरव्यवस्था का साधनेतरता कुतः? ॥२८॥**

---

१ 'च' नास्ति ई०, ज०। २–र्थभि– ज०। ३–धानमवि–ई०। ४ श्रत– ई०।

नहि पुरुषार्थाभिसन्धयः सर्वे[1] अर्थान् व्यभिचरन्ति, अन्यथा वागर्थव्यभिचारैकान्तसम्भवात् । वाचोऽभिप्रायविसंवादे कुतस्तदनुमानम् ? सुगतेतरयोः आप्तेतरव्यवस्थां कुतश्चित् साधनासाधनाङ्गव्यवस्थां वा स्वयमुपजीवन् (§ ३ ) "वक्तुरभिप्रेतं तु वाचः सूचयन्त्यविशेषेण नार्थतत्त्वमपि" इति कथमविक्लवः ? ॥२८॥

5 [ § ३० अत्राह सौगतः--वक्तुरभिप्रायेऽपि यदि वचनस्य प्रामाण्यं नास्ति, मा भूत्, किन्नष्टं प्रमाणद्वयवादिनः ? व्यवहारिजनानुरोधादेव तत्र तस्य प्रामाण्याभ्युपगमात् इत्याशङ्क्याह--]

**पुंसश्चित्राभिसन्धेश्चेद् वागर्थव्यभिचारिणी ।**
**कार्यं[2] दृष्टं विजातीयात् शक्यं कारणभेदि किम् ॥२९॥**

श्रुतेर्बहुलं बहिरर्थाविसंवादेऽपि तदर्थप्रतिबन्धासिद्धेः वक्त्रभिप्रायानुविधा-
10 यिन्याः सर्वत्र तदर्थानाश्वासः इति चेत्; उक्तमत्र 'तादात्म्यतदुत्पत्तिभ्यां विनापि परोक्षार्थप्रतिपत्तेरविसंवादः' इति। अपि च वृक्षोऽयं शिंशपात्वात् अग्निरत्र धूमादिति वा कथमाश्वासः क्वचिल्लताचूतादेरुपलब्धेः शिंशपायाः स्वयमवृक्षत्वेप्यविरोधात् ? काष्ठजन्मनो मण्यादिसामग्रीप्रभवस्य अशनिजन्मनः तदर्थान्तरजन्मनश्च साकल्येन अग्निस्वभावाविरोधे पुनः 'अग्निजन्मैव धूमो नार्थान्तरजन्मा' इति कुतोऽयं नियमः ?
15 यतः कार्यहेतोरव्यभिचारात् धूमादग्निरत्र इत्याश्वासः । कस्यचिदन्यथानुपपत्त्या परोक्षार्थप्रतिपत्तौ श्रुतज्ञानस्य स्वयमदृष्टतादात्म्यतदुत्पत्तेः क्वचिदविसम्वादस्य अन्यथानुपपत्तेः सिद्धं प्रामाण्यमिति ॥२९॥

इति श्रीमद्भट्टाकलङ्कविरचिते न्यायकुमुदचन्द्रे (? लघीयस्त्रये ) परोक्तागमखण्डने स्वप्रणीतागमस्थापने चतुर्थः परिच्छेदः ॥

20 एवमन्तर्भूतप्रत्यक्षादिपरिच्छेदचतुष्टयः प्रमाणप्रवेशः परिच्छेदः समाप्तः[3] । न्यायकु० ।



## २. द्वितीयो नयप्रवेशः ।



[ § ३१. अथ प्रमाणं परीक्ष्येदानीं नयपरीक्षार्थमुपक्रमते-- ]

**भेदाभेदात्मके ज्ञेये भेदाभेदाभिसन्धयः ।**
**ये[4] तेऽपेक्षाऽनपेक्षाभ्यां लक्ष्यन्ते नयदुर्नयाः ॥३०॥**

25 द्रव्यपर्यायात्मकमुत्पादव्ययध्रौव्ययुक्तं सत् प्रमेयं वस्तुतत्त्वम्, तत्रैव कथञ्चित् प्रमाणतदाभासयोर्भेदात् । नयो ज्ञातुरभिप्रायः । स द्रव्यार्थिकः, पर्याया-

---

१ सर्वर्थान् ज० । २ कार्यदृष्टं ई० । ३ प्रमाणप्रवेश (शः) प्रथमः परिच्छेदः समाप्तः । ई० । ४ एते मु० लघी० ।

र्थिकश्च । द्रवति द्रोष्यति अदुद्रवत् इति द्रव्यम्, तदेवार्थोऽस्ति यस्य सो द्रव्यार्थिकः । सोऽभेदाश्रयः ॥३०॥

[ § ३२. ननु सकलभावानां देशकालाकारैरत्यन्तभेदात् नाभेदो नाम, अतः कथमसौ अभेदाश्रयः स्यादित्यारेकापनोदार्थमाह– ]

**जीवाजीवप्रभेदा यदन्तर्लीनास्तदस्ति सत् ।** 5
**एकं यथा स्वनिर्भासि ज्ञानं जीवः स्वपर्ययैः ॥३१॥**

यथैव ज्ञानस्य आत्मनिभा (निर्भा) सभेदा नैकत्वं बाधन्ते जीवस्य अजीवस्य वा कस्यचित् स्वगुणपर्यायाः, तथैव सत्त्वस्य भेदा जीवाजीवादयः । तदेवम्—

[ § ३३. तस्मिन् सत्त्वे एवमुक्तप्रकारेण जीवाजीवात्मके स्थिते सति– ]

**शुद्धं द्रव्यमभिप्रैति सङ्ग्रहस्तदभेदतः ।** 10
**भेदानां नाऽसदात्मैकोऽप्यस्ति भेदो विरोधतः ॥३२॥**

सर्वमेकं सदविशेषादिति सङ्ग्रहः । सतां च स्वभावानां भावैकत्वाबाधनात् । नहि कश्चिदसदात्मा भेदोऽस्ति विप्रतिषेधात् । नहि किञ्चिज्ज्ञानं सद्रूपं द्रव्यमनवबुद्ध्य भेदं गृह्णाति नाम ॥३२॥

[ § ३४. अत्राह सौगतः–यदुक्तम्–'यथा ज्ञानस्य आत्मनिर्भासभेदा नैकत्वं बाधन्ते' इति; 15 तदयुक्तम्; निरंशैकज्ञानोपगमात्.... । पुरुषाद्वैतवाद्यपि आह–निस्तरङ्गं पुरुषमात्रं तत्त्वं जीवाजीवप्रभेदः पुनरुपप्लवः, ततो 'जीवस्याऽजीवस्य वा' इत्याद्यप्ययुक्तमित्याशङ्क्याह– ]

**प्रत्यक्षं बहिरन्तश्च भेदाज्ञानं सदात्मना ।**
**द्रव्यं स्वलक्षणं शंसेद्भेदात्सामान्यलक्षणम् ॥३३॥**

स्वार्थभेदानवबोधेऽपि भ्रान्तं ज्ञानं सर्वं सद्रूपेण प्रत्यक्षं द्रव्यं स्वलक्षणं 20 विद्यात्, अन्यथा भ्रान्तेरभावप्रसङ्गात् ॥३३॥

[ § ३५. ननु प्रतिक्षणविलक्षणज्ञानादिक्षणव्यतिरिक्तस्य जीवादिद्रव्यस्यासंभवात्कथं 'द्रव्यं शंसेत्' इत्याद्युक्तं शोभेत ? इत्याशङ्क्याह– ]

**सदसत्स्वार्थनिर्भासैः सहक्रमविवर्त्तिभिः ।**
**दृश्यादृश्यैर्विभात्येकं भेदैः स्वयमभेदकैः ॥३४॥** 25

यथैकं क्षणिकं ज्ञानं सद्भिरसद्भिर्वा प्रतिभासभेदैः स्वयमभेदकैरिष्टं तथैकं द्रव्यं सहक्रमभाविभिः स्वयमभेदकैः भेदैः दृश्यैरदृश्यैश्च अनादिनिधनमवगन्तव्यम् । बहिरिव ज्ञानपरमाणुसञ्चये पुनः अन्योन्यानात्मकत्वे सर्वथाऽसङ्क्रमव्यवस्थायामेकस्थूलनिर्भासविरोधात् ॥३४॥

---

१ अद्रवत् ज० । २ जीवादयः ज० ।

[§ ३६. एवं प्रतिभासबलेन स्वपरमतविधिप्रतिषेधावभिधाय साम्प्रतमर्थक्रियाकारित्वबलेन तौ प्रतिपादयितुकामः प्रथमं क्षणिकैकान्ते अर्थक्रियां निराकुर्वन्नाह– ]

**लक्षणं[1] क्षणिकैकान्ते नार्थस्यार्थक्रिया सति ।**
**कारणे कार्यभावश्चेत् कार्यकारणलक्षणम् ॥३५॥**

5 सह क्रमेण वा अर्थक्रियाम् अक्षणिकस्य निराचिकीर्षुः कथञ्चित्क्षणिके अर्थक्रियां साधयेत्, अन्यथा तल्लक्षणं सत्त्वं ततो व्यावर्तेत । नच क्षणिकानामनिश्चयात्मनां भावानां प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः सिद्ध्येत् विप्रकृष्टाऽर्थान्तरवत् । 'यस्मिन् सत्येव यद्भावः तत्तस्य कार्यम् इतरत् कारणम्' इति लक्षणं[2] क्षणभङ्गे न सम्भवत्येव कार्यकारणयोः सहभावापत्तेः; अन्यथा क्षणभङ्गभङ्ग-
10 प्रसङ्गात् ॥३५॥

[§ ३७. ननु यस्मिन्निति सप्तमी कारणभावे कार्यभावं सूचयति, स च पूर्वमेव स्वसत्ताक्षणे कारणे सति उत्तरक्षणे कार्यभावो न विरुध्यते, यथा गोषु दुह्यमानासु गतः दुग्धासु आगत इति । समसमयभावित्वे चानयोः कार्यकारणभावविरोधात् सव्येतरगोविषाणवत् इत्यारेकापनोदर्थमाह–]

**कार्योत्पत्तिर्विरुद्धा चेत् स्वयं कारणसत्तया ।**
15 **युज्येत क्षणिकेऽर्थेऽर्थक्रियासम्भवसाधनम् ॥३६॥**

नहि कार्योत्पत्तिः[3] कारणस्याभावं प्रतीक्षते, यतः तदर्थक्रिया अक्षणिकत्वे विरुद्ध्येत । निष्कारणस्य अन्यानपेक्षया देशकालनियमायोगात् सर्वत्र सर्वदा सर्वथैव भावानुषङ्गात् । तदयं भावाऽभावयोः कार्यकारणतां लक्षयेत् सर्वथा भावस्यैव वा । स्वलक्षणस्य क्वचित् प्रत्यक्षानुपलम्भाऽसिद्धेः कुतः कार्यव्यतिरेकोपलक्षणं
20 कारणशङ्केः[4] ? ॥३६॥

[§ ३८. कार्यस्य देशवत् कालेऽपि असत एव कारणादेव उदयोपगमात्, कथमन्यथा जाग्रद्विज्ञानात् प्रबोधः भाविमरणादेर्वा अरिष्टादिकमित्याशङ्क्याह– ]

**यथैकं भिन्नदेशार्थान् कुर्याद्व्याप्नोति वा सकृत् ।**
**तथैकं भिन्नकालार्थान् कुर्याद्व्याप्नोति वा क्रमात् ॥३७॥**

25 यथा क्षणिकं स्वलक्षणं नानादिग्देशभावीनि कार्याणि स्थानसङ्करव्यतिकरव्यतिरेकेण करोति तत्करणैकस्वभावत्वात् । नहि सामग्रीभेदात् कार्यभेदेऽपि तत्कारणस्वभावभेदः । तथैकमक्षणिकं कारणं यद्यदोत्पित्सु कार्यं तत्तदैव करोति तत्करणैकस्वभावत्वात् । सर्वदा कार्यकालानतिक्रमेण कारणसामर्थ्यात्[5] तदात्मकमेकमेव इत्यविरुद्धम् । यथा विज्ञानं स्वनिर्भासभेदान् गुणी गुणान् अवयवी अव-

१ कारिकेयं मुद्रितलघीस्त्रये नास्ति । २ लक्षणभङ्गे ज० । ३ कार्यस्योत्प- ई० । ४ कारणसिद्धेः ई० । ५ करण- ई० ।

यवान् व्याप्नोति सकृदपि तदात्मकत्वात् तथैव द्रव्यं स्वपर्यायभेदान् स्वयमभेद-
कर्त्वात्तेषां स्वभावानामिति । एवम्–

[§ ३९. तत्र परसङ्ग्रहं प्रदर्शयितुमाह– ]

सङ्ग्रहः सर्वभेदैक्यमभिप्रैति सदात्मना ।
ब्रह्मवादस्तदाभासः स्वार्थभेदनिराकृतेः ॥३८॥ 5

नहि कश्चिदसदात्मा भेदोऽस्ति विरोधात् । यद्यदात्मकं तत्तदेव यथा स्वनि-
र्भासभेदात्मकं ज्ञानम्, तस्मात्सदात्मनो भेदाः सन्मात्रमेव नान्यदिति सङ्ग्रहः तत्प्रा-
धान्यान्न तु भेदप्रतिक्षेपात् । स्वपर्यायभेदानपेक्षया तत्प्रतिरूपकत्वं ब्रह्मवादवत् ॥३८॥

[§ ४०. अधुना नैगमतदाभासप्ररूपणार्थमाह– ]

अन्योन्यगुणभूतैकभेदाभेदप्ररूपणात् । 10
नैगमोऽर्थान्तरत्वोक्तौ नैगमाभास इष्यते ॥३९॥

स्वलक्षणभेदाऽभेदयोरन्यतरस्य प्ररूपणायाम् इतरो गुणः स्यात् इति नैगमः ।
यथा जीवस्वरूपनिरूपणायां गुणाः सुखदुःखादयः, तत्प्ररूपणायां चात्मा । तद-
र्थान्तरताभिसन्धिः नैगमाभासः । कथम् ? गुणगुणिनाम् अवयवावयविनां क्रिया-
कारकाणां जातितद्वताञ्च मिथोऽर्थान्तरत्वे सर्वथा वृत्तिविरोधात् । एकमनेकत्र 15
वर्त्तमानं प्रत्येकं सर्वात्मना यदि स्यात्; तदेकमित्येवं न स्यात् । यदि पुनः एकदे-
शेन वर्त्तेत; तदेकदेशेष्वपि तथैव प्रसङ्गात् क्व किं वर्त्तेत ? ॥३९॥

[§ ४१. एवं गुणगुण्यादीनां भेदैकान्तं निराकृत्य सत्तातद्वतां तं निराकर्त्तुमाह– ]

स्वतोऽर्थाः सन्तु सत्तावत् सत्तया किं सदात्मनाम् ।
असदात्मसु नैषा स्यात् सर्वथाऽतिप्रसङ्गतः ॥४०॥ 20

यथा सदर्थान्तराणि स्वतः सन्ति तथैव द्रव्यगुणकर्माण्येव सन्तु किं तत्र
सत्तासमवायेन ? स्वतः सतां तद्वैयर्थ्यात्, असतां चातिप्रसङ्गात् । तदेवमवान्तर-
जातिष्वपि योज्यम् । गोत्वादेः सर्वगतत्वे तत्प्रत्ययसाङ्कर्यम्, अन्यथा निष्क्रियस्य
अर्थोत्पित्सुदेशमव्याप्नुवतः अनंशस्य अनेकत्र कदाचित्कवर्त्तनमयुक्तम् । गुणगु-
ण्यादीनामन्योन्यात्मकत्वे न किञ्चिद्विरुद्धमित्यलं प्रसङ्गेन । गुणानां वृत्तं चलं 25
सत्त्वरजस्तमसां सुखज्ञानादिकं चैतन्यं पुरुषस्य स्वरूपमचलमित्येतदपि तादृगेव;
तदर्थान्तरताऽसिद्धेः, अतिप्रसङ्गश्चैवं तदभेदे विरोधाभावात् । गुणानां दृश्यादृ-
श्यात्मकत्वे पुंसामेव तदात्मकत्वं युक्तं कृतं गुणकल्पनया ॥४०॥

[§ ४२. अधुना प्रमाणाभावात् तदाभासतां तयोर्दर्शयितुमाह– ]

१–त्वात्स्व– ई० । २–स्मात्तदात्मानो ई० । ३–न्तरतोक्तौ ज० । ४–यव्यवयवक्रि– ई० ।

प्रामाण्यं व्यवहाराद्धि स न स्यात्तत्त्वतस्तयोः ।
मिथ्यैकान्ते विशेषो वा कः स्वपक्षविपक्षयोः ॥४१॥

शुद्धमशुद्धं वा द्रव्यं पर्यायं[1] व्यस्तं समस्तं वा[2] व्यवस्थापयता तत्साधनं प्रमाणं मृग्यम्, अन्यथाऽतिप्रसङ्गात्। तत्प्रामाण्यं च व्यवहारेणैव, स च सङ्ग्रहे
5 भेदाश्रयो मिथ्यैव। ततः सप्र ( सः प्र ) तिपक्षं कथमतिशयीत सत्येतरस्वरूपवत्? मिथ्यैकान्ताविशेषेऽपि तद्व्यवस्थापनमयुक्तम्; तदुभयोपलब्धेरवितथात्मकत्वात्, अन्यथा स्वप्नान्तरवत् तद्विसंवादान्न किञ्चित्प्रमाणम्। नैगमेऽपि चलं[3] गुणप्रवृत्तं नित्यं चैतन्यमिति व्यवहाराऽसिद्धेः स्वरुचिविरचितदर्शनप्रदर्शनमात्रम्। नहि

§४) *"गुणानां परमं रूपं न दृष्टिपथमृच्छति ।*
10 *यत्तु दृष्टिपथप्राप्तं तन्मायै(ये)व सुतुच्छकम् ॥"*

इति प्रमाणमस्ति। समवायेन स्वावयवेषु अवयवी वर्त्तेत शृङ्गे गौः शाखायां वृक्षः इति लोकव्यवहारमतिवर्त्तेत विपर्ययात्। स्वयमज्ञस्वभावात्मा ज्ञानसमवाये कथमिव ज्ञः स्यात्? नहि तथाऽपरिणतस्य तत्त्वम्, समवायस्यापि ज्ञत्वप्रसङ्गात्। नवै ज्ञानसमवायोऽस्ति समवायस्येति चेत्; कथं स्वस्वभावरहितः सोऽस्ति[4], वर्त्तेत
15 वा समवायान्तराभावात्? तदनवस्थानुषङ्गात् ॥४१॥

[§४३. इदानीं व्यवहारनयं दर्शयितुमाह–]

व्यवहाराविसंवादी नयः स्याद् दुर्नयोऽन्यथा ।
बहिरर्थोऽस्ति विज्ञप्तिमात्रं शून्यमितीदृशः ॥४२॥

प्रत्यक्षस्याऽपि प्रामाण्यं व्यवहारापेक्षम्। स पुनः अर्थाभिधानप्रत्यया-
20 त्मकः। कथम्? उत्पादविगमध्रौव्यलक्षणं सत्, गुणपर्ययवद्द्रव्यम्, जीवश्चैतन्यस्वभावः इति श्रुतेः। प्रमाणान्तराबाधनं[6] पूर्वापराऽविरोधश्चाऽविसंवादः[7]। तदपेक्षोऽयं नयः। ततोऽन्यथा दुर्नयः[5]। कथम्? बहिरपि स्वलक्षणमर्थक्रियासमर्थं सदङ्गीकृत्य, तत्प्रतिक्षेपेण विज्ञप्तिमात्रमन्तस्तत्त्वमिति प्रत्यवस्थाप्य, तदतिसूक्ष्मेक्षिकया निरीक्षमाणं न परीक्षाक्षममिति स्वभावनैरात्म्यमसाध्यसाधनमाकुलं प्रलपन्न क्वचिद्व्यवतिष्ठेत
25 स्वपरविसंवादव्यसनीयेन प्रत्यक्षादिविरोधात्। तदन्यतमस्याभिमतत्वात् पुनरलं शेषप्रलापेन[8] ॥४२॥

[§४४. इदानीं ऋजुसूत्रनयं साभासं दर्शयन्नाह–]

ऋजुसूत्रस्य पर्यायः प्रधानं चित्रसंविदः ।
चेतनाणुसमूहत्वात् स्याद्भेदानुपलक्षणम् ॥४३॥

---

१ 'पर्यायं' नास्ति ई०। २ 'वा' नास्ति ज०। ३ बलं ई०। ४ 'सोस्ति' नास्ति ई०। ५–त्रश-म० लघी०। ६–बाधने ज०। ७ पूर्वापरविरोधश्च विसंवादः ई०। ८ 'शेष' नास्ति ई०।

यथा बहिः परमाणवः सन्निविष्टाः स्थवीयांसमेवैकमाकारमभूतं दर्शयन्ति तथैव संवित्परमाणवोऽपि। तन्नैकमनेकरूपं तत्त्वमक्रमं यत् सक्रमं साधयेत्, भेदस्य अभेदविरोधात्, क्वचिन्नानात्वमेव अन्यथा न स्यात्। सापेक्षो नयः, निरपेक्षो दुर्नयः। प्रतिभासभेदात् स्वभावभेदं व्यवस्थापयन् तदभेदादभेदं प्रतिपत्तुमर्हत्येव विशेषाभावात्। तदन्यतरापायेऽर्थस्याऽनुपलब्धेः ॥४३॥　5

[§ ४५. अधुना शब्दसमभिरुढेत्थम्भूतान्नयान् कथयन्नाह-]

**कालकारकलिङ्गानां भेदाच्छब्दोऽर्थभेदकृत्।**
**अभिरूढस्तु पर्यायैरित्थम्भूतः क्रियाश्रयः ॥४४॥**

कालभेदात्तावदभूत् भवति भविष्यति इति, कारकभेदात् करोति क्रियते इत्यादि, लिङ्गभेदात् देवदत्तो देवदत्ता इति, तथा पर्यायभेदात् इन्द्रः शक्रः पुरन्दर　10 इति, तथैतौ शब्दसमभिरूढौ। क्रियाश्रयः एवम्भूतः। कुर्वत एव कारकत्वम्, यदा न करोति तदा कर्तृत्वस्यायोगात्। तत्कथं पुनः शब्दज्ञानं विवक्षाव्यतिरिक्तं वस्तु प्रत्येति ? कथं च न ? तदप्रतिबन्धात्; 'नहि बुद्धेरकारणं विषयः' इत्येतत् प्रतिव्यूढम्; विज्ञानस्य अनागतविषयत्वनिर्णयेन ॥४४॥

[§ ४६. ननु शब्दाः सङ्केतितमेवार्थं प्राहुर्नान्यम् अतिप्रसङ्गात्। सङ्केतश्च नाविषयी-　15 कृतानां शब्दार्थानां युक्तो तन्निर्विषयताप्राप्तेः। तद्विषयीकरणञ्च नाध्यक्षेण; शब्दाध्यक्षस्य अभिधेये, तदध्यक्षस्य च अभिधानेऽप्रवृत्तेः। नापि स्मृत्या; तस्या निर्विषयत्वादित्याशङ्क्याह-]

**अक्षबुद्धिरतीतार्थं वेत्ति चेन्न कुतः स्मृतिः।**
**प्रतिभासभिदैकाऽर्थे दूरासन्नाक्षबुद्धिवत् ॥४५॥**

क्षणिकाक्षज्ञानज्ञेययोः कार्यकारणत्वनियमे निर्विषयं प्रत्यक्षं तत्कारणस्य　20 अतीतस्य तदनात्मकत्वात्, प्रागभावप्रध्वंसाभावयोः समनन्तरेतरविनाशयोश्च अभावाऽविशेषात्। तदुत्पत्तिसारूप्ययोरसम्भवात्, व्यभिचाराच्च किं कस्य ज्ञानमित्युक्तम्। यदि पुनः अतीतमर्थं प्रत्यक्षं कथञ्चिद्वेत्ति स्मृतिः कथन्न संविद्यात्? साक्षादतदुत्पत्तेरताद्रूप्याच्च इति वैयात्यम्; व्यवहितोत्पत्तावपि तद्रूपानुकृतेर्दर्शनात् दृष्टार्थस्वप्नवत्। प्रत्यक्षस्मृत्योः प्रतिभासभेदान्नैकार्थत्वमनैकान्तिकम्; दूरासन्नै-　25 कार्थप्रत्यक्षयोः भिन्नप्रतिभासयोरपि तदेकार्थविषयत्वात्। दूराक्षार्थज्ञानं भ्रान्तेरप्रत्यक्षं प्रमाणान्तरं स्यात्। नहि ततोऽर्थं परिच्छिद्य प्रवृत्तौ विसंवादैकान्तः[1] तदप्रमाणं यतः स्यात्। तदयं शब्दार्थौ स्मृत्या सङ्कलय्य[2] सङ्केते पुनः शब्दप्रतिपत्तौ[3] तदर्थं प्रत्येति। स्मृतिप्रत्यभिज्ञानादेरपि परमार्थविषयत्वात्। तदर्थाभावेऽपि प्रत्यक्षवत् शब्दार्थज्ञानं वस्तुन्यपि सङ्केतसम्भवात् ॥४५॥　30

---

१ विसंवाद्यते सदप्र- ज०। २ संकलपय्य ई०। ३-प्रवृत्तौ ई०।

[§ ४७. ननु यद्यर्थाभावेऽपि तज्ज्ञानं स्यात्तर्हि सर्वमेव शाब्दज्ञानमप्रमाणं स्यात् । प्रयोगः—विवादास्पदीभूतं शब्दार्थज्ञानमप्रमाणं तत्त्वात् प्रकृतज्ञानवदित्याशङ्क्याह—]

**अक्ष[1]शब्दार्थविज्ञानमविसंवादतः समम् ।**
**अस्पष्टं शब्दविज्ञानं प्रमाणमनुमानवत् ॥४६॥**

5 तदुत्पत्तिसारूप्यादिलक्षण[2]व्यभिचारेऽपि आत्मना यदर्थपरिच्छेदलक्षणं ज्ञानं तत्त[3]स्येति सम्बन्धात् । वागर्थज्ञानस्यापि स्वयमविसंवादात् प्रमाणत्वं समक्षवत् । विवक्षाव्यतिरेकेण वागर्थज्ञानं वस्तुतत्त्वं प्र[4]त्याययति अनुमानवत्, सम्बन्धनियमाभावात् । वाच्यवाचकलक्षणस्यापि सम्बन्धस्य बहिरर्थप्रतिपत्तिहेतुतोपलब्धेः ॥४६॥

[§ ४८. ननु कालादीनां ग्राहकप्रमाणाभावतोऽभावात् सतामप्यभेदात्, अन्यतः काल10 भेदात्तद्भेदे अनवस्था स्यात् । अर्थभेदात्तद्भेदे अन्योन्याश्रयः । ततोऽयुक्तमुक्तं 'कालकारक' इत्यादि ; इत्याशङ्क्याह—]

**कालादिलक्षणं न्यक्षेणान्यत्रेक्ष्यं परीक्षितम् ।**
**द्रव्यपर्यायसामान्यविशेषात्मार्थनि[5]ष्ठितम् ॥४७॥**

नहि एकान्ते वर्त्तनालक्षणं कालस्य सम्भवति । भूतभविष्यद्वर्त्तमानप्रभेदो यतः 15 स्यात्तदर्थक्रियानुपपत्तेः । न च द्रव्यं शक्तिः तदुभयं वे[6]ति कारकलक्षणम् ; शक्तिशक्ति[7]मतोर्व्यतिरेकैकान्ते सम्बन्धाऽसिद्धिः, अनवस्थानुषङ्गात् । तदव्यतिरेकैकान्ते 'शक्तिः शक्तिमत्' इति रिक्ता वाचोयुक्तिः । तन्न एकान्ते षट्कारकी व्यवतिष्ठेत । कुतः पुनः स्त्यायत्यस्यां गर्भः इति स्त्री, प्रसूते स्वान् पर्यायान् इति पुमान्, तदुभ[8]यात्यये नपुंसकम् इति शब्दार्थप्रत्ययानाम् अन्यतमस्यापि लिङ्गव्यवस्था ? 20 तथैकस्यार्थस्य इन्दनादिन्द्रः, शकनात् शक्रः, पुरं दारयतीति पुरन्दरः इति पर्यायभेदात् भिन्नार्थता तद्वाचिनां शब्दानां न सम्भवत्येव, व्यतिरेकेत[9]रैकान्तयोः तत्र विरोधात् । तत एव क्रियाकारकयोस्तत्र असम्भवो विज्ञेयः । तदनेकान्तसिद्धिः विधिप्रतिषेधाभ्यां तदर्थाभिधानात् । न[10]ाभावैकान्तः कुतः, तदभिधानलिङ्गाद्यसम्भवोपालम्भः स्याद्वादमनुवर्त्तेत ? ॥४७॥

25 [§ ४९. यतश्चानेकान्तेन तदुपालम्भाभावः अतः—]

**एकस्यानेकसामग्रीसन्निपातात् प्रतिक्षणम् ।**
**षट्कारकी प्र[11]कल्प्येत तथा कालादिभेदतः ॥४८॥**

---

१ अक्षात् शब्दार्थ– ई० । २–लक्षणं व्य–ई० । ३ तत्तथेति ज० । ४ प्रत्यापयति ई० । ५–निश्चितम् ज० । ६ चेति ई० । ७ शक्तिश– ई० । ८–भयाभावे नपुं–ई० । ९–न्तरयोः ज० । १० नचैकान्तः ज० । ११ प्रकल्पेत् ज० ।

प्रतिक्षणं प्रत्यर्थं च नानासामग्रीसन्निपातात् षट्कारकीसम्भवेऽपि यथैकं[1] स्वलक्षणं स्वभावकार्यभेदानां तदभेदकत्वात् तथा कालादिभेदेऽपि। तत्प्रतिक्षेपो दुर्नयः, तदपेक्षो नयः। स्वार्थप्राधान्येऽपि तद्गुणत्वात्। तदुभयात्मार्थज्ञानं प्रमाणम्।

[§ ५०. ननु नयः सर्वोऽपि मानसो विकल्पः। विकल्पश्च निर्विषय एव तत्त्वात् प्रधानादिविकल्पवत्, तत्कथं तेन कस्यचिदधिगमः स्यादित्याशङ्क्य 'विकल्पत्वात्' इत्यस्य हेतोः तर्कादिना अनैकान्तिकत्वं दर्शयन्नाह—] 5

व्याप्तिं साध्येन हेतोः स्फुटयति न विना चिन्तयैकत्र दृष्टिः,
साकल्येनैष तर्कोऽनधिगतविषयः तत्कृतार्थैकदेशे[2]।
प्रामाण्ये चानुमायाः[3] स्मरणमधिगतार्थाविसंवादि[4] सर्वम्,
संज्ञानञ्च प्रमाणं समधिगतिरतः सप्तधाख्यैर्नयौघैः ॥४९॥ 10

[§ ५१. तैश्च तेषां समधिगतौ सत्यां यज्जातं तद्दर्शयति—]

सर्वज्ञाय निरस्तबाधकधिये स्याद्वादिने ते नम-
स्तात्प्रत्यक्षमलक्षयन् स्वमतमभ्यस्याप्यनेकान्तभाक्।
तत्त्वं शक्यपरीक्षणं सकलविन्नैकान्तवादी ततः,
प्रेक्षावानकलङ्कमेति[5] शरणं त्वामेव वीरं जिनम् ॥५०॥ 15

नयप्रवेशे पञ्चमः परिच्छेदः।[6]

---

इति प्रमाणनव (य) प्रवेशः समाप्तः।

---

कृतिरियं सकलवादिचक्रचक्रवर्तिनो भगवतो भट्टाकलङ्कदेवस्येति।



[ मोहेनैव[7] परोऽपि कर्मभिरिह प्रेत्याभिबन्धः पुनः,
भोक्ता कर्मफलस्य जातुचिदिति प्रभ्रष्टदृष्टिर्जनः। 20
कस्माच्चित्रतपोभिरुद्यतमनाश्चैत्यादिकं वन्दते,
किं वा तत्र तपोऽस्ति केवलमिमे धूर्तैर्जडा वञ्चिताः ॥ ]

---

१ यथैकस्व–ज०। २–र्थे ज्ञा–ज०। ३–वानु–ज०। ४–र्थादिसं–मु० लघी०। ५–वानकलङ्कयाति मु० लघी०। ६ एवं प्रक्रान्तप्रत्यक्षादिपरिच्छेदपञ्चमः नयप्रवेशो द्वितीयपरिच्छेदः समाप्तः। न्यायकु०। ७ श्लोकोऽयं ई०, ज० प्रत्योः प्रमाणनयप्रवेशसमाप्त्यनन्तरमुपलभ्यते। परं न्यायकुमुदचन्द्रकृता प्रभाचन्द्रेण लघीयस्त्रयतात्पर्यवृत्तिकृता अभयचन्द्रेण च अव्याख्यातत्वात्, अर्थदृष्ट्या प्रकरणेन चासंगतत्वात् प्रक्षिप्त एवेति भाति।–सम्पा०।

## ३. तृतीयः प्रवचनप्रवेशः ।



[§५२. अथ प्रमाणनयस्वरूपं निरूप्य इदानीं प्रमाणविशेषस्य आगमस्य स्वरूपं प्रथग् निरूपयितुमुपक्रमते, तत्रानेकधा विप्रतिपत्तिसद्भावात्। तदादौ च शास्त्रस्य मध्यमङ्गलभूतम् इष्टदेवताविशेषगुणस्तोत्रमाह–]

5 **प्रणिपत्य महावीरं स्याद्वादेक्षणसप्तकम् ।**
**प्रमाणनयनिक्षेपानभिधास्ये यथागमम् ॥५१॥**

[§५३. तत्र प्रमाणादीनां समासतो लक्षणं प्रतिपादयन्नाह–]

**ज्ञानं प्रमाणमात्मादेरुपायो न्यास इष्यते ।**
**नयो ज्ञातुरभिप्रायो युक्तितोऽर्थपरिग्रहः ॥५२॥**

10 ज्ञानं प्रमाणं कारणस्याप्यचेतनस्य प्रामाण्यमनुपपन्नम् असन्निकृष्टेन्द्रियार्थवत् । विषमोऽयमुपन्यासः, असन्निकृष्टस्य तदकारणत्वादिति; नैतत्सारम्; अर्थस्य तदकारणत्वात्, तस्य इन्द्रियानिन्द्रियनिमित्तत्वात्, अर्थस्य विषयत्वात्। नहि तत्परिच्छेद्योऽर्थः तत्कारणतामात्मसात्कुर्यात् प्रदीपस्येव घटादिः ॥५२॥

[§५४. किञ्च अर्थस्य ज्ञानं प्रति कारणत्वे सिद्धे अयं नियमः परिकल्प्येत, असिद्धे

15 वा ? न तावदसिद्धे अतिप्रसङ्गात् । अथ सिद्धे कुतः तत्सिद्धिः ? तत एव ज्ञानात्, अन्यतो वा ? न तावत्तत एव; यतः -]

**अयमर्थ इति ज्ञानं विद्यान्नोत्पत्तिमर्थतः ।**
**अन्यथा न विवादः स्यात् कुलालादिघटादिवत् ॥५३॥**

अर्थं परिच्छिन्दद् विज्ञानम् आत्मनः कारणान्तरमपरं सूचयत्येव । नहि ततः

20 स्वभावलाभं प्रति व्याप्रियमाणस्य तत्परिच्छित्तिः अनुत्पन्नत्वात्। उत्पन्नस्यापि न कारणे व्यापारः करणादिवत्। यदि कारणकार्यभावमात्मार्थयोर्विज्ञानं परिच्छिन्द्यात् न कश्चिद्विप्रतिपत्तुमर्हति कर्तृकरणकर्मसु ॥५३॥

[§ ५५.····अन्वयव्यतिरेकौ अनुकरोति च ज्ञानमर्थस्येत्याशङ्क्याह–]

**अन्वयव्यतिरेकाभ्यामर्थश्चेत् कारणं विदः ।**
25 **संशयादिविदुत्पादः कौतस्कुत इतीक्ष्यताम् ? ॥५४॥**

बुद्धेरेव व्यभिचारो नार्थस्य । कथमव्यभिचारिणोऽर्थस्य अन्वयव्यतिरेकावनुकुर्वती व्यभिचरेन्नाम ? ततः संशयादिज्ञानमहेतुकं स्यात् । तिमिराशुभ्रमणनौयानसङ्क्षोभादिहेतुत्वे कमर्थमर्थः पुष्णातीति मृग्यम् ? सत्यज्ञानेऽपि तिमिराद्य-

---

१ उच्यते ज० । २ किमर्थ–ज० ।

भावस्य इन्द्रियमनोगतस्य कारणत्वात्, ततः सुभाषितम्- § ५) *"इन्द्रियमनसी कारणं विज्ञानस्य अर्थो विषयः"* इति ॥५४॥

[ § ५६. ननु चेन्द्रियार्थयोः सतोरपि सन्निकर्षव्यतिरेकेण बुद्धेरनुत्पत्तेः तस्मिन् सत्येव उत्पत्तेः तस्यैव तत्र साधकतमत्वोपपत्तेः नेन्द्रियमनसी तत्कारणम्। इत्याशङ्कापनोदार्थमाह-]

**सन्निधेरिन्द्रियार्थानामन्वयव्यतिरेकयोः।**
**कार्यकारणयोश्चापि बुद्धिरध्यवसायिनी ॥५५॥**　　5

सन्निकर्षादयः कारणान्तरादुत्पन्नया बुद्ध्याऽध्यवसीयन्ते नच तैर्बुद्धिः, प्रागनध्यवसायात्, अन्यथा कैमर्थक्याद् बुद्धेरन्वेषणम्? आत्ममनइन्द्रियार्थानां कारणानामतीन्द्रियाणां सन्निकर्षो दुरवबोधः। कथं तस्य विज्ञानोत्पत्तावङ्गीकरणमिति चिन्त्यम्? प्राग्विज्ञानोत्पत्तेरर्थमनवबुद्ध्यमानाः कारणमकारणं वा कथं ब्रूयुः? उत्पन्नं हि विज्ञानमर्थस्य परिच्छेदकं न तत्कारणतायाः। आलोकोऽपि न कारणं परिच्छेद्यत्वादर्थवत् ॥५५॥　　10

[ § ५७. ननु यद्यालोकः तदुत्पत्तेः कारणं न स्यात्तर्हि तदभावेऽपि रूपज्ञानोत्पत्तिः कुतो न स्यादित्याशङ्क्याह-]

**तमो निरोधि वीक्षन्ते तमसा नावृतं परम्।**　　15
**कुड्यादिकं न कुड्यादितिरोहितमिवेक्षकाः ॥५६॥**

नहि तमः चक्षुर्ज्ञानप्रतिषेधकम्; तमोविज्ञानाभावप्रसङ्गात्। अन्यत्र विज्ञानाऽभावहेतुरिति चेत्; आलोकोऽपि तमोविज्ञानाभावहेतुत्वात् तमोवदभावहेतुः स्यात्। अर्वाग्भागदर्शिनः परभागपरिच्छेदाऽभावात् तस्यापि ज्ञाननिरोधित्वं स्यात् तमोवत्। प्रत्यर्थमावरणविच्छेदापेक्षया ज्ञानस्य परिच्छेदकत्वात्। नावरणं तिमिरादि परिच्छेद्यत्वादर्थवत् ॥५६॥　　20

[ § ५८. ननु चात्मनो ज्ञानस्वभावतया सर्वत्र सर्वदा सर्वथा सर्वार्थग्रहणस्वभावत्वेन अशेषज्ञत्वप्रसङ्गान्न किञ्चिदावरणकल्पनया इत्याशङ्कापनोदार्थमाह-]

**मलविद्धमणिव्यक्तिर्यथाऽनेकप्रकारतः।**
**कर्मविद्धात्मविज्ञप्तिस्तथाऽनेकप्रकारतः ॥५७॥**　　25

यथास्वं कर्मक्षयोपशमापेक्षिणी करणमनसी निमित्तं विज्ञानस्य न बहिरर्थादयः। § ६) *"नाननुकृतान्वयव्यतिरेकं कारणं नाकारणं विषयः"* इति बालिशगी-

---

१-क्या बु-ज०। २ आत्मनो मनसा करणानामतीन्द्रियाणां ई०। ३ वाक्यमेतन्नास्ति ज०। ४-द्ध्यमना ज०। ५ ब्रूयुः कथं तस्य विज्ञानोत्पत्तावङ्गीकरणमिति वित्यासाधि (?) ज्ञानोत्पत्तेरर्थमनवबुद्ध्यमानाः कारणमकारणं वा कथं ब्रूयुः ज०। ६ तत्कारणतया ई०। ७ विरोधि ज०। ८-ज्ञाने प्र-ज०। ९-नविरो-ई०। १०-स्वकर्म-ज०।

तम्; तामसखगकुलानां तमसि सति रूपदर्शनमावरणविच्छेदात्, तदविच्छेदात् आलोके सत्यपि संशयादिज्ञानसम्भवात्। काचाद्युपहतेन्द्रियाणां शङ्खादौ पीताद्याकारज्ञानोत्पत्तेः, मुमूर्षाणां यथासम्भवमर्थे सत्यपि विपरीतप्रतिपत्तिसद्भावात् नार्थादयः कारणं ज्ञानस्येति स्थितम् ॥५७॥

5 [§ ५९. अत्रैव दूषणान्तरमाह-]

**न तज्जन्म न ताद्रूप्यं न तद्व्यवसितिः सह।**
**प्रत्येकं वा भजन्तीह प्रामाण्यं प्रति हेतुताम् ॥५८॥**

नार्थः कारणं विज्ञानस्य कार्यकालमप्राप्य निवृत्तेः अतीततमवत्। न ज्ञानं तत्कार्यं तदभाव एव भावात् तद्भावे चाऽभावात् भविष्यत्तमवत्। नार्थसारूप्यभृद्विज्ञानम् अमूर्त्तत्वात्। मूर्त्ता एव हि दर्पणादयः मूर्त्तमुखादिप्रतिबिम्बधारिणो दृष्टाः, नामूर्त्तं[1] मूर्त्तप्रतिबिम्बभृत्, अमूर्त्तं च ज्ञानं मूर्तिधर्माभावात्। नहि ज्ञानेऽर्थोऽस्ति तदात्मको वा येन तस्मिन् प्रतिभासमाने प्रतिभासेत शब्दवत्। ततः तदध्यवसायो न स्यात्। कथमेतदविद्यमानं त्रितयं ज्ञानप्रामाण्यं प्रत्युपकारकं स्यात् अलक्षणत्वेन ? ॥५८॥

15 [§ ६०. ननु ज्ञानस्य तदुत्पत्तित्रितयासम्भवे कथमर्थग्राहकत्वमतिप्रसङ्गादित्याशंकायामाह-]

**स्वहेतुजनितोऽप्यर्थः परिच्छेद्यः स्वतो यथा।**
**तथा ज्ञानं स्वहेतूत्थं[3] परिच्छेदात्मकं स्वतः ॥५९॥**

अर्थज्ञानयोः स्वकारणादात्मलाभमासादयतोरेव परिच्छेद्यपरिच्छेदकभावः नाऽलब्धात्मनोः[4] कर्तृकर्मस्वभाववत्। ततस्तदुत्पत्तिमन्तरेणापि ग्राह्यग्राहकभावसिद्धिः स्वभावतः स्यात्, अन्यथा व्यवस्थाभावप्रसङ्गात् ॥५९॥

[§ ६१. ननु सिद्धेपि स्वरूपतस्तद्भावे तत्फलं वक्तव्यम्। तच्च अधिगतिमात्रमित्येके, स्वरूपस्यैवाधिगतिरित्यन्ये, अर्थस्यैवेत्यपरे। इत्याशङ्क्याह-]

**व्यवसायात्मकं ज्ञानमात्मार्थग्राहकं मतम्।**
**ग्रहणं निर्णयस्तेन मुख्यं[5] प्रामाण्यमश्नुते ॥६०॥**

25 अनिर्णीतिफलस्य[6] नाधिगमोऽस्ति विचार्यमाणायोगात्। अविसंवादकत्वं च निर्णयायत्तं तदभावेऽभावात् तद्भावे च भावात्। व्यवसायफलं ज्ञानं मुख्यं प्रमाणमिति व्यवस्थितम्। स्वतोऽव्यवसायस्य[7] विकल्पोत्पादनं प्रत्यनङ्गत्वात्, तदुत्पत्तिं प्रत्यङ्गत्वे अभिलापसंसर्गयोग्यता न प्रतिषेध्या, अन्यथा विकल्पोत्पत्त्यभावप्रसङ्गात्। सति

१-कारिणो ई०। २-त्तंमूर्त्त-ज०। ३-हेतुत्वं ज०। ४-लब्धात्माकर्त्तृ-ई०। ५ मुख्यप्रा-ज०। ६-स्याधिगमो-ई०। ७-तोप्यव-ई०।

मुख्ये निर्णयात्मके ज्ञाने सकलव्यवहारनियामके कथमसंवेद्यमकिञ्चित्करमनुपायमनुपेयं ब्रुवाणः स्वस्थः? ॥६०॥

[§ ६२. अधुना तद्भेदं दर्शयन्नाह–]

तत्प्रत्यक्षं परोक्षं च द्विधैवात्रान्यसंविदाम् ।
अन्तर्भावान्न[1] युज्यन्ते नियमाः परकल्पिताः ॥६१॥ 5

इन्द्रियार्थज्ञानं[2] स्पष्टं हिताहितप्राप्तिपरिहारसमर्थं प्रादेशिकं प्रत्यक्षम्, अवग्रहेहावायधारणात्मकम्। अनिन्द्रियप्रत्यक्षम् स्मृतिसंज्ञाचिन्ताऽभिनिबोधात्मकम् । अतीन्द्रियप्रत्यक्षं व्यवसायात्मकं स्फुटमवितथमतीन्द्रियमव्यवधानं लोकोत्तरमात्मार्थविषयम्। तदस्ति सुनिश्चिताऽसम्भवद्बाधकप्रमाणत्वात् सुखादिवत्। श्रुतं परोक्षं सकलप्रमाणप्रमेययत्तावत्स्वरूपाभिधायि[3] बाधारहितं प्रमाणम्। अत्र अर्थापत्त्यनुमानोपमानादीन्यन्तर्भवन्ति । परपरिकल्पितप्रमाणान्तर्भावनिराकरणमन्यत्रोक्तमिति नेहोच्यते ॥६१॥ 10

[§ ६३. श्रुतस्य भेदं दर्शयन्नाह–]

उपयोगौ श्रुतस्य द्वौ स्याद्वादनयसंज्ञितौ ।
स्याद्वादः सकलादेशो नयो विकलसङ्कथा ॥६२॥ 15

अनेकान्तात्मकार्थकथनं स्याद्वादः, यथा जीवः पुद्गलः धर्मोऽधर्म आकाशं काल इति। तत्र जीवो ज्ञानदर्शनवीर्यसुखैरसाधारणैः अमूर्त्तत्वासङ्ख्यातप्रदेशत्वसूक्ष्मत्वैः साधारणासाधारणैः सत्त्वप्रमेयत्वाऽगुरुलघुत्वधर्मित्वगुणित्वादिभिः साधारणैः अनेकान्तः। तस्य जीवस्यादेशात् प्रमाणं स्याद्वादः। तथेतरे परिणामतो योज्याः। ज्ञो जीवः सुखदुःखादिवेदनात् इत्यादि विकलादेशो नयः। साकल्यमनन्तधर्मात्मकता। वैकल्यमेकान्तः धर्मान्तराविवक्षातः। तत्र 'जीवः' इत्युक्ते जीवशब्दो योग्यतापेक्षो[4]ऽनादिसङ्केतः स्वभावभूताऽन्यापोहस्वार्थप्रतिपादनः न्यक्षेण प्रतिपक्षं निरस्य जीवमात्रमेव अभिदध्यात्। ततः स्यात्पदप्रयोगात् सर्वथैकान्तत्यागात् स्वरूपादिचतुष्टयविशेषणविशिष्टो जीवः अभिधीयते इति स्वेष्टसिद्धिः[5]। नयोपि तथैव सम्यगेकान्तः। 'स्याज्जीव एव' इत्युक्तेऽनेकान्त[6]विषयः स्याच्छब्दः। 'स्यादस्त्येव जीवः' इत्युक्ते एकान्तविषयः स्याच्छब्दः ॥६२॥ 20 25

[§ ६४. ननु न सर्वत्र वाक्ये लौकिकाः स्यात्कारमेवकारञ्च प्रयुञ्जते अन्यथैव तत्प्रयोगदर्शनात्, अतो न युक्तमेतदित्याशङ्कापनोदार्थमाह–]

---

१–न्न ज०। २–यार्थे ज्ञा–ज०। ३–यत्तास्व– न्यायकु०। ४–क्षोऽना–ई०। ५ स्वेष्टविसि–ज०। ६–क्ते नैका– न्यायकु०।

अप्रयुक्तो[1]ऽपि सर्वत्र स्यात्कारोऽर्थात् प्रतीयते ।
विधौ निषेधेप्यन्यत्र कुशलश्चेत् प्रयोजकः ॥६३॥

क्वचित् स्यात्कारमनिच्छद्भिः सर्वथैकान्तोऽभ्युपगतः स्यात्, अवधारणाभावेऽपि अनेकान्तनि[2]राकरणस्य अवश्यम्भावित्वात्, अन्यथा प्रमाणनययोरभेदप्रसङ्गः। 5 किं बहुना विधिनिषेधानुवादाऽतिदेशवाक्येषु, कारकेषु कर्त्रादिषु, स्वार्थादिषु, प्रातिपदिकार्थेषु, साधनदूषणतदाभासवाक्येषु स्याद्वादमन्तरेण प्रस्तुताऽप्रसिद्धिः इत्याबालप्रसिद्धम् ॥६३॥

[§ ६५. ननु शब्दः सर्वोऽपि विवक्षाप्रतिबद्धत्वात् तामेव गमयति नार्थम्, अतोऽयुक्तमुक्तं 'तत्र जीव इत्युक्ते' इत्याद्याशङ्क्याह–]

10 वर्णाः पदानि वाक्यानि प्राहुरर्थानवाञ्छितान् ।
वाञ्छितांश्च क्वचिन्नेति प्रसिद्धिरियमीदृशी ॥६४॥
स्वेच्छया तामतिक्रम्य वदतामेव युज्यते ।
वक्त्रभिप्रेतमात्रस्य सूचकं वचनं त्वि[3]ति ॥६५॥

वर्णपदवाक्यानां वाचकत्वं यथास्वमागमात् प्रतिपत्तव्यम्। वक्त्रभिप्रायाद्भि- 15 न्नस्यार्थस्य वाचकाः शब्दाः सत्यानृतव्यवस्थान्यथानुपपत्तेः । अयञ्च प्रसङ्गोऽन्यत्र विस्तरेणोक्तः इति नेह प्रतन्यते । शब्दानामर्थव्यभिचारित्वे अभिप्रेतव्यभिचारित्वं [4]कुतोऽपनीयते सुषुप्तादौ वाग्वृत्तेर्दर्शनात्, अनिच्छतामपि अपशब्दादिभाषणसद्भावात्, वाञ्छतामपि मन्दबुद्धीनां शास्त्रवक्[5]तृत्वाभावात् । उभयत्र व्यभिचारान्न कस्यचिद्वाचकाः शब्दा इत्यलौकिकप्रतिभानम्; लोको हि अर्थ[6]स्या- 20 ऽऽप्त्यनाप्तिषु सत्यानृतव्यवस्थामातिष्ठेत शब्दस्य नाभिप्रायमात्रे, [7]तत्र शब्दव्यवहारबाहुल्याभावात्। [8]अबाधितां तत्प्रतीतिमतिक्रम्य स्वेच्छया प्रमाणप्रमेयस्वरूपमातिष्ठमानानां युक्तमभिप्रेतमात्रसूचित्वं शब्दानाम् ॥६४, ६५॥

[§ ६६. साम्प्रतं 'नयो ज्ञातुरभिप्रायः' इत्येतद्व्याख्यातुकाम आह–]

श्रुतभेदाः नयाः सप्त नैगमादिप्रभेदतः ।
25 द्रव्यपर्यायमूलास्ते द्रव्यमेकान्वयानुगम् ॥६६॥
निश्चयात्मकमन्योऽपि व्यतिरेक[9]पृथक्त्वगः ।
निश्चयव्यवहारौ तु द्रव्यपर्यायमाश्रितौ ॥६७॥

नहि मतिभेदा नयाः त्रिकालगोचरानेकद्रव्यपर्यायविषयत्वात्, मतेः साम्प्र-

१–क्तेऽपि मु० लघी० । २–निराकाराभ्युपगमस्यावश्य–ई० । ३ न्विति मु० लघी० । ४ कुतोऽप्रतीयते ज० । ५–क्तृत्वभा–ज० । ६–र्थस्यानाप्ति–ज० । ७ तत्र शब्दव्यवहारस्थितिमतिक्रम्य स्वेच्छ–ई० । ८ अबाधितमतिक्रम्य ज० । ९–रेकापृ–मु० लघी० ।

तिकार्थग्राहित्वात् । मनोमतेरपि स्मृतिप्रत्यभिज्ञानचिन्ताऽभिनिबोधात्मिकायाः कारणमति[1]परिच्छिन्नार्थविषयत्वात् । तत्र मूलनयौ द्रव्य-पर्यायार्थिकौ । द्रव्यमेकान्वयात्मकम् । एकत्वं तदतत्परिणामित्वात्, सदृशपरिणामलक्षणसामान्यात्मकत्वादन्वयि । पुरुषत्वादेः अपेक्षातः सत्यपि समानेतरपरिणामातिशये नानैकसन्तानात्मनां तथाभावसङ्करव्यतिकरव्यतिरेकादन्वयिनोरस्खलत्समानैकप्रत्ययविषयत्वमनुमिमीमहे । तथाहि—स्कन्धः स्वगुणपर्यायाणामेकत्वं न समानपरिणामः । पुरुषश्च समानपरिणामोऽपि सकलपदार्थगोऽनेकत्वम् । निश्चयनयादेको जीवः कर्मनिर्मुक्तः, व्यवहारनयात् सकर्मकः । पर्यायः पृथक्त्वं व्यतिरेकश्च । पृथक्त्वम् एकत्र द्रव्ये गुणकर्मसामान्यविशेषाणाम् । व्यतिरेकः सन्तानान्तरगतो विसदृशपरिणामः । व्यवहारपर्यायाः क्रोधादयः जीवस्य संसारिणः, निश्चयपर्यायाः शुद्धस्य ज्ञानादयः[3] प्रतिक्षणमात्मसात्कृताऽनन्तभेदाः । निश्चयनयात् पुद्गलद्रव्यमेकम् पृथिव्यादिभेदेऽपि रूपरसगन्धस्पर्शवत्त्वमाविर्भूताऽनाविर्भूतस्वरूपमजहत् स्कन्धपरमाणुपर्यायभेदेऽपि रूपादिमत्त्वमपरिजहत् । नहि अवस्थादेशकालसंस्काराः मूर्त[4]त्वमत्यन्तं भिन्दन्ति अमूर्त्तभेदप्रसङ्गात् । सत्ताभेदाश्च जीवादयः सत्तामित्युक्तप्रायं नेहोच्यते । भेदवादिनोऽपि ज्ञानमेकम् एकस्मिन् क्षणे स्वयमनेकाकारमात्मसात्कुर्वत् कथन्निराकुर्युः ? ततः तीर्थकरवचनसङ्ग्रहविशेषप्रस्तावमूलव्याकारिणौ द्रव्यपर्यायार्थिकौ निश्चेतव्यौ । नहि तृतीयं प्रकारान्तरमस्ति, तस्य प्रमाण एवाऽन्तर्भावात् । न नैगमस्य प्रमाणता तादात्म्यविवक्षाऽभावात् ॥६७॥

[§ ६७. एतदपि कुत इत्यत्राह—]

**गुणप्रधानभावेन धर्मयोरेकधर्मिणि ।**
**विवक्षा नैगमोऽत्यन्तभेदोक्तिः स्यात्तदाकृतिः ॥६८॥**

'जीवः सन्नमूर्त्तः कर्त्ता सूक्ष्मो ज्ञाता द्रष्टाऽसङ्ख्यातप्रदेशो भोक्ता परि[5]णामी नित्यः पृथिव्यादि[6]भूतविलक्षणः' इति जीवस्वतत्त्वनिरूपणायां गुणीभूता सुखादयः । सुखादिस्वरूपनिरूपणायां वा आत्मा । तदत्यन्तभेदाभिसन्धिर्नैगमाभासः । गुणगुणिनाम् अवयव्यवयवानां क्रियाकारकाणां जातितद्वताञ्चेत्यादितादात्म्यमविवक्षित्वा गुणगुणिनोः धर्मिधर्मयोर्वा गुणप्रधानभावेन विवक्षा नैग[7]मे, सङ्ग्रहादावेकविवक्षेति भेदः ॥६८॥

[§ ६८. तत्र संग्रहस्वरूपं सप्रतिपक्षं दर्शयन्नाह—]

---

१–मतिभिन्नार्थवि–ई० । २–मेकत्वान्वया–न्यायकु० । ३–यस्ते च प्र–न्यायकु० । ४मूर्त्ति–ज० । ५–णामं ज० । ६–भूतावि–ज० । ७ निगमे ज० ।

**सदभेदात्समस्तैक्यसंग्रहात् संग्रहो नयः ।**
**दुर्नयो ब्रह्मवादः स्यात् तत्स्वरूपानवाप्तितः ॥६९॥**

सर्वमेकं सदविशेषात् इति संग्रहो नयः । तदाभासो ब्रह्मवादः तदभ्युपगमोपायाभावात्, नापि तस्योपेयत्वं खरविषाणवत् ॥६८॥

5 [§ ६९. व्यवहारनयं दर्शयन्नाह–]

**व्यवहारानुकूल्यात्तु प्रमाणानां प्रमाणता ।**
**नान्यथा बाध्यमानानां ज्ञानानां तत्प्रसङ्गतः ॥७०॥**

प्रमाणानां प्रामाण्यं व्यवहाराविसंवादात् इत्याकुमारं प्रसिद्धम् । अन्यथा संशयविपर्यासस्वप्नज्ञानादीनामपि प्रामाण्यमनिवार्यं स्यात् । प्रत्यक्षं सविकल्पं प्रमाणं 10 व्यवहाराविसंवादात् । 'उत्पादविगमध्रौव्यलक्षणं सत्, गुणपर्ययवद्द्रव्यम्, जीवश्चैतन्यस्वभावः' इत्यादिश्रुतज्ञानेन पूर्वापराविरोधलक्षणसंवादसम्भवात् प्रामाण्यम्, अर्थाभिधानप्रत्ययात्मकव्यवहारानुकूल्याच्च । बहिरर्थविज्ञप्तिमात्रशून्यवचसां व्यवहारविरोधित्वात् दुर्ण (र्न) यत्वम् ॥७०॥

[§ ७०. ऋजुसूत्रनयं दर्शयन्नाह– ]

15 **भेदं प्राधान्यतोऽन्विच्छन् ऋजुसूत्रनयो मतः ।**
**सर्वथैकत्वविक्षेपी तदाभासस्त्वलौकिकः ॥७१॥**

बहिरणवः सञ्चिताः स्थूलमेकाकारप्रत्ययमभूतं दर्शयन्ति यथा तद्वत् संवित्परमाणवोऽपि चित्राकारमेकम् । ततो नैकमनेकरूपं तत्त्वमक्रमं यत् सक्रमं साधयेत् भेदस्य अभेदविरोधात्, अन्यथा क्वचिन्नानात्वमेव न स्यात् । सापेक्षो नयः, 20 निरपेक्षो दुर्नयः । प्रतिभासभेदात् स्वभावभेदं व्यवस्थापयन् तदभेदादभेदं प्रतिपद्यत एव विशेषाभावात्, तदन्यतरापायेऽर्थस्यानुपपत्तेः ॥७१॥

[§ ७१. अथ सप्तनयेषु मध्ये केऽर्थप्रधानाः के च शब्दप्रधानाः ? इत्याह– ]

**चत्वारोऽर्थनया ह्येते जीवाद्यर्थव्यपाश्रयात् ।**
**त्रयः शब्दनयाः सत्यपदविद्यां समाश्रिताः ॥७२॥**

25 कालकारकलिङ्गभेदात् शब्दः अर्थभेदकृत्, अभूत् भवति भविष्यति, करोति क्रियते, देवदत्तो देवदत्तेति । पर्यायभेदादभिरूढोऽर्थभेदकृत्, इन्द्रः शक्रः पुरन्दर इति । क्रियाश्रयः एवम्भूतः, कुर्वत एव कारकत्वम् । यदा न करोति तदा कर्तृत्वस्याऽयोगादिति । कथं पुनः शब्दज्ञानं विवक्षाव्यतिरिक्तमर्थं प्रत्येति ? कथञ्च न ?

---

१ तस्यौपि–ज० । २–मात्रे शून्यवचसा ज० । ३–विन्यासमाश्रिताः ज० ।

तदप्रतिबन्धात्; 'नहि बुद्धेरकारणं विषयः' इत्येव प्रतिव्यूढम्; विज्ञानस्य अनागत-
निर्णयात्। कृतिकोदयदर्शने शकटोदयो भविष्यति बुद्धिरविसंवादिनी, आदित्यः
श्व उदेता, सूर्याचन्द्रमसोर्ग्रहणं भविष्यति, तन्तवः पटो भविष्यन्ति, मृत्पिण्डो घटो
भविष्यति, तन्दुला भविष्यन्त्यौदनः, व्रीहयस्तन्दुला भविष्यन्ति इत्याद्यनागत-
विषयाणामविसंवादिनामानन्त्यात्। ततः शब्दज्ञानमपि विवक्षाव्यतिरिक्तार्थग्राहि    5
सिद्धम् प्रतिबन्धमन्तरेणापि तत्प्रतिपादकस्वाभाव्यात् विज्ञानवत्। वर्त्तनालक्षणः
कालः, क्रियाविष्टं द्रव्यं कारकम्, स्त्यानप्रसवतदुभयाभावसामान्यलक्षणं लिङ्गम्,
कथञ्चिद्वस्तुस्वभावभेदकं तथाप्रतीतेः। पर्यायोऽप्यर्थभेदकृत्। क्रियाभेदात् एकोऽपि
शब्दः क्रियानिमित्तकव्युत्पत्तिः तदभावात्तदर्थं नाचष्टे इति परमैश्वर्यमनुभवन्नेव
इन्द्रः नान्यदा। ततः सिद्धः क्रियाभेदः पाचकपाठकादिवत्। नहि वर्णपदवा-    10
क्यानां व्युत्पादकं शास्त्रं वितथं परमार्थशब्दप्राप्त्युपायकृत्[1] ज्ञातुरभिप्रायात्मकन-
यवत्। व्यावहारिकप्रकृत्यादिप्रक्रियाप्रविभागेन[2] यथा पारमार्थिकादनेकान्तात्म-
कादर्थादपोद्धृत्य तदंशमेकान्तं व्यावहारिकं तत्प्रतिपत्त्युपायं[3] प्रकाशयन्नयो न
मिथ्यात्वमनुभवेत्, निरपेक्षत्वस्यैव मिथ्यात्वात्। अनेकान्तनिराकृतेः निरपेक्ष-
त्वम्, तदनिराकृतेः सापेक्षत्वम्, नान्यथा नयानां सम्यक्त्वमिथ्यात्वे इति स्थितम्[4]।    15

[§ ७२. अथेदानीं शास्त्रविधानाध्ययनपर्यवसितफलप्ररूपणपुरस्सरं निक्षेपस्वरूपं प्ररू-
पयन्नाह- ]

श्रुतादर्थमनेकान्तमधिगम्याभिसन्धिभिः।
परीक्ष्य तांस्तान् तद्धर्माननेकान् व्यावहारिकान् ॥७३॥
नयानुगतनिक्षेपैरुपायैर्भेदवेदने।    20
विरचय्यार्थवाक्प्रत्ययात्मभेदान् श्रुतार्पितान् ॥७४॥
अनुयुज्यानुयोगैश्च निर्देशादिभिदां[5] गतैः।
द्रव्याणि जीवादीन्यात्मा विवृद्धाभिनिवेशनः[6] ॥७५॥
जीवस्थानगुणस्थानमार्गणास्थानतत्त्ववित्।
तपोनिर्जीर्णकर्माऽयं विमुक्तः सुखमृच्छति ॥७६॥    25

श्रुतमनादि सन्तानापेक्षया, साधनं प्रति सादि। प्रमाणं त्रिकालगोचरसर्वजी-
वादिपदार्थनिरूपणम्। तदर्थांशपरीक्षा[7]प्रवणोऽभिसन्धिर्नयः। ताभ्यामधिगमः
परमार्थव्यावहारिकार्थानाम्। तदधिगतानां वाच्यतामापन्नानां वाचकेषु भेदोप-
न्यासो न्यासः। सोऽवरतश्चतुर्धा नामस्थापनाद्रव्यभावतः। तत्र निमित्तान्तरान-

---

१-पायत्वात् न्यायकु०। २-प्रतिभागे-ज०। ३ तत्प्राप्त्युपा-न्यायकु०। ४ एतावत्पर्यन्तं न्यायकुमुदचन्द्रकृता तात्पर्यवृत्तिकृता च षष्ठपरिच्छेदरूपेण विभज्य परिच्छेदसमाप्तिः कृता। विवृति-प्रतौ तु नायं विभागः।-सम्पा०। ५-भिदागतैः मु० लघी०। ६-भिनिवेशतः ज०। ७-रीक्षप्र-ज०।

पेक्षं संज्ञाकर्म नाम। तच्च जातिद्रव्यगुणक्रियालक्षणनिमित्तानपेक्षसंज्ञाकर्मणोऽने-
कत्वादनेकधा। आहितनामकस्य द्रव्यस्य सदसद्भावात्मना व्यवस्थापना स्थापना।
अनागतपरिणामविशेषं प्रति गृहीताभिमुख्यं द्रव्यम्। तथोपयोगलक्षणो भावनि-
क्षेपः। अप्रस्तुतार्थाऽपाकरणात् प्रस्तुतार्थव्याकरणाच्च निक्षेपः फलवान्। निक्षिप्ताः
5 पदार्थाः निर्देशादिभिः सदादिभिश्चानुयोगैः अनुयो (यु) ज्यन्ते। अनुयुक्ताः प्रयुक्ताः
सर्वे पदार्थाः; तथापि जीवपदार्थविषयविशेषप्ररूपकाणि जीवस्थानगुणस्थानमार्ग-
णास्थानानि। एवं प्रमाणनयनिक्षेपानुयोगैः सर्वान् पदार्थानधिगम्य पुरुषतत्त्वं
जीवस्थानगुणस्थानमार्गणास्थानैः दृढतरमवबुद्ध्य प्रवृद्धाभिनिवेशात्मकसम्यग्दर्शनः
तपसा निर्जीर्णकर्मा सर्वकर्मविनिर्मुक्तो बाधारहितमव्यवच्छिन्नमनन्तमतीन्द्रियं
10 सुखमृच्छत्यात्मा। नहि गुणादिविनाशात् जडः[2], गुणगुणिविनाशात् शून्यः,
भोग्यविरहात् तदभोक्ता; तथाधिगमाभावात् तद्बाधासम्भवाच्च। शरीरादिकं धर्मि
ज्ञानावरणादिस्वरूपं न भवति साध्यताऽस्य, तत्सत्यपि ज्ञानोदयसम्भवात्॥७६॥

[§ ७३. इदानीं शास्त्रकारः शास्त्राध्ययनस्य प्रयोजनं प्ररूपयन्नाह–]

भव्यः पश्च गुरून् तपोभिरमलैराराध्य बुध्वागमम्,
15 तेभ्योऽभ्यस्य तदर्थमर्थविषयाच्छब्दादपभ्रंशतः।
दूरीभूततरात्मकादधिगतो बोद्धाऽकलङ्कं पदम्,
लोकालोककलावलोकनबलप्रज्ञो जिनः स्यात् स्वयम्॥७७॥
प्रवचनपदान्यभ्यस्यार्थांस्ततः परिनिष्ठितान–
सकृदवबुद्धेद्धाद्बोधाद्बुधो हतसंशयः।
20 भगवदकलङ्कानां स्थानं सुखेन समाश्रितः,
कथयतु शिवं पन्थानं वः पदस्य महात्मनाम्॥७८॥

लक्षणसङ्ख्याविषयफलोपेतप्रमाणनयनिक्षेपस्वरूपप्ररूपके हि हेतुवादरूपे आगमे[3]
गुरूपदेशपरम्परायथावदधिगते परमप्रकर्षेण अभ्यस्ते सति आत्मनो जिनेश्वरपद-
प्राप्तिलक्षणस्वार्थसम्पत्तिर्भवति। तत्सम्पत्तौ च मुमुक्षुजनमोक्षमार्गोपदेशद्वारेण
25 परार्थसम्पत्तयेऽसौ चेष्टते॥७८॥

इति भट्टाकलङ्कशशाङ्कानुस्मृतप्रवचनप्रवेशः समाप्तः॥छ॥



नमोऽकलङ्काय कुतीर्थनाशिने स्याद्वादमार्गप्रतिबोधहेतवे।
मिथ्यान्धकारप्रतिभेदभानवे सम्यक्त्वसद्रत्नविकाशमर्त्तये॥छ।



## [समाप्तमिदं प्रकरणम्।]

---

१–क्षं कर्म ज०। २ 'जडः' नास्ति ज०। ३ अयं विवृतिभागो न व्याख्यातो न्यायकुमदचन्द्र-
कृता।–सम्पा०।

श्रीमद्भट्टाऽकलङ्कविरचितः

# ॥ न्यायविनिश्चयः ॥

## १. प्रथमः प्रत्यक्षप्रस्तावः ।



[ § १ अतः सर्वत्र तद्गुणस्तवनमेव मङ्गलम्, तत एव तत्प्रयोजनभावान्नापरम् । किं पुनस्तदित्याह– ]

**प्रसिद्धाशेषतत्त्वार्थप्रतिबुद्धैकमूर्त्तये ।**
**नमः श्रीवर्द्धमानाय भव्याम्बुरुहभानवे ॥१॥**

[ § २. अथ यदि भगवतो भव्याम्बुरुहभानुत्वं तर्त्तिहिं वाङ्मयूखसापेक्षमेव नान्यथा । न हि तत्सन्निधानादनुपदेशमेव भव्यानां तत्त्वज्ञानमिति सौगतवत्स्याद्वादिनामभिनिवेशोऽस्ति, ततस्तद्वाङ्मयादेव तत्त्वज्ञानसिद्धेः वाङ्मयमिदमपार्थकम् । नह्येकवाङ्मये (या) वसाध्ये तदंशमुपयोगवत् । तत्रापि तदपरापरवाङ्मयोपयोगपरिकल्पनायामनवस्थाप्रसङ्गादिति, तत्रेदमाह–] 5

**बालानां हितकामिनामतिमहापापैः पुरोपार्जितैः,**
**माहात्म्यात्तमसः स्वयं कलिबलात् प्रायो गुणद्वेषिभिः ।** 10
**न्यायोऽयं मलिनीकृतः कथमपि प्रक्षाल्य नेनीयते,**
**सम्यग्ज्ञानजलैर्वचोभिरमलं तत्रानुकम्पापरैः ॥२॥**

[ § ३. सम्यग्ज्ञानात्मकत्वमेव प्रमाणस्य व्यवस्थापयन्नाह–]

**प्रत्यक्षलक्षणं प्राहुः स्पष्टं साकारमञ्जसा ।** 15
**द्रव्यपर्यायसामान्यविशेषार्थात्मवेदनम् ॥३॥**

[ § ४. करिष्यते हि 'सदसज्ज्ञान' इत्यादिना इन्द्रियप्रत्यक्षस्य 'परोक्षज्ञान' इत्यादिना अनिन्द्रियप्रत्यक्षस्य 'लक्षणं समम्' इत्यादिना चातीन्द्रियप्रत्यक्षस्य समर्थनमतममि ( मत इ ) न्द्रियप्रत्यक्षादिभेदेन त्रिविधमेव तदिति भवत्येव निर्णयः । तत्र–]

**हिताहिताप्तिनिर्मुक्तिक्षममिन्द्रियनिर्मितम् ।**
**यद्देशतोऽर्थज्ञानं तदिन्द्रियाध्यक्षमुच्यते ॥४॥** 20

[ § ५. कश्चिदाह–यदि साकारं निश्चयात्मकं प्रत्यक्षं तत एव निरवशेषोपाधिगमस्य

भावस्य निश्चयात् किं प्रमाणान्तरेण अपूर्वार्थाधिगमस्य तत्फलस्याभावात्, समारोपव्यवच्छेदस्य च निश्चिते समारोपाभावेनासंभवादित्यत्रेदमाह-]

**सदसज्ज्ञानसंवादविसंवादविवेकतः ।**
**सविकल्पाविनाभावी समक्षेतरसम्प्लवः ॥५॥**

5 [ § ६. नाध्यारोपव्यवच्छेदान्नापि वस्तुग्रहात्ततः, प्रामाण्यमनुमानस्य स्याद्वादन्यायविद्विषाम् । एतदेवाह- 'एकत्र' इत्यादिना । ]

**एकत्र निर्णयेऽनन्तकार्यकारणतेक्षणे ।**
**अतद्धेतुफलापोहे कुतस्तत्र विपर्ययः ? ॥६॥**

[ § ७. तन्न अभिलापवत्त्वं विकल्पलक्षणमित्येतदेवाह-]

10 **अभिलापतदंशानामभिलापविवेकतः ।**
**अप्रमाणप्रमेयत्वमवश्यमनुषज्यते ॥७॥**

[ § ८. भवतु वा किमपि सामान्यं तथापि शब्दस्मरणवच्चक्षुरादिबुद्धीनामपि व्यवसायात्मव (क) त्वमनिवार्यमेव, तदाह-]

**पदार्थज्ञानभागानां पदसामान्यनामतः ।**
15 **तथैव व्यवसायः स्याच्चक्षुरादिधियामपि ॥८॥**

[ § ९. तन्न विचारबलात् प्रत्यक्षस्य क्षणविषयत्वावगमः, स्वत एवेति चेन्न; तथैवासम्प्रतिपत्तेरेतदेवाह-]

**आत्मनाऽनेकरूपेण बहिरर्थस्य तादृशः ।**
**विचित्रं ग्रहणं व्यक्तं विशेषणविशेष्यभाक् ॥९॥**

20 [ § १०. ननु तदिदं भवतां जात्यन्तरं यत्पुरोवर्तितया प्रतिभाति नीलादिस्थूलरूपं तस्य च दूरविरलकेशादिवित्रा ( दिवद ) विद्यमानस्यैव प्रतिभासनात् कथं तद्रूपो बहिरर्थः पारमार्थिको यतस्तद्विषयत्वं प्रत्यक्षस्येति चेदत्राह-]

**अर्थज्ञानेऽसतोऽयुक्तः प्रतिभासोऽभिलापवत् ।**

[ § ११. न केवलमवयविन एव तस्य तद्विषयत्वमपि तद् (तु) द्रव्यस्यापि अक्रमवत्
25 क्रमेणापि परापरपर्यायाविष्वग्भावस्वभावस्य द्रव्यसंज्ञितस्य स्तम्भादेरविरोधादेतदेवाह-]

**परमार्थैकतानत्वपरिणामाविघातिनः ॥१०॥**

[ § १२. स्यान्मतम्-अवयवेभ्यो भिन्न एवावयवी, पर्यायेभ्यश्च द्रव्यमर्थान्तरमेव, बहिरर्था अवयवा एव वा, निरवयविनो द्रव्या एव वा, पर्यया बहिरर्थाः, ततस्तस्यैव प्रत्यक्षात् प्रतिभासो न क्रमाक्रमानेकस्वभावस्येति । तत्राह-]

30 **प्रतिज्ञातोऽन्यथाभावः प्रमाणैः प्रतिषिध्यते ।**

[ § १३. विचारज्ञानं स्वपरप्रकाशमुररीकर्त्तव्यम्, अन्यथा स्वगतपरोक्षतायास्तेनाप्रतिपत्तेरुक्तदोषापरिहारादेतदेव दर्शयितुमाह–]

**परोक्षज्ञानविषयपरिच्छेदः परोक्षवत् ॥११॥**

[ § १४. तन्न सिद्धस्य तस्य [ अर्थप्रकाशस्य ] अन्यथानुपपत्तिपरिज्ञानम्, नाप्यसिद्धस्यैव; नह्यप्रतिपन्ने धूमे तस्य पावकापेक्षं स्वप ( सुप ) रिज्ञानमन्यथानुपपन्नत्वम्, तदेवाह–] 5

**अन्यथानुपपन्नत्वमसिद्धस्य न सिद्ध्यति ।**

[ § १५. ततो मिथ्यैवेदं मतम्–'अव्यवसितैरपि व्यवसायैर्बाह्यं व्यवसीयते' इति; तदाह–]

**मिथ्याविकल्पकस्यैतद् व्यक्तमात्मविडम्बनम् ॥१२॥**

[ § १६. तदेवं प्रासङ्गिकं प्रतिपाद्य 'परोक्ष' इत्यादिकस्यैवार्थम् 'अध्यक्षम्' इत्यादिभिः 10 श्लोकैः सङ्ग्रहीतुकामः प्रथमं परप्रसिद्धेनैव अर्थज्ञानानुमानेन अर्थज्ञानस्य स्वसंवेदनविषयतां व्यवस्थापयन्नाह–]

**अध्यक्षमात्मनि ज्ञानमपरत्रानुमानिकम् ।**
**नान्यथा विषयालोकव्यवहारविलोपतः ॥१३॥**

[ § १७. पुनरप्युक्तस्यैवार्थस्य सोपपत्तिकं सङ्ग्रहमाह–] 15

**आन्तरा भोगजन्मानो नार्थाः प्रत्यक्षलक्षणाः ।**
**न धियो नान्यथेत्येते विकल्पा विनिपातिताः ॥१४॥**

[ § १८. यत्पुनरेतत्–'माभूत् सुखादीनां प्रत्यक्षत्वम्' इति; तत्राह–]

**सुखदुःखादिसंवित्तेरवित्तिर्न हर्षादयः ।** 20
**आनुमानिकभोगस्याप्यन्यभोगाविशेषतः ॥१५॥**

[ § १९. ततो न सुखादिबुद्धेरप्रत्यक्षत्वं न्याय्यम् । इतश्च [ न ] तन्न्याय्यम् इत्याह–]

**तावत्परत्र शब्दोऽयमनुमातुं कथं धियम् ।**
**यावदात्मनि तच्चेष्टासम्बन्धं न प्रपद्यते ? ॥१६॥**

[ § २०. तन्न आत्मनि बोधज्ञानमनुमानात्, लिङ्गाभावाच्च; तदाह–] 25

**विषयेन्द्रियविज्ञानमनस्कारादिलक्षणः ।**
**अहेतुरात्मसंवित्तेरसिद्धेर्व्यभिचारतः ॥१७॥**

[ § २१. 'मनस्कारादि' इत्यत्र आदिशब्देन अनुक्तपरिग्रहः । अनुक्तश्च परिच्छिन्नो विषयः, तत्परिच्छेदो वा स्यात्, सोप्यात्मसंवित्तेः मीमांसकज्ञानस्य अहेतुरगमकः इत्याह–]

**असिद्धसिद्धेरप्यर्थः सिद्धश्चेदखिलं जगत् ।** 30
**सिद्धे तत्किमतो ज्ञेयं सैव किन्नानुपाधिका ? ॥१८॥**

[§ २२. तदयं परोक्षज्ञानेत्यादेः सङ्ग्रहः, तदेव दूषणमन्यत्राप्यतिदिशन्नाह–]

**एतेन येऽपि मन्येरन्नप्रत्यक्षं धियोऽपरम् ।**
**संवेदनं न तेभ्योऽपि प्रायशो दत्तमुत्तरम् ॥१९॥**

[§ २३. ततो नाऽनात्मवेदनस्य ज्ञानस्य विषयप्रतिनियमो विवक्षितवदन्यत्रापि तस्य 5 प्रवृत्तिसंभवात् । तदेवाह–]

**विमुखज्ञा न संवेदो विरुद्धो व्यक्तिरन्यतः ।**
**असञ्चारोऽनवस्थानमविशेष्यविशेषणम् ॥२०॥**

[§ २४. साम्प्रतं 'विमुख' इत्यादिकमेव व्याख्यातुकामो यौगज्ञानदूषणं सौगतज्ञानेऽपि योजयन्निदमाह–]

10 **निराकारेतरस्यैतत् प्रतिभासभिदा यदि ।**
**तत्राप्यनर्थसंवित्तौ अर्थज्ञानाविशेषतः ॥२१॥**

[§ २५. इदानीमनवस्थानमेव संविद्विषयं पूर्वोक्तं व्यक्ति (क्ती) कुर्वन्नाह–]

**ज्ञानज्ञानमपि ज्ञानमपेक्षितपरस्तथा ।**
**ज्ञानज्ञानलताऽशेषनभस्तलविसर्पिणी ॥२२॥**
15 **प्रसज्येत, अन्यथा तद्वत्प्रथमं किन्न मृग्यते ? ।**
**गत्वा सुदूरमप्येवमसिद्धावन्यचेतसः ॥२३॥**
**असिद्धिरितरेषाञ्च तदर्थस्याप्यसिद्धितः ।**
**असिद्धो व्यवहारोऽयमतः किं कथयाऽनया ? ॥२४॥**

[§ २६. तदेवमवस्थापिते अर्थज्ञानस्यात्मवेदने सांख्यः प्राह–सत्यमर्थज्ञानं प्रत्यक्षमिति 20 नात्र विवादः, किन्तु तत् परार्थमचेतनञ्च···· तत इदमुच्यते–अर्थज्ञानमचेतनं विषयत्वात् घटादिवदिति; तत्रेदमाह–]

**प्रत्यक्षोऽर्थपरिच्छेदो यद्यकिञ्चित्करेण किम् ? ।**
**अथ नायं परिच्छेदो यद्यकिञ्चित्करेण किम् ? ॥२५॥**

[§ २७. अर्थविषयत्वञ्च यदि प्रतिविम्बमन्तरेण प्रथमप्रत्यक्षेऽपि व्यर्थं तत्कल्पनम् । 25 प्रतिविम्बेनेति चेत्; तदर्थकार्यत्वस्यापि न स्वतोऽवगमः । पूर्ववदन्यतः प्रत्यक्षादिति चेन्न; तस्याप्यर्थविषयत्व इत्याद्यनुबन्धादव्यवस्थितेः । एतदेवाह–]

**प्रत्यक्षं करणस्यार्थप्रतिबिम्बमसंविदः ।**

[§ २८. न पुरुषस्यापि वस्तु तदुपरक्तं वा चित्तं संवेद्यं संभवतीति, तदेवाह–]

**अप्रत्यक्षं स्वसंवेद्यमयुक्तमविकारिणः ॥२६॥**

30 [§ २९. यथैव तर्हि स्वरूपं संवेदनरूपेण पश्यति तदाऽर्थमर्थरूपेण इत्यर्थरूपता

अर्थस्य साधिका, संवेदनरूपता संवेदनस्येति तदाकारतैव सर्वस्य साधिका नान्यः स्वभावो भेद-कोऽपि ज्ञानस्यार्थेन घटयतीत्यत्राह– ]

**एतेन वित्तिसत्तायाः साम्यात्सर्वैकवेदनम् ।**
**प्रलपन्तः प्रतिक्षिप्ताः प्रतिबिम्बोदये समम् ॥२७॥**

[ § ३०. पुनरपि साकारवादं दूषयन्नाह– ] 5

**सारूप्येऽपि समन्वेति प्रायः सामान्यदूषणम् ।**

[ § ३१. ····इति नार्थः सारूप्येण यतः स एव तत्र तद्विशेषः स्यात् । कस्तर्हि तद्वि-शेष इति चेत्, अतदर्थपरावृत्तत्वमेव, तदेवाह– ]

**अतदर्थपरावृत्तमतद्रूपं तदर्थदृक् ॥२८॥**

[ § ३२. तदयमर्थशक्तिनियमात् संवेदनस्याधिगमनियमः इत्येतदेवोत्तरार्थं विवृण्वन्नाह– ] 10

**अथेदमसरूपं किमतदर्थनिवृत्तितः ।**
**तदर्थवेदनं न स्यादसमानामपोहवत् ॥२९॥**
**अत्राक्षेपसमाधीनामभेदे नूनमाकुलम् ।**
**स्वचित्तमात्रगर्त्तावतारसोपानपोषणम् ॥३०॥**

[ § ३३. स्यान्मतम्–'सारूप्येऽपि' इत्यादिना सारूप्यसामान्ययोः साधारणो दोषम 15 (षोऽन) न्वयः प्रतिपादितः । ततश्च कथं सारूप्यवत् सामान्यस्यापि वस्तुत्वम्? माभूदिति चेन्न; तस्य 'सामान्यविशेषार्थात्मवेदनम्' इत्यनेन प्रत्यक्षविषयत्वनिवेदनात् । अवस्तुनः प्रत्यक्षविषय-त्वानुपपत्तेरिति । तत्राह– ]

**सामान्यमन्यथासिद्धं न विज्ञानार्थयोस्तथा ।**
**अदृष्टेरर्थरूपस्य प्रमाणान्तरतो गतेः ॥३१॥** 20

[ § ३४. भवतु तर्हि प्राग्भाविन एव विषयत्वं तस्य हेतुत्वेन ज्ञाने प्रतिबन्धादिति चेन्न; ज्ञानकाले तस्याभावात् । न हि असतस्तत्काले तद्विषयत्वम्, एवं हि निर्विषयत्वमेव ज्ञानस्य स्यात् । साकारवादिनां तु नायं दोषः, स्वाकारज्ञानहेतुतयैव तस्य तद्विषयत्वोपपत्तेः····तत्राह– ]

**अतीतस्यानभिव्यक्तौ कथमात्मसमर्पणम् ? ।**
**असतो ज्ञानहेतुत्वे व्यक्तिरव्यभिचारिणी ॥३२॥** 25

[ § ३५. यदि निराकारैव व्यक्तिः, कथं ततः प्रकाशननियमो 'नीलस्यैवायं प्रकाशो न पीतादेः' इत्येवंरूप इति चेदत्राह– ]

**प्रकाशनियमो हेतोर्बुद्धेर्न प्रतिबिम्बतः ।**
**अन्तरेणापि ताद्रूप्यं ग्राह्यग्राहकयोः सतोः ॥३३॥**

[ § ३६. भवतु नाम सत्यर्थ (र्थे) हेतोरेव तत्प्रकाशननियमो न ताद्रूप्यात् । यत्र तु 30

तैमिरिकज्ञानादावर्थ एव नास्ति तत्र कथम्·····इति सिद्धं तत्केशादेस्ताद्रूप्यादेव प्रतिवेदनम्, ततस्तत्र विपर्यस्यत्येव भवदुक्तो न्यायः । तदेवाह- ]

**अनर्थाकारशङ्केषु त्रुटत्येष नयो यदि ।**

[ § ३७. उत्तरमाह- ]

5 **सर्वं समानमर्थात्मासंभाव्याकारडम्बरम् ॥३४॥**

**तद्भ्रान्तेराधिपत्येन सान्तरप्रतिभासवत् ।**

[ § ३८. इदानीं 'प्रकाशनियमो हेतोः' इत्यादिकमेव व्याचिख्यासुरवसरप्राप्तमेव चोद्यमुत्थापयति- ]

**यथैवात्मायमाकारमभूतमवलम्बते ॥३५॥**

10 **तथैवात्मानमात्मा चेदभूतमवलम्बते ।**

[ § ३९. तत्रोत्तरमाह- ]

**न स्वसंवेदनात्तुल्यं भ्रान्तेरन्यत्र चेन्मतम् ॥३६॥**

[ § ४०. तदेकयोगक्षेमत्वेन आत्माप्यनुपप्लव एव स्वपरपरिच्छेदस्वभावावपि तस्य, इति कथन्न बाह्यग्रहणम् ? तदेवाह- ]

15 **सत्यं तमाहुराचार्या विद्यया विभ्रमैश्च यः ।**

**यथार्थमयथार्थं वा प्रभुरेषोऽवलोकते ॥३७॥**

[ § ४१. ततो न ग्राह्यभेदान्नाप्याकारभेदात् संवित्तिभेदः शक्तिभेदादेव तदुपपत्तेः इत्युपपन्नमुक्तम्-'विषय' इत्यादि । ]

**विषयज्ञानतज्ज्ञानविशेषोऽनेन वेदितः ।**

20 **ग्राह्यभेदो न संवित्तिं भिनत्त्याकारभङ्ग्यपि ॥३८॥**

[ § ४२. ततो विषयसङ्कलिततज्ज्ञानस्मरणस्य अन्यथैव भावान्न ततो विषयाकारव्यवस्थापनं विज्ञानस्योपपन्नमिति चेदुच्यते-अर्थकार्यतया ज्ञानस्मृतावर्थस्मृतेर्यदि । भ्रान्त्या सङ्कलनं ज्योतिर्मनस्कारेऽपि सा भवेत्···तदिदमतिप्रसङ्गापादनं····परस्याव्युत्पत्तिमापादयति न निराकारज्ञानवादिनः, शक्तिप्रतिनियमादेव तेन तत्परिहारस्य अभिधानात् । तदेवाह- ]

25 **अर्थज्ञानस्मृतावर्थस्मृतौ नातिप्रसज्यते ।**

[ § ४३. कथं पुनर्नातिप्रसज्यते यावता निराकारज्ञानस्य साधारणतया सर्वविषयत्वं तत्स्मरणस्यैव च सर्वत्रैवानुभवविषये प्रवर्त्तनमापद्यत एवेति चेत् ; अत्र पूर्वोक्तमेव शक्तिनियममुत्तरीकुर्वन्नाह- ]

**सरूपमसरूपं वा यत्परिच्छेदशक्तिमत् ॥३९॥**

30 **तद्व्यनक्ति ततो नान्यत्,**

[ § ४४. भवतु नाम वर्तमानस्य तच्छक्तितो व्यक्तिः सति तत्र शक्तिसद्भावात् । अतीतादेस्तु कथम् असति तदभावादिति मन्यमानश्चोदति-]

**व्यक्तिश्चेदसतः कथम् ? ।**

[ § ४५. तदिदमपि दर्शनबलेन तत्रापि शक्तिमवस्थापयन् परिहरति-]

**आरादपि यथा चक्षुरचिन्त्या भावशक्तयः ॥४०॥**　　5

[ § ४६ चोद्यमाविष्कुर्वन्नाह-]

**विषमोऽयमुपन्यासः तयोश्चेत्सदसत्त्वतः ।**

[ § ४७. परिहरन्नाह-]

**यदा यत्र यथा वस्तु तदा तत्र तथा नयेत् ॥४१॥**
**अतत्कालादिरप्यात्मा,**　　10

[ § ४८. विपक्षे दोषमाह-]

**न चेन्न व्यतिष्ठते ।**

**व्यवहारविलोपो वा,**

[ § ४९. नास्त्येव देशादिभेदः प्रवृत्त्यादिरूपो व्यवहारो वा क्वचित्, तदाश्रयस्य बहिर्भावस्यैवाऽभावात् । तत्प्रतिभासस्तु विपर्यासोपनीत एव । 'प्रतिभासः समस्तोऽपि वासना-　15 बलनिर्मितः' इति वचनात् । तस्मादयमयथार्थमेव ( र्थ एव ) तदेवाह-]

**मोहाच्चेदयथार्थता ॥४२॥**

[ § ५०. तत्रोत्तरमाह- ]

**अत्यन्तमसदात्मानं सन्तं पश्यन् स किं पुनः ।**
**प्रस्फुटं विपरीतं वा न्यूनाधिकतयापि वा ॥४३॥**　　20
**प्रदेशादिव्यवायेऽपि प्रतीयन् प्रतिरुद्ध्यते ? ।**

[ § ५१. साम्प्रतं 'विपरीतं वा प्रति (ती) यन्' इत्येतत् स्मरणपर्यायेणैव ( णेव ) प्रत्यभिज्ञानादिना पर्यायेणापि दम (दर्श) यन्नाह-]

**एतेन प्रत्यभिज्ञानाद्यतीतानुमितिर्गता ॥४४॥**
**प्रायशोऽन्यव्यवच्छेदे प्रत्यग्रानवबोधतः ।**　　25
**अविज्ञाततथाभावस्याभ्युपायविरोधतः ॥४५॥**

[ § ५२. स्यान्मतम्-यदुक्तमसन्नेव केशादिः तैमिरिकस्य प्रतिभासते तद्भ्रान्तेराधिपत्येनेति; तदयुक्तम्; असतः प्रतिभासेऽतिप्रसङ्गात् व्योमकुसुमादेरपि तदापत्तेः, ततो वस्तुसन्नेव तत्केशादिः स्वप्नविषयश्चेति; तन्न;···इच्छयैव तद्भावनालक्षणया परितः कामिन्यादेरुपलम्भात्, अतो न तस्य पारमार्थिकं बहिरर्थत्वमेतदेवाह- ]　　30

**अभिन्नदेशकालानामन्येषामप्यगोचराः ।**
**विप्लुताक्षमनस्कारविषयाः किं बहिः स्थिताः ? ॥४६॥**

[§ ५३. ततो न बहिरर्थतया स्वप्नान्तिकस्य कामिन्यादेर्वा सत्त्वम्, बहिरवस्थितस्य नानाप्रतिपत्तृसाधारणत्वप्रसङ्गात् । नायं दोषः, तस्य अन्तर्देहवृत्तित्वात् इति चेत्; इदमेवोल्लिंग्य
5 (ल्लिख्य) परिहारयन्नाह- ]

**अन्तःशरीरवृत्तेश्चेददोषोऽयम् ; न; तादृशः ।**
**तत्रैव ग्रहणात् किं वा रचितोऽयं शिलाप्लवः ॥४७॥**

[§ ५४. तदिदमतिसुकुमारप्रज्ञगोचरमपि हेतुदोषम् अन्तरङ्गतमोबाहुलका [द] प्रतिपद्यमानैरेव परैः प्रकृतमनुमानमुपदर्शितमित्यावेदयन्नाह- ]

10 **विप्लुताक्षा यथा बुद्धिर्वितथप्रतिभासिनी ।**
**तथा सर्वत्र किन्नेति जडाः सम्प्रतिपेदिरे ॥४८॥**

[§ ५५. यत्पुनरेतत्-कामिन्यादिबुद्धिवत्तारङ्गचन्द्रादिवच्चेति निदर्शनम्; तत्रापि वितथप्रतिभासित्वस्य च यतः प्रतिपत्तिः तस्य चेदवितथप्रतिभासत्वं कथन्न व्यभिचारः ? वितथप्रतिभासित्वे तु ततः कथं तत्सिद्धिर्विपर्ययवत् । अतो निदर्शनस्य साध्यवैकल्या [त्] मिथ्या [त्वमा]
15 वेदयन्नाह- ]

**प्रमाणमात्मसात्कुर्वन् प्रतीतिमतिलङ्घयेत् ।**
**वितथज्ञानसन्तानविशेषेषु न केवलम् ॥४९॥**

[§ ५६. ग्राह्यादिसन्तानान्तरजीवान्तरभेदप्रतिभासस्तु विपरीतवासनाबलादविद्याबलाद्वा परिकल्पितः ... तदेवाह- ]

20 **अद्वयं द्वयनिर्भासं सदा चेदवभासते ।**

[§ ५७. तत्रोत्तरमाह-]

**न स्वतो नापि परतो भेदपर्यनुयोगतः ॥५०॥**

[§ ५८. तन्न अत्रापि विकल्पप्रतिसंहारवती वेला नाम काचिच्छक्यनिरूपणा, यतद (यतस्तद) द्वैतस्य स्वतःप्रकाशनमुपकल्प्येत । तदाह- ]

25 **प्रतिसंहारवेलायां न संवेदनमन्यथा ।**

[§ ५९. तन्न अद्वैतवादः श्रेयान् । विभ्रमवाद एवास्तु; इति चेन्न; तस्य 'विप्लुत' इत्यादिना प्रतिक्षेपात् । तदेव व्याचक्षाणास्तत्प्रतिक्षेपमेव दर्शयति-]

**इन्द्रजालादिषु भ्रान्तिमीरयन्ति नचापरम् ॥५१॥**
**अपि चाण्डालगोपालबाललोलविलोचनाः ।**

30 [§ ६०. बालादीनामपि तत्र विप्लवप्रतिपत्तिप्रसङ्गात्, न चैवम्, अविप्लवपरिज्ञानस्य तत्र तेषां भावादित्यसिद्धो हेतुः । अतश्च तद्वादिनां जडत्वमिति, ... तदाह-]

**तत्र शौद्धोदनेरेव कथं प्रज्ञाऽपराधिनी ॥५२॥**
**बभूवेति वयं तावद् बहु विस्मयमास्महे ।**
**तत्राद्यापि जनाः सक्ताः तमसो नाऽपरं परम् ॥५३॥**

[ § ६१. अपि च यद्यपरिज्ञानं तद्विप्लवस्य कथमवस्थानम् अविप्लववत् ? परिज्ञानञ्च यद्यविप्लवं कथं तदेकान्तः ? सविप्लवं चेत्कथं ततस्तत्सिद्धिः विपर्ययवत् ? तदाह–]　5

**विभ्रमे विभ्रमे तेषां विभ्रमोऽपि न सिद्ध्यति ।**

[ § ६२. तदसिद्धौ दूषणान्तरमप्याह–]

**कथमेवार्थ आकाङ्क्षानिवृत्तेरपि कस्यचित् ॥५४॥**
**व्यवहारो भवेज्जातिमूकलोहितपीतवत् ? ।**

[ § ६३. तदनेन प्रतीत्यपलापादनवधेयवचनत्वं तेषामुपदर्शयति–]　10

**अनर्थानेकसन्तानानस्थिरानविसंविदः ॥५५॥**
**अन्यानपि स्वयं प्राहुः प्रतीतेरपलापकाः ।**

[ § ६४. भवतु तत्त्वं संविदद्वैतमेवेति चेत्; दत्तमत्रोत्तरम्–'अद्वयं द्वयनिर्भासम्' इत्यादिना । तदेव विस्तरयन्नाह–]

**स्वतस्तत्त्वं कुतस्तत्र वितथप्रतिभासतः ? ॥५६॥**　15
**मिथस्तत्त्वं कुतस्तत्र वितथप्रतिभासतः ? ।**

[ § ६५. अतो विद्यत एव परस्यापि परतस्तत्प्रतिभासनमित्युपपन्न एव तदुपक्षेपः, तदेवाह–]

**यतस्तत्त्वं पृथक् तत्र मतः कश्चिद् बुधः परः ॥५७॥**
**ततस्तत्त्वं गतं केन कुतस्तत्त्वमतत्त्वतः ? ।**　20

[ § ६६. यदि निरंशस्य स्वतः परतश्च न प्रतिभासनं तदपि माभूत्; सर्वाभावस्यापि बौद्धैः सिद्धान्तीकरणादिति कश्चित् । निरंशेतरादिनित्येतरादिविकल्पनादिति परः । तत्राह–]

**यथा सत्त्वं सतत्त्वं वा प्रमासत्त्वसतत्त्वतः ॥५८॥**
**तथाऽसत्त्वमतत्त्वं वा प्रमाऽसत्त्वसतत्त्वतः ।**

[ § ६७. यदि तेषु सत्त्वस[त]त्त्वे तदा कथमसत्त्वासतत्त्वे ? ते चेत्; कथं सत्त्व- 25 सतत्त्वे इति ? तदेवाह–]

**तदसत्त्वमतत्त्वं वा परसत्त्वसतत्त्वयोः ॥५९॥**
**न हि सत्त्वं सतत्त्वं वा तदसत्त्वासतत्त्वयोः ।**

[ § ६८. स्यान्मतम्–सांवृतमपि विज्ञानमसत्त्वादिविषयमेव तत्त्वसिद्धिनिबन्धनं न सतत्त्वादिविषयमिति तन्मिथ्यात्वाविशेषात् । मिथ्याज्ञानमपि मणिप्रभामणिज्ञानमेव तन्निबन्धनम्, 30

तत्र मणिप्राप्त्या परितोषदर्शनात्, न प्रदीपप्रभामणिज्ञानं विपर्ययात्। तद्वदत्रापीति चेन्न; तत्रापि विभ्रमे तदनुपपत्तेः.....तदेवाह–]

**परितुष्यति नामैकः प्रभयोः परिधावतोः ॥६०॥**

**मणिभ्रान्तेरपि भ्रान्तौ मणिरत्र दुरन्वयः ॥**

5 [ § ६९. तदनेन साध्यसमत्वं दृष्टान्तस्य दर्शितम्। परो दृष्टान्तसमर्थनमाह–]

**सति भ्रान्तेरदोषश्चेत्;**

[ § ७०. तत्रोत्तरमाह–]

**तत्कुतो यदि वस्तु न? ॥६१॥**

**कामं सति तदाकारे तद्भ्रान्तं साधु गम्यते।**

10 [ § ७१. तन्न सांवृतं तत्त्वमित्युपपन्नम्। भवतु वास्तवमेवेति चेन्न; तस्य मिथ्याज्ञानादसिद्धेः, सर्वेषामपि तत एवाभिमतसिद्धिप्रसङ्गात्। तदाह–]

**अयमेवं नवेत्येवमविचारितगोचराः ॥६२॥**

**जायेरन् संविदात्मानः सर्वेषामविशेषतः।**

**तावता यदि किञ्चित् स्यात् सर्वेऽमी तत्त्वदर्शिनः ॥६३॥**

15 [ § ७२. शून्य-निर्विकल्पवादिनोः विचारस्यैवासंभवात्। सतोऽपि तस्य स्वांशमात्रपर्यवसानात् तदाह–]

**पर्वतादिविभागेषु स्वांशमात्रावलम्बिभिः।**

**विकल्पैरुत्तरैर्वेत्ति तत्त्वमित्यतियुक्तिमत् ॥६४॥**

[ § ७३. ततो विचारसाफल्यमभ्युपगच्छता तावद् वक्तव्यं बहिरर्थविषयत्वं विकल्पानाम्, 20 अन्यथा उपहासास्पदत्वेन तत्साफल्यानुपपत्तेः। प्रकारान्तरेणापि तेषां तद्विषयत्वं दर्शयन्नाह–]

**सन्तानान्तरसद्भूतेश्चान्यथानुपपत्तितः।**

**विकल्पोऽर्थक्रियाकारविषयत्वेन तत्परैः ॥६५॥**

**ज्ञायते,**

[ § ७४. ननु यावदर्थान्तरस्यैव जलादेर्विकल्पवेद्यत्वमनुमानेन उच्यते, तावदनर्थान्तरस्य 25 कस्मान्न कथ्यते? तदनुमानस्यापि भावात्; तथाहि–जलादिस्तद्विकल्पादनर्थान्तरं तद्वेद्यत्वात् तत्स्वरूपवत् इति चेन्न; सन्तानान्तरेण व्यभिचारात्। इदमेवाह–]

**न पुनश्चित्तमात्रेऽप्येष नयः समः।**

[ § ७५. ननु सन्तानान्तरस्य विकल्पो न तावत्प्रत्यक्षम्; परचेतसां साक्षादप्रतिभासनात्। अनुमानमिति चेन्न; लिङ्गाभावात्। व्याहारादेस्तु न लिङ्गत्वं गाढमूर्छादौ तदभावेऽपि 30 भावात्। तद्विशेषस्य तत्त्वमित्यपि न युक्तम्; असिद्धे साध्ये तस्यैव दुरवबोधत्वात्। सिद्धे

तस्मिन् तद्बुद्धिरिति चेन्न ; परस्पराश्रयात्–साध्यसिद्ध्या तद्विशेषस्य तत्सिद्ध्या च साध्यस्य व्यवस्थापनात् । तदेवाह– ]

**अन्योन्यसंश्रयान्नो चेत्,**

[ § ७६. समाधानान्तराभिधित्सया परं पृच्छन्नाह–]

**तत्किमज्ञानमेव तत् ? ॥६६॥** 5

[ § ७७. तत्रोत्तरमाह–]

**अद्वयं परचित्ताधिपतिप्रत्ययमेव वा ।**
**वीक्षते किं तमेवायं विषमज्ञ इवान्यथा ॥६७॥**

[ § ७८. तेषां [ विकल्पानाम् ] समारोपव्यवच्छेदेन फलवत्त्वात्तदेवाह– ]

**समारोपव्यवच्छेदः साध्यश्चेत् सविकल्पकैः ।** 10

[ § ७९. अत्रोत्तरमाह–]

**नैषा विकल्पना साम्याद्दोषाणामनिवृत्तितः ॥६८॥**

[ § ८०. एवं विकल्पानामर्थक्रियाकारविषयत्वव्यवस्थापनेन बहिरर्थमवस्थाप्य प्रकारान्तरेणापि तमवस्थापयन्नाह–]

**न हि जातु विषज्ञानं मरणं प्रति धावति ।** 15
**असंश्चेद् बहिरर्थात्मा प्रसिद्धोऽप्रतिषेधकः ॥६९॥**

[ § ८१ ननु यथा तस्य [बहिरर्थस्य] न प्रतिषेधकं तथा न साधकमपि । ततःसाधकबाधकप्रमाणाभावात् सन्देह एव । न च सन्दिग्धस्य प्रसिद्धत्वमिति चेदत्राह–]

**सन्देहलक्षणाभावात्, मोहश्चेद् व्यवसायकृत्; ।**
**बाधकासिद्धेः, स्पष्टाभात् कथमेष निश्चयः ? ॥७०॥** 20
**विपर्यासोऽपि किन्नेष्टः आत्मनि भ्रान्त्यसिद्धितः ? ।**

[ § ८२. भेद एव भ्रमस्तस्य चिदादौ नात्मनीति चेत्, विभ्रमेतररूपं तदेकं संवेदनं कथम् ? तथैव प्रतिभासाच्चेदेतदेवाह सौगतः–]

**अद्वयं द्वयनिर्भासमात्मन्यप्यवभासते ॥७१॥**

[ § ८३. एवं प्रक्रमानेकान्ते परेण निरूपिते सत्याह–] 25

**इतरत्र विरोधः कः एक एव स्वहेतुतः ।**
**तथा चेत् स्वपरात्मानौ सदसन्तौ समश्नुते ? ॥७२॥**

[ § ८४. तत्र विभ्रमेतराकारतया उभयाकारं संवेदनं यत् तदवस्थंभेन ( वष्टम्भेन ) क्रमानेकान्तव्यवस्थापनमिति चेदत्राह– ]

**तत्प्रत्यक्षपरोक्षाक्षक्षममात्मसमात्मनोः ।**
**तथा हेतुसमुद्भूतमेकं किन्नोपगम्यते ? ॥७३॥**
**सर्वैकत्वप्रसङ्गादिदोषोऽप्येष समो न किम् ? ।**
**भेदाभेदव्यवस्थैवं प्रतीता लोकचक्षुषः ॥७४॥**

5 [ § ८५. नहि विभ्रमाद्वस्तुपरिज्ञानमतिप्रसङ्गात्, इति चेदेतदेवाशङ्क्य परिहरन्नाह— ]

**विज्ञप्तिर्वितथाकारा यदि वस्तु न किञ्चन ।**
**भासते केवलं नो चेत् सिद्धान्तविषमग्रहः ॥७५॥**

[ § ८६. भवतु तत एव निर्णय इति चेन्न; ततोऽपि विभ्रमरूपात्तदयोगात्, अन्यतादृशादेव प्र [ ति ] सिद्धान्तादपि तद्विषयस्य तत्प्रसङ्गात्तदेवाह— ]

10 **अनादिनिधनं तत्त्वमलमेकमलं परैः ।**
**सम्प्रीतिपरितापादिभेदात् तत्किं द्वयात्मकम् ? ॥७६॥**

[ § ८७. एवं पातनिकायां प्रतिविदाह्न ( विधान ) माह— ]

**ग्राह्यग्राहकवद्भ्रान्तिस्तत्र किन्नानुषज्यते ? ।**

[ § ८८. तदेवमङ्गीकृत्य सम्प्रीत्यादिभेदं तस्य तत्प्रत्यनीकत्वमपाकृतम् । इदानीं स 15 एवोपायान्नास्तीति निवेदयन्नाह— ]

**भेदो वा सम्मतः केन हेतुसाम्येऽपि ? भेदतः ॥७७॥**
**तेषामेव सुखादीनां नियमश्च निरन्वयः ।**

[ § ८९. भवतु तर्हि विज्ञानवाद एव तस्य प्रत्यक्षबलादेवोपपत्तेः न ब्रह्मवादो विपर्ययादिति चेदत्राह— ]

20 **प्रत्यक्षलक्षणं ज्ञानं मूर्च्छितादौ कथन्न तत् ? ॥७८॥**

[ § ९०. अपि च मूर्च्छितादौ ज्ञानाभावे प्रबोधस्य कादाचित्कत्वेनाहेतुत्वायोगात् शरीरोपादानत्वप्रसङ्गात्तदाह— ]

**अज्ञानरूपहेतुस्तदहेतुत्वप्रसङ्गतः ।**
**प्रवाह एकः किन्नेष्टः तदभावाविभावनात् ? ॥७९॥**

25 [ § ९१. यद्येक आत्मा कथं प्रतिशरीरं जीवभेद···इति चेन्न सम्यगेतत्, उपाधिकल्पितेभ्यस्तेभ्यः परमात्मनोऽन्यत्वात्,···तद्विकारत्वाच्च, तस्यैव परमात्मनः खल्वेते विकाराः तथै ( त्रै ) वाह— ]

**अविप्रकृष्टदेशादिरनपेक्षितसाधनः ।**
**दीपयेत् किन्न सन्तानः सन्तानान्तरमञ्जसा ? ॥८०॥**
30 **अन्यवेद्यविरोधात्; किमचिन्त्या योगिनां गतिः ।**
**आयातमन्यथाऽद्वैतमपि चेत्थमयुक्तिमत् ॥८१॥**

[ § ९२. कथं पुनर्बहिरर्थस्य वस्तुसतः परिज्ञानम् ? न प्रतिभासात्, तस्याऽसत्यपि तस्मिन् विप्लवावस्थायां भावात् । तद्विशेषादित्यपि न युक्तम्, अजादितत्त्वादेस्तद्विशेषस्य निराकरणादिति चेन्न; तद्वत् सन्तानान्तरस्यापरिज्ञानापत्तेः, प्रत्यक्षतस्तदवेदनात्, तल्लिङ्गस्य च व्याहारादेरसत्यपि तस्मिन् विप्लवदशायां भावात्तदाह– ]

**व्यवहारादिनिर्भासो विप्लुताक्षेऽपि भावतः ।** 5
**अनाधिपत्यशून्यं तत् पारम्पर्येण चेत्; असत् ॥८२॥**
**अर्थेष्वपि प्रसङ्गश्चेत्यहेतुमपरे विदुः ।**

[ § ९३. ....ततो भवत्येव नीलतज्ज्ञानयोरभेदप्रतिपत्तिरिति चेदत्राह– ]

**सहोपलम्भनियमान्नाभेदो नीलतद्धियोः ॥८३॥**
**विरुद्धासिद्धसन्दिग्धव्यतिरेकानन्वयत्वतः ।** 10

[ § ९४. तदयं प्रतिपक्षमनपाकुर्वत एव कल्पिताद्धेतोः साध्यसिद्धिं तात्त्विकीमन्विच्छन् कथमिव प्रज्ञावन्तमात्मानं प्रेक्षावद्भ्यः प्रकटीकुर्यात्, अपि च यदि केनापि निष्ठुरहृदयेन विप्रलब्धो न भवेत्तदाह– ]

**साध्यसाधनसङ्कल्पस्तत्त्वतो न निरूपितः ॥८४॥**
**परमार्थावताराय कुतश्चित्परिकल्पितः ।** 15
**अनपायीति विद्वत्तामात्मन्याशंसमानकः ॥८५॥**
**केनापि विप्रलब्धोऽयं हा कष्टमकृपालुना ! ।**

[ § ९५. स्यादेतदेवं यदि परमाणवः प्रतीयेरन्, न चैवम्; एकैकशः समुदायेन वा तत्प्रतिपत्तेरप्रतिवेदनात् । .... तदारब्धोऽवयवीति चेन्न; परमाणूनां निरपेक्षतया तदारम्भकत्वे पृथग्दशायामपि प्रसङ्गात् । संयोगसव्यपेक्षाणां तत्त्वे; संयोगो यद्येकदेशेन, अव्यवस्थापत्तिः । 20 तदाह– ]

**तत्र दिग्भागभेदेन षडंशाः परमाणवः ॥८६॥**

[ § ९६. तस्मान्नैकदेशेन तेषां संयोगः । सर्वात्मनेति चेदत्राह– ]

**नो चेत् पिण्डोऽणुमात्रः स्यान्न च ते बुद्धिगोचराः ।**

[ § ९७. पटादेरपि परपरिकल्पितस्याभावात्, .... अभावश्च तस्य परिस्फुटमनवभास- 25 नात्तदाह– ]

**न चैकमेकरागादौ समरागादिदोषतः ॥८७॥**
**स्वतः सिद्धेरयोगाच्च, तद्वृत्तेः सर्वथेति चेत्; ।**

[ § ९८. साम्प्रतं पूर्वपक्षसमाप्तिमितिशब्देन चेच्छब्देन च पराभिप्रायं द्योतयन्नाह–'इति चेत्'इति । अत्रोत्तरमाह– ] 30

**एतत्समानमन्यत्र भेदाः संविदसंविदोः ॥८८॥**
**न विकल्पानपाकुर्यान्नैरन्तर्यानुबन्धिनः ।**
**आहुरर्थबलायातमनर्थमविकल्पकाः ॥८९॥**

[ § ९९. इदमेव अनेकान्तवादिनमुपहसतः सौगतस्य प्रत्युपहासं दर्शयन् व्याचष्टे–]

5 **चित्रं तदेकमिति चेदिदं चित्रतरं ततः ।**
**चित्रं शून्यमिदं सर्वं वेत्ति चित्रतमं ततः ॥९०॥**

[ § १००. ततो न यथोक्तं बाह्यमसत्, नापि विभ्रममात्रम्, सकलविकल्पविकलं वा, तत्प्रतिषेधस्याभिहितत्वात् । नापि संवृतिमात्र (त्रं) स्पष्टप्रतीतिविषयस्य तत्त्वानुपपत्तेः । तदाह–]

**तस्मान्नैकान्ततो भ्रान्तिर्नाऽसत्संवृतिरेव वा ।**
10 **अतश्चार्थबलायातमनेकात्मप्रशंसनम् ॥९१॥**

[ § १०१. सुगतसन्निधानात्तद् (चित्रज्ञानं) अवगम्यत इति चेन्न; अद्वैतवादे सुगतस्यैवाभावात् । भावेऽप्युत्तरमाह–]

**न ज्ञायते न जानाति न च किञ्चन भाषते ।**
**बुद्धः शुद्धः प्रवक्तेति तत्किलैषां सुभाषितम् ॥९२॥**

15 [ § १०२. न च कार्याभावादसत्त्वं कार्येण सत्त्वव्याप्तेरभावात्····इति न कार्याभावात् तद्द्वय ( तदद्वय ) स्याभावः, एतदेवाह–]

**न जातं न भवत्येव न च किञ्चित्करोति सत् ।**

[ § १०३. उत्तरमाह–]

**तीक्ष्णं शौद्धोदनेः श्रृङ्गमिति किन्न प्रकल्प्यते ? ॥९३॥**

20 [ § १०४. ततो युक्तं विज्ञानवदर्थस्यापि प्रतीतिबलादवस्थापनम् । इदानीं वक्तव्यशेषं दर्शयित्वा परिहर्तुमाह–]

**एकेन चरितार्थत्वात्तत्राविप्रतिपत्तितः ।**
**अलमर्थेन चेत्;**

[ § १०५. उत्तरमाह–]

25 **नैवमतिरूढानुवादतः ॥९४॥**

[ § १०६. ततः प्रतीतिबलाद्विज्ञानस्य यदस्तित्वं तदर्थस्यापि, यच्च अर्थस्याऽपरमार्थत्वं विशददर्शनपथप्रस्थायित्वात्तैमिरिककेशादिवत् तद् विज्ञानस्यापि स्यादविशेषात् । तदाह– ]

**कल्पना सदसत्त्वेन समा किन्तु गरीयसी ।**
**प्रतीतिप्रतिपक्षेण तत्रैका यदि नापरा ॥९५॥**

[§ १०७. न चैवं केशादेरपि तज्ज्ञानात्सिद्धिः; तत्र स्वतः परतश्च असत्यत्वस्यैव निश्चयात्, तदाह–]

**न हि केशादिनिर्भासो व्यवहारप्रसाधकः ।**

[§ १०८. पर आह–वासनाभेदात् .... । तत्रोत्तरम्–सिद्धस्तत्र .... । ]

**वासनाभेदाद्भेदोऽयम्; सिद्धस्तत्र न सिद्ध्यति ॥९६॥** 5

**तन्मात्रभावो दृष्टान्ते सर्वत्रार्थोपकारतः ।**

**पारम्पर्येण साक्षाद्वा परापेक्षाः सहेतवः ॥९७॥**

**विच्छिन्नप्रतिभासिन्यो व्यवहारादिधियो यथा ।**

[§ १०९. यथैताः परापेक्षाः तथान्येऽपि दृष्टान्ता इत्येवं साध्यवैकल्यं दृष्टान्तस्य प्रतिपाद्य इदानीं तन्मात्रभावे साध्यसिद्धिमावेदयन्नाह–] 10

**सन्निवेशादिभिर्दृष्टैर्गोपुराट्टालिकादिषु ॥९८॥**

**बुद्धिपूर्वैर्यथा तत्त्वं नेष्यते भूधरादिषु ।**

**तथा गोचरनिर्भासैर्दृष्टैरेव भयादिषु ॥९९॥**

**अबाह्यभावनाजन्यैरन्यत्रेत्यवगम्यताम् ।**

**अत्र मिथ्याविकल्पौघैरप्रतिष्ठानकैरलम् ॥१००॥** 15

[§ ११०. भवतु बहिरर्थः स तु परमाणुरूप एव तस्यैव प्रत्यक्षत्वान्न परो विपर्ययादित्युपक्षिप्य प्रत्याचक्षाण आह–]

**अत्यासन्नानसंसृष्टानणूनेवाक्षगोचरान् ।**

**अपरः प्राह; तत्रापि तुल्यमित्यनवस्थितिः ॥१०१॥**

[§ १११. तदेवं परमाणूनां प्रत्यक्षत्वं प्रत्याख्याय अवयविनस्तत्प्रत्याख्यानायां यौग- 20 मतमुपक्षिपति–]

**तत्रापि तुल्यजातीयसंयोगसमवायिषु ।**

**अत्यक्षेषु द्रुमेष्वन्यदध्यक्षमपरे विदुः ॥१०२॥**

[§ ११२. अत्र प्रतिविधानमाह– ]

**कारणस्याक्षये तेषां कार्यस्योपरमः कथम् ? ।** 25

[§ ११३. ततः शाखाचलनमेव वृक्षस्यापि चलनमिति कथं शाखातादात्म्यं वृक्षस्य प्रतीतिसिद्धं न भवेत्, यतस्तत्र अर्थान्तरसम्बन्धप्रतिज्ञा प्रतीतिप्रतिक्षिप्ता हेतवश्च विरुद्धा न भवेयुः । तदेवाह–]

**समवायस्य वृक्षोऽत्र शाखास्वित्यादिसाधनैः ॥१०३॥**

**अनन्यसाधनैः सिद्धिरहो लोकोत्तरा स्थितिः ! ।** 30

[ § ११४. कुतः पुनः समवायाभावे 'शाखासु वृक्षः' इति प्रत्ययः ? इति चेदत्राह-]

**अध ऊर्ध्वविभागादिपरिणामविशेषतः ॥१०४॥**
**तानेव पश्यन् प्रत्येति शाखाः वृक्षेऽपि लौकिकः ।**

[ § ११५. इति नावधिभ्यः [ परमाणुभ्यः ] स्थूलमर्थान्तरम्, अर्थान्तरत्वे पुनरपि 5 तदाशङ्कापूर्वं दूषणमाह-]

**तुलितद्रव्यसंयोगे स्थूलमर्थान्तरं यदि ॥१०५॥**
**तत्र रूपादिरन्यश्च साक्षैरीक्ष्येत सादरैः ।**

[ § ११६. तत्रैव दूषणान्तरमाह-]

**गौरवाधिक्यतत्कार्यभेदाश्च,**

10 [ § ११७. अत्र परस्य परिहारमाह-]

**आसूक्ष्मतः किल १०६॥**
**अतौल्यादर्थराशेस्तद्विशेषानवधारणम्; ।**

[ § ११८. तन्नातौल्याद् गुरुत्वादेस्तत्राप्यनवधारणम् । आहासिद्धत्वमप्यस्य हेतोः सम्प्रति शास्त्रकृत्- ]

15 **ताम्रादिरक्तिकादीनां समितक्रमयोगिनाम् ॥१०७॥**
**कथमातिलकात्स्थूलप्रमाणानवधारणे ।**
**अल्पभेदाग्रहान्मानमणूनामनुषज्यते ॥१०८॥**
**अंशुपातानुमादृष्टेरन्यथा तु प्रसज्यते ।**

[ § ११९. अपि परमाणुपर्यन्तमध्यपातिनामवयवविशेषाणाम् अशक्येयत्तातोलनानां यद्य-20 भावः पर्यन्तोऽप्यवयवी न भवेत्, तस्याप्यवयवाधारस्यैवाभ्युपगमात् । भावश्चेत्तत्राह-]

**क्षीराद्यैरविजातीयैः प्रक्षिप्तैः क्रमशो घटः ॥१०९॥**
**तावद्भिरेव पूर्येत यावद्भिर्न विपर्ययैः ।**

[ § १२०. साम्प्रतं परमताक्षेपपुरस्सरं स्वमतमाह-]

**नांशेष्वंशी न तेऽत्रान्ये वीक्ष्या न परमाणवः ॥११०॥**
25 **आलोक्यार्थान्तरं कुर्यादत्रापोद्धारकल्पनाम् ।**

[ § १२१. तदेवं 'परोक्षज्ञानविषय' इत्यादिना आत्मवेदनम्, 'एतेन वित्तिसत्तायाः' इत्यादिना चार्थवेदनं व्यवस्थापयता कारिकोपात्तमात्मपदमर्थपदं व्याख्यातम् । इदानीं तदुपात्तं द्रव्यपदं व्याचिख्यासुराह-]

**गुणपर्ययवद् द्रव्यं ते सहक्रमवृत्तयः ॥१११॥**
30 **विज्ञानव्यक्तिशक्त्याद्या भेदाभेदौ रसादिवत् ।**

[ § १२२. किं गुणग्रहणेन पर्यायवद्द्रव्यमित्येवास्तु, गुणानामपि परिच्छिन्नायन (तं)-रूपतया पर्ययेष्वन्तर्भावादिति चेदत्राह–]

**सदापि सविकल्पाख्यासाधनाय क्रमस्थितेः ॥११२॥**
**गुणपर्यययोर्नैक्यमिति सूत्रे द्वयग्रहः।**
**गुणवद्द्रव्यमुत्पादव्ययध्रौव्यादयो गुणाः ॥११३॥** 5
**अद्रवद् द्रवति द्रोष्यत्येकानेकं स्वपर्ययम्।**
**भेदज्ञानात् प्रतीयेते प्रादुर्भावात्ययौ यदि ॥११४॥**
**अभेदज्ञानतः सिद्धा स्थितिरंशेन केनचित्।**

[ § १२३. ततः सर्वं सत् उत्पादादित्रयात्मकमेव नोत्पादाद्यन्यतमैकान्तात्मकं तदप्रतिपत्तेरेतदेवाह– ] 10

**सदोत्पादव्ययध्रौव्ययुक्तं सत्, असतोऽगतेः ॥११५॥**

[ § १२४. ननु ध्रौव्यं नाम दधिपर्यायस्य उत्तरतत्पर्यायेणैकत्वं तच्च तेनैव कुतो न करभपर्यायेणापि? देशादिभेदस्य प्रकृतेऽप्यविशेषादिति चेदत्राह– ]

**तादात्म्यनियमो हेतु-फलसन्तानवद्भवेत्।**

[ § १२५. भवतु तदुभयमपि क्षणिकमेवेति चेदत्राह– ] 15

**भिन्नमन्तर्बहिः सर्वं युगपत्क्रमभावि, न ॥११६॥**
**प्रत्यक्षं न तु साकारं क्रमयुक्तमयुक्तिमत्।**

[ § १२६. एतदेव लोकप्रसिद्धेनोदाहरणेन दर्शयन्नाह– ]

**प्रत्यक्षप्रतिसंवेद्यः कुण्डलादिषु सर्पवत् ॥११७॥**

[ § १२७. तदेवं मूलकारिकानिर्दिष्टयोः द्रव्यपर्यायपदयोः व्याख्यानं कृत्वा सामान्यविशेषपदयोः तद्दर्शयति–] 20

**समानभावः सामान्यं विशेषोऽन्यव्यपेक्षया।**

[ § १२८. तदेवं द्रव्यपर्यायसामान्यविशेषात्मकत्वं भावस्य प्रपञ्चोक्तमुपसंहृत्य दर्शयन्नाह–]

**स्वलक्षणमसङ्कीर्णं समानं सविकल्पकम् ॥११८॥**
**समर्थं स्वगुणैरेकं सहक्रमविवर्तिभिः।** 25

[ § १२९. सहविवर्त्तिभिरेकमित्येतदसहमानस्य मतमाशङ्कते–]

**यदि शेषपरावृत्तेरेकज्ञानमनेकतः ॥११९॥**

[ § १३०. अत्रोत्तरमाह– ]

**अन्वर्थमन्यथाभासमनंशानां न राशयः।**

[ § १३१. सिद्धा तर्हि क्षणभङ्गस्यापि प्रत्यक्षे तद्वदप्रतिपत्तिरेतदेवाह– ] 30

**तथायं क्षणभङ्गो न ज्ञानांशः सम्प्रतीयते ॥१२०॥**
**अर्थाकारविवेको न विज्ञानांशो यथा क्वचित् ।**

[§ १३२. एवं स्थिते परिणामस्य निर्व्याकुलत्वात् तमेव वस्तुलक्षणमागमाविरोधेन कथयन् तल्लक्षणं तत्त्वार्थसूत्रेण दर्शयति-]

5 **'तद्भावः परिणामः' स्यात् सविकल्पस्य लक्षणम् ॥१२१॥**

[§ १३३. तत्रैवानुमानमाह- ]

**तदेव वस्तु साकारमनाकारमपोद्धृतम् ।**

[§१३४. यत्पुनरिदमनेकान्तव्या ( निरा ) करणाय व्यासस्य सूत्रम्-'नैकस्मिन्नसम्भवात्' इति । अस्यार्थः नानेकान्तवादो युक्तः । कुत एतत् ? एकस्मिन् धर्मिणि सदसत्त्वनित्य-
10 त्वानित्यत्वनानैकत्वादीनां विरुद्धधर्माणामसंभवादिति तत्राह-]

**भेदानां बहुभेदानां तत्रैकत्रापि सम्भवात् ॥१२२॥**

[§ १३५. तन्नैकत्र भेदसंभवः तस्यैवैकस्याभावादिति, तत्राह-]

**अन्वयोऽन्यव्यवच्छेदो व्यतिरेकः स्वलक्षणम् ।**
**ततः सर्वा व्यवस्थेति नृत्येत्काको मयूरवत् ॥१२३॥**

15 [§ १३६. कुतश्च स्वलक्षणस्यान्वयस्य वा प्रतिपत्तिः, अप्रतिपत्तौ ताभ्यामेव सर्वव्यवस्थितिप्रतिज्ञानुपपत्तेः । यथासंख्येन प्रत्यक्षादनुमानाच्चेति चेन्न; प्रत्यक्षस्य यथाकल्पनमप्रतिपत्तेः····अनुमानस्य च यथा नाभिजल्पसम्पर्कयोग्याकारस्य प्रतिपत्तिः तथा निवेदितमेव । अप्रतिपन्नादपि तत एव तत्प्रतिपत्तिरिति चेदत्राह-]

**प्रामाण्यं नाऽगृहीतेऽर्थे प्रत्यक्षेतरगोचरौ ।**
20 **भेदाभेदौ प्रकल्प्येते कथमात्मविकल्पकैः ? ॥१२४॥**

[§ १३७ . इति स्थितम्-सामान्यविशेषात्मकत्वं प्रत्यक्षविषयस्य । साम्प्रतमुक्तमेवार्थमनुग्रहपरत्वाच्छिष्याणामनुस्मरणाय श्लोकानां त्रिंशत्या सङ्गृह्य कथयन्नाह-]

**उत्पादविगमध्रौव्यद्रव्यपर्यायसङ्ग्रहम् ।**
**सद्, भिन्नप्रतिभासेन स्याद्भिन्नं सविकल्पकम् ॥१२५॥**

25 [§ १३८. यद्येवं भिन्नमेव तदस्तु नाभिन्नमित्यत्राह-]

**अभिन्नप्रतिभासेन स्यादभिन्नं स्वलक्षणम् ।**

[§ १३९. कथं पुनः परस्परविरुद्धभेदाभेदधर्माधिष्ठानमेकं वस्त्विति चेदाह--]

**विरुद्धधर्माध्यासेन स्याद्विरुद्धं न सर्वथा ॥१२६॥**

[§ १४०. एतदेव कुत इत्याह-]

**स्यादसम्भवतादात्म्यपरिणामप्रतिष्ठितम् ।**
**समानार्थपरावृत्तमसमानसमन्वितम् ॥१२७॥**

[ § १४१. कुतः पुनस्तदित्थमित्याह–]

**प्रत्यक्षं बहिरन्तश्च परोक्षं स्वप्रदेशतः ।**

[ § १४२. कथं पुनरेकमेव स्वलक्षणं तथा प्रत्यक्षं परोक्षञ्चेति चेदत्राह–] 5

**सुनिश्चितमनेकान्तमनिश्चितपरापरैः ॥१२८॥**

[ § १४३. स्यान्मतम्–उपादानोपादेयलक्षणसन्तानादन्यत् क्रमाऽनेकान्तं परमाणुसमुदायादवयव्यादेश्चार्थान्तरमक्रमानेकान्तमपि दुर्विवेचनमेवेति; तत्राह–]

**सन्तानसमुदायादिशब्दमात्रविशेषतः ।**

[ § १४४. उपादानमपि न प्रत्यभिज्ञानादन्यतः शक्यसमर्थनम्····ततः तत्समर्थना- 10 दपि अनेकान्तमेव सुनिश्चितमित्यावेदयन्नाह–]

**प्रत्यभिज्ञाविशेषात्तदुपादानं प्रकल्पयेत् ॥१२९॥**
**अन्योन्यात्मपरावृत्तभेदाभेदावधारणात् ।**
**मिथ्याप्रत्यवमर्शेभ्यो विशिष्टात् परमार्थतः ॥१३०॥**

[ § १४५. तदिति स्मरणमिदमिति प्रत्यक्षम्, न ताभ्यां भिन्नमन्यत् प्रत्यभिज्ञानं यत- 15 स्तयोरवधारणमिति चेदत्राह–]

**तथाप्रतीतिमुल्लंघ्य यथास्वं स्वयमस्थितेः ।**
**नानैकान्तग्रहग्रस्ता नान्योन्यमतिशेरते ॥१३१॥**

[ § १४६. भवतु तत्र सुनिश्चितमनेकान्तं यत्र पूर्ववदुत्तरस्यापि दर्शनं प्रत्यभिज्ञानस्य तन्निश्चयहेतोस्तत्र संभवात् । यत्र तु पूर्वस्यैव दर्शनं न परस्य तत्र कथं संभवात् (वः) नह्यप्र- 20 तिपन्नस्य पूर्वाभेदेन अन्यथा वा प्रत्यभिज्ञानं संभवतीति चेदत्राह–]

**शब्दादेरुपलब्धस्य विरुद्धपरिणामिनः ।**
**पश्चादनुपलम्भेऽपि युक्तोपादानवद्गतिः ॥१३२॥**

[ § १४७. युक्तमुपादानस्योपलब्धाच्छब्दादेरनुमानम् तस्य निरुपादानस्यायोगात् । नोपादेयस्य; कारणस्य कार्यवत्त्वनियमाभावादिति चेदत्राह–] 25

**तस्याऽदृष्टमुपादानमदृष्टस्य न तत्पुनः ।**
**अवश्यं सहकारीति विपर्यस्तमकारणम् ॥१३३॥**

[ § १४८. निगमयन्नाह–]

**तदेवं सकलाकारं तत्स्वभावैरपोद्धृतैः ।**
**निर्विकल्पं विकल्पेन नीतं तत्त्वानुसारिणा ॥१३४॥** 30

**समानाधारसामान्यविशेषणविशेष्यताम्[1] ।**

[§ १४९. तदेवं वस्तुभूतादेव धर्मभेदात् व्यवहारोपपत्तौ यत्तदर्थं व्यावृत्तिभेदेन जातिभेदोपकल्पनं तस्यायुक्तत्वं तत्कल्पनाकृताञ्च अस्थानभीरुत्वं दर्शयन्नाह–]

**अत्र दृष्टविपर्यस्तमयुक्तं परिकल्पितम् ॥१३५॥**
**मिथ्याभयानकग्रस्तैः मृगैरिव तपोवने ।**

[§ १५०. मिथ्याभयानकत्वमेव तेषां दर्शयन्नाह–]

**यस्यापि क्षणिकं ज्ञानं तस्यासन्नादिभेदतः ॥१३६॥**
**प्रतिभासभिदां धत्तेऽसकृत्सिद्धं स्वलक्षणम् ।**
**विलक्षणार्थविज्ञाने स्थूलमेकं स्वलक्षणम् ॥१३७॥**
**तथा ज्ञानं तथाकारमनाकारनिरीक्षणे ।**
**अन्यथाऽर्थात्मनस्तत्त्वं मिथ्याकारैकलक्षणम् ॥१३८॥**

[§ १५१. सदादिरूपस्यैव तत्र दर्शनं न तद्विवेकस्येति चेदत्राह–]

**विज्ञानप्रतिभासेऽर्थविवेकाप्रतिभासनात् ।**
**विरुद्धधर्माध्यासः स्यात् व्यतिरेकेण चक्रकम् ॥१३९॥**

[§ १५२. तन्न जीवति स्थूलज्ञाने निर्भागज्ञानसंभवो यतः परमाणुसिद्धिः, तदसिद्धौ यदन्यत्प्राप्तं तदप्याह–]

**प्रतिक्षणं विशेषा न प्रत्यक्षाः परमाणुवत् ।**
**अतदारम्भतया बुद्धेरर्थाकारविवेकवत् ॥१४०॥**

[§ १५३. एवञ्च यज्जातं परस्य तद्दर्शयन्नाह–]

**अत्यन्ताभेदभेदौ न तद्वतो न परस्परम् ।**
**दृश्यादृश्यात्मनोर्बुद्धिनिर्भासक्षणभङ्गयोः ॥१४१॥**
**सर्वथाऽर्थक्रियाऽयोगात्, तथा सुप्तप्रबुद्धयोः ।**
**अंशयोर्यदि तादात्म्यमभिज्ञानमनन्यवत् ॥१४२॥**

[§ १५४. इदानीं तेन द्रव्यपर्यायादीनामन्योन्यात्मकत्वेन भावः इति परिणामलक्षणं सङ्गृह्य दर्शयन्नाह–]

**संयोगसमवायादिसम्बन्धाद्यदि वर्त्तते ।**
**अनेकत्रैकमेकत्रानेकं वा; परिणामिनः ॥१४३॥**

[§ १५५. भवतु सामान्यं तत्तु विजातीयव्यावृत्तिरूपमेव ... इति चेदत्राह–]

---

१ एतदनन्तरम् 'अत एवाह–' इति कृत्वा '**भेदानां बहुभेदानां तत्रैकत्रापि सम्भवात्**' इति कारिकांशः पुनरप्युक्तः । परं विवरणकृताऽव्याख्याततत्वात् स विवरणकारेणैव अनुस्मृत इति प्रतिभाति ।

**अतद्धेतुफलापोहमविकल्पोऽभिजल्पति ।**

[ § १५६. साम्प्रतं तस्य वस्तुषु भावादीनां वस्तुसामान्यसाधनत्वेन विरुद्धत्वमावेदयन्नाह–]

**समानाकारशून्येषु सर्वथाऽनुपलम्भतः ॥१४४॥**
**तस्य वस्तुषुभावादिसाकारस्यैव साधनम् ।**
**न विशेषा न सामान्यं तान् वा शक्त्या कयाचन ॥१४५॥** 5
**तद्विभर्त्ति स्वभावोऽयं समानपरिणामिनाम् ।**

[ § १५७. भिन्नमेव सामान्यं विशेषेभ्यः तदाधेयञ्च, खण्डादिषु गोत्वमिति प्रतिपत्तेः तत्कथं ते तन्न बिभ्रति ? इदि चेदत्राह–]

**अप्रसिद्धं पृथक्सिद्धम् उभयात्मकमञ्जसा ॥१४६॥**

[ § १५८. ततः सांवृतमेतत्, अस्थूलादिव्यावृत्त्या स्थूलादेः संवृत्या कल्पनादिति 10 चेदत्राह–]

**सन्निवेशादिवद्वस्तु सांवृतं किन्न कल्प्यते ? ।**

[ § १५९. निरंशार्थप्रवादे हि वस्तुनः सर्वथा ग्रहात् । न कचिद्विभ्रमो नाम भवेदित्याह शास्त्रकृत्–]

**समग्रकरणादीनामन्यथा दर्शने सति ॥१४७॥** 15
**सर्वात्मनां निरंशत्वात् सर्वथा ग्रहणं भवेत् ।**

[§ १६०. भवतु तस्य [चन्द्रस्य] एकत्वादिनेव वर्तुलत्वादिनाप्यग्रहणमेवेति चेदत्राह–]

**नौयानादिषु विभ्रान्तो न न पश्यति बाह्यतः ॥१४८॥**

[ § १६१. पश्यन्नपि असदेव पश्यतीति चेदाह–]

**न च नास्ति स आकारः ज्ञानाकारेऽनुषङ्गतः ।** 20

[ § १६२. तस्माद् दृश्येतरात्मत्वमनेकान्तावलम्बनम्, इदमेवाह–]

**तस्माद् दृष्टस्य भावस्य न दृष्टः सकलो गुणः ॥१४९॥**

[ § १६३. तदेवं रूपसंस्थानात्मकत्ववद् दृश्येतरात्मकत्वञ्च सामान्यविशेषात्मके वस्तुनि व्यवस्थिते सति यत् परस्यापद्यते, तदाह–]

**प्रत्यक्षं कल्पनापोढं प्रत्यक्षादिनिराकृतम् ।** 25

[ § १६४. निगमयन्नाह–]

**अध्यक्षलिङ्गतः सिद्धमनेकात्मकमस्तु सत् ॥१५०॥**
**सत्यालोकप्रतीतेऽर्थे सन्तः सन्तु विमत्सराः ।**

[ § १६५. साम्प्रतं सदृशपरिणामं सामान्यमनभ्युपगच्छतो वैशेषिकादेः तद्व्यवहार एव न संभवति तत्परिकल्पितस्य सामान्यस्यानुपपत्तेरिति दर्शयितुं प्रथमं तावत् परसामान्यं सत्त्वमेव 30

प्रत्याचष्टे, समानन्यायतया तत्प्रत्याख्यानादेव द्रव्यत्वादेरपरसामान्यस्यापि प्रत्याख्यानोपनीता-(नीतत्वा) त्–]

**नित्यं सर्वगतं सत्त्वं निरंशं व्यक्तिभिर्यदि ॥१५१॥**
**व्यक्तं व्यक्तं सदा व्यक्तं त्रैलोक्यं सचराचरम् ।**
**सत्तायोगाद्विना सन्ति यथा सत्तादयस्तथा ॥१५२॥**
**सर्वेऽर्थाः देशकालाश्च सामान्यं सकलं मतम् ।**
**सर्वभेदप्रभेदं सत् सकलाङ्गशरीरवत् ॥१५३॥**
**तत्र भावाः समाः केचिन्नापरे चरणादिवत् ।**

[§ १६६. साम्प्रतं प्रस्तुतप्रस्तावार्थविस्तारमुपसंहृत्य दर्शयन्नाह–]

**एकानेकमनेकान्तं विषमं च समं यथा ॥१५४॥**
**तथा प्रमाणतः सिद्धमन्यथाऽपरिणामतः ।**

[§ १६७. ततो व्यवस्थितं व्यवसायात्मकं विशदं द्रव्यपर्यायसामान्यविशेषात्मार्थवेदनं प्रत्यक्षमिति । किमनेन तल्लक्षणेन प्रत्यक्षं कल्पनापोढमभ्रान्तमित्येवास्तु निर्दोषत्वात् ? इति चेदुच्यते–]

**अविकल्पकमभ्रान्तं प्रत्यक्षं न पटीयसाम् ॥१५५॥**
**अविसंवादनियमादक्षगोचरचेतसाम् ।**

[§ १६८. तत्र विकल्पजननात् प्रत्यक्षप्रामाण्यं विकल्पस्यैव मुख्यतस्तदुपनिपातात् । विकल्पानामयथार्थत्वान्नेति चेदत्राह–]

**सर्वथा वितथार्थत्वं सर्वेषामभिलापिनाम् ॥१५६॥**
**ततस्तत्त्वव्यवस्थानं प्रत्यक्षस्येति साहसम् ! ।**

[§ १६९. इदानीं मानसमपि तत्प्रत्यक्षं प्रतिषेद्धुं कारिकापादत्रयेण परप्रसिद्धं तत्स्वरूपमुपदर्शयति–]

**अक्षज्ञानानुजं स्पष्टं तदनन्तरगोचरम् ॥१५७॥**
**प्रत्यक्षं मानसं चाहः;**

[§ १७०. तदिदानीं निराकुर्वन्नाह–]

**भेदस्तत्र न लक्ष्यते ।**

[§ १७१. शान्तभद्रस्त्वाह–यद्यपि प्रत्यक्षतस्तस्य तस्माद्भेदो न लक्ष्यते, कार्यतो लक्ष्यत एव । कार्यं हि नीलादिविकल्परूपं स्मरणापरव्यपदेशं न कारणमन्तरेण कादाचित्कत्वात् । न चाक्षज्ञानमेव तस्य कारणं सन्तानभेदात् प्रसिद्धसन्तानान्तरज्ञानवत् । ततोऽन्यदेव अक्षज्ञानात् तत्कारणम्, तदेव च मानसं प्रत्यक्षमित्येतदेव दर्शयित्वा प्रत्याचिख्यासुराह– ]

**अन्तरेणेदमक्षानुभूतं चेन्न विकल्पयेत् ॥१५८॥**

**सन्तानान्तरवच्चेतः समनन्तरमेव किम् ? ।**
**शष्कुलीभक्षणादौ चेत्तावन्त्येव मनांस्यपि ॥१५९॥**
**यावन्तीन्द्रियचेतांसि प्रतिसन्धिर्न युज्यते ।**

[ § १७२. तन्न तावत्त्वं मनसामुपपन्नम्, अथैकमेव सकलरूपादिविषयं तेभ्यो मनस्तदाह– ] 5

**अथैकं सर्वविषयमस्तु;**

[ § १७३. अत्रोत्तरम्– ]

**किं वाऽक्षबुद्धिभिः ? ॥१६०॥**

[ § १७४. साम्प्रतं मनसामक्रमोत्पत्ता उक्तं प्रतिसन्ध्यभावं क्रमोत्पत्तावपि दर्शयन्नाह– ]

**क्रमोत्पत्तौ सहोत्पत्तिविकल्पोऽयं विरुद्ध्यते ।** 10
**अध्यक्षादिविरोधः स्यात्तेषामनुभवात्मनः ॥१६१॥**

[ § १७५. तन्न शान्तभद्रपक्षो ज्यायान् । धर्मोत्तरस्त्वाह–न प्रत्यक्षादिप्रसिद्धत्वात् मानसं प्रत्यक्षमिष्यते यतोऽयं दोषः किन्तु आगमाधीनत्वात् । तत्र च परे दोषमुत्पादयन्ति–यदि मानसमपि किञ्चित् प्रत्यक्षं तर्हि नान्धो नाम कश्चित् लोचनविकलस्यापि तत्सम्भवात्; इति तत्परिहाराय तल्लक्षणप्रणयनम्–'इन्द्रियज्ञानेन' इत्यादि । न हीन्द्रियज्ञानमन्धस्य यतस्तदुपादानस्य मानसप्रत्यक्षस्य तत्र भावात्तद्व्यवहारो न भवेदिति; तत्रोत्तरमाह– ] 15

**वेदनादिवदिष्टं चेत्; कथन्नातिप्रसज्यते ? ।**

[ § १७६. यत्पुनरुक्तम्–विप्रतिपत्तिनिराकरणाय तल्लक्षणमुच्यते इति; तत्राह– ]

**प्रोक्षितं भक्षयेन्नेति दृष्टा विप्रतिपत्तयः ॥१६२॥**
**लक्षणं तु न कर्त्तव्यं प्रस्तावानुपयोगिषु ।** 20

[ § १७७. साम्प्रतमविकल्पकमित्यादिना सामान्यतः प्रतिक्षिप्तमपि स्वसंवेदनप्रत्यक्षं युक्त्यन्तरेण प्रतिक्षिपन्नाह– ]

**अध्यक्षमात्मवित्सर्वज्ञानानामभिधीयते ॥१६३॥**
**स्वापमूर्च्छाद्यवस्थोऽपि प्रत्यक्षी नाम किं भवेत् ? ।**

[ § १७८. तदवस्थस्य ज्ञानमेव नास्ति, तद्भावे जाग्रत इव तत्त्वविरोधात्, ततः कथमात्मवेदनं यतोऽयं प्रसङ्ग इति प्रज्ञाकरो ब्रह्मवादी च····तत्रोत्तरं दर्शयति– ] 25

**विच्छेदे हि चतुःसत्यभावनादिर्विरुद्ध्यते ॥१६४॥**

[ § १७९. तन्न निश्चयविकलं संवित्तिमात्रमेव प्रत्यक्षम् । अत्रैवोपपत्त्यन्तरमाह– ]

**प्रायशो योगिविज्ञानमेतेन प्रतिवर्णितम् ।**

[ § १८०. साम्प्रतं सांख्यस्य प्रत्यक्षलक्षणं प्रत्याचक्षाण आह– ] 30

**श्रोत्रादिवृत्तिः प्रत्यक्षं यदि तैमिरिकादिषु ॥१६५॥**
**प्रसङ्गः किमतद्वृत्तिस्तद्विकारानुकारिणी ? ।**

[§ १८१. साम्प्रतं नैयायिकस्य प्रत्यक्षलक्षणमुपदर्श्य निराकुर्वन्नाह-]

**तथाऽक्षार्थमनस्कारसत्त्वसम्बन्धदर्शनम् ॥१६६॥**
5 **व्यवसायात्मसंवाद्यव्यपदेश्यं विरुद्ध्यते ।**

[§ १८२. पुनरपि नैयायिकस्य विरुद्धं दर्शयति-]

**नित्यः सर्वगतो ज्ञः सन् कस्यचित्समवायतः ॥१६७॥**
**ज्ञाता द्रव्यादिकार्थस्य नेश्वरज्ञानसंग्रहः ।**

[§ १८३. भवताऽपि कस्मादतीन्द्रियप्रत्यक्षस्य लक्षणान्तरं नोच्यते ? इति चेदत्राह-]

10 **लक्षणं सममेतावान् विशेषोऽशेषगोचरम् ॥१६८॥**
**अक्रमं करणातीतमकलङ्कं महीयसाम् ॥१६८½॥**

[§ १८४. भवतु तर्हि तत्सुगतस्यैव तत्रैव तल्लिङ्गस्य तत्त्वोपदेशस्य भावात् इति चेत्; सत्यमिदं यदि तत्त्वोपदेश एव तत्र भवेत्, न चैवमत एवाह-]

**ज्ञात्वा विज्ञप्तिमात्रं परमपि च बहिर्भासिभावप्रवादम्,**
15 **चक्रे लोकानुरोधात् पुनरपि सकलन्नेति तत्त्वं प्रपेदे ।**
**न ज्ञाता तस्य तस्मिन्न च फलमपरं ज्ञायते नापि किञ्चित्,**
**इत्यश्लीलं प्रमत्तः प्रलपति जडधीराकुलं व्याकुलाप्तः ॥१६९½॥**

इति न्यायविनिश्चये प्रथमः प्रत्यक्षप्रस्तावः ॥



## २. द्वितीयः अनुमानप्रस्तावः ।

20 [§ १८५. इदानीं परोक्षस्य तथानिरूपणमवसरप्राप्तमिति तत्प्रभेदमनुमानं निरूपयन्नाह-]

**साधनात् साध्यविज्ञानमनुमानं तदत्यये ॥१७०॥**
**विरोधात् क्वचिदेकस्य विधानप्रतिषेधयोः ।**

[§ १८६. प्रत्यक्षस्यापि न वस्तुतः स्वार्थपरिच्छेदः तत्काले तदर्थस्य कारणत्वेन व्यतिक्रमादपि तु तदाकारस्वरूपपरिच्छेदस्य तत्रारोपादौपचारिकवत् (कं तत्) तथाऽनुमानस्यापि 25 तत्परिच्छेदसाधने सिद्धसाधनमिति चेदत्राह-]

**प्रत्यक्षं परमात्मानमपि च प्रतिभासयेत् ॥१७१॥**
**सत्यं परिस्फुटं येन तथा प्रामाण्यमश्नुते ।**

[ § १८७. इदानीं साध्यं निरूपयन्नाह-]

**साध्यं शक्यमभिप्रेतमप्रसिद्धम्,**

[ § १८८. साध्याभासं निरूपयति-]

**ततोऽपरम् ॥१७२॥**

**साध्याभासं विरुद्धादि साधनाविषयत्वतः ।** 5

[ § १८९. यद्यप्रसिद्धं साध्यं धर्मिणो विद्यमानमपि साध्यं भवेत् तत्रापि विप्रतिपत्तेः संभवात्तथाह-]

**जातेर्विप्रतिपत्तीनां सत्ता साध्यानुषज्यते ॥१७३॥**

[ § १९०. तत्रोत्तरमाह- ]

**तथेष्टत्वाददोषोऽयम्,** 10

[ § १९१. पर इदानीमशक्यसाध्यतां तस्यां [सत्तायां] दर्शयन्नाह-]

**हेतोर्दोषत्रयं यदि ।**

[ § १९२. शास्त्रकारस्तु उभयाभावधर्मयोरनभ्युपगमं परिहारं मन्यमानः परिहारान्तरमनुक्त्वा भावधर्मस्य असिद्धत्वमेव परिहरन्नाह-]

**भ्रान्तेः पुरुषधर्मत्वाद्यथावस्तुबलागमम् ॥१७४॥** 15

**प्रपेदे सर्वथा सर्वस्तुसत्तां प्रतिक्षिपन् ।**

[ § १९३. ततः प्रतिष्ठापरिहारेण प्रतिक्षेपमेव ब्रुवता तात्त्विकमेव भावधर्मत्वं तस्याभ्युपगन्तव्यं तथाह-]

**भावनादभ्युपैतिस्म भावधर्ममवस्तुनि ॥१७५॥**

[ § १९४. तदेवं निरुपाधिकं सत्त्वं प्रसाध्य सोपाधिकं साधयन्नाह-] 20

**असिद्धधर्मिधर्मत्वेऽन्यथाऽनुपपत्तिमान् ।**

**हेतुरेव यथा सन्ति प्रमाणानीष्टसाधनात् ॥१७६॥**

**इष्टसिद्धिः परेषां वा तत्र वक्तुरकौशलम् ।**

[ § १९५. ततः सत्येव भेदाभेदात्मिका तदिष्टसिद्धिरिदमेवाह-]

**अतीतानागतादीनामपि सत्तानुषङ्गवत् ॥१७७॥** 25

**अतश्च बहिरर्थानामपि सत्ता प्रसाध्यते ।**

[ § १९६. ततः प्रत्यक्षादर्थसाधनोपपत्तेः स्थितमेतत्-'अतश्च' इत्यादि । यदि चायं निर्बन्धो न ततस्तत्साधनमिति तथापि तदाह-]

**तदभावेऽपि तद्भावादस्यान्यथानुपपत्तितः ॥१७८॥**

[ § १९७. साम्प्रतं सौत्रान्तिकं प्रति सत्तासाधनमाह–]

**अक्षादेरप्यदृश्यस्य तत्कार्यव्यतिरेकतः ।**

[ § १९८. एवमदृश्यस्यापि सत्ता प्रसाध्यते; तत्र परोक्तं दूषणं प्रत्याचक्षाण आह–]

**एतेनातीन्द्रिये भावकार्यकारणतागतेः ॥१७९॥**

5 **तत्सत्ताव्यवहाराणां प्रत्याख्यानं निवारितम् ।**

[ § १९९. इदानीम् 'अतीन्द्रिये भाव' इत्यादिकमेव व्याचिख्यासुराह–]

**व्याधिभूतग्रहादीनां विप्रकर्षेऽपि गम्यते ॥१८०॥**

**कुतश्चित्सदसद्भावविरोधप्रभवं तथा ।**

**प्रामाण्यमविसंवादाद् भ्रान्तिरध्यवसायतः ॥१८१॥**

10 **प्रत्यक्षाभाप्रसङ्गश्चेत्तथानभिनिवेशतः ।**

[ § २००. यद्यस्पष्टावभासित्वादनुमानमवस्तुविषयं प्रत्यक्षमपि कथञ्चित्तथा भवेदित्याह–]

**दूरदूरतरादिस्थैरेकं वस्तु समीक्ष्यते ॥१८२॥**

**नानाभं स्यात्तथा सत्यं न चेद्वस्त्वनुरोधि किम् ? ।**

[ § २०१. इति सिद्धं तस्य स्पष्टज्ञानेनैकविषयत्वं भिन्नप्रतिभासत्वेऽपि तदेकार्थत्वात्,

15 एतदेव दर्शयन्नाह–]

**तस्मादनुमितेरर्थविषयत्वनिराकृतिः ॥१८३॥**

**प्रतिभासभिदायाः किमेकस्यानेकतो ग्रहात् ? ।**

[ § २०२. सिद्धं तर्हि वस्तुष्वेव प्रतिबन्धपरिज्ञानमनुमानस्य च साफल्यमेतदेवाह–]

**समानपरिणामात्मसम्बन्धप्रतिपत्तितः ॥१८४॥**

20 **तत्राशक्तिफलाभावौ न स्यातां लिङ्गलिङ्गिनोः ।**

[ § २०३. भवतु तत्परिणाम एव सामान्यम्, तस्य तु व्यक्तिभ्यो भेद एवेति यौगाः अभेद एवेति सांख्याः, तत्राह–]

**न भेदोऽभेदरूपत्वात् नाऽभेदो भेदरूपतः ॥१८५॥**

**सामान्यं च विशेषाश्च तदपोद्धारकल्पनात् ।**

25 [ § २०४. अभेदस्यैव सर्वभावेषु····प्रतिपत्तेः इति कश्चित्; भेद एव भावानां तात्त्विकः न कथञ्चिदप्यनुगमः····इत्यपरः; तत्रोत्तरमाह–]

**संसर्गो नास्ति विश्लेषात्, विश्लेषोऽपि न केवलम् ॥१८६॥**

**संसर्गात् सर्वभावानां तथा संवित्तिसंभवात् ।**

[ § २०५. कुतः पुनः समानपरिणाम एव सामान्यमभिमतम् [ न ] नैयायिकादिकल्पितमेवेत्याह–]

**तद्व्याप्तिव्यतिरेकाभ्यां मतं सामान्यदूषणम् ॥१८७॥**

[ § २०६. कुत पुनः समानपरिणामे न सामान्यदूषणम् ? इति चेदत्राह–]

**समानपरिणामे न तदेकस्यानुपायतः ।**

[ § २०७. तन्न सामान्यं नाम किञ्चित् । तद्भा ( तदभा ) वे कुतस्तत्प्रयोजनं समानप्रत्ययादिकमिति चेन्न; समानपरिणामादेव तद्भावात्तदाह–]　5

**सदृशात्मनि सम्बन्धग्रहे भूयस्तथाविधे ॥१८८॥**
**प्रत्यभिज्ञादिना सिद्ध्येत् प्रायो लोकव्यवस्थितिः ।**

[ § २०८. अपि च सदृशेतरवदेकानेकरूपयोरपि विरोधाविशेषात् कथमेकत्र अनेकोपाधिसंभवो यतस्तैस्तद्वान् व्यपदिश्येत ? अर्थान्तरभूतैरेव स तैस्तद्व्यपदिश्यत इति चेदत्राह–]

**तत्त्वतोऽनुपकारेऽपि भेदे कथमुपाधयः ? ॥१८९॥**　10

[ § २०९. अभेद एवेति चेदत्राह–]

**तत्रैकत्वप्रसङ्गाचेदभेदे कथमुपाधयः ? ।**

[ § २१०. कथं पुनर्भेदाभेदाभ्यामुपाधितद्भावनिराकरणम् जैनस्य, स्वयमपि तदभ्युपगमात्, इति चेदत्राह–]

**नोपाधयो न तद्वन्तो भिन्नाऽभिन्ना अपि स्वयम् ॥१९०॥**　15
**जात्यन्तरे तथाभूते सर्वथा दर्शनादपि ।**

[ § २११. परस्य तु मतम्–च (न) शब्दाल्लिङ्गाद्वा उपाधिमतः प्रतिपत्तिर्यतस्तस्य निरवशेषोपाधिशबलितस्य एकस्मादेव शब्दादेरवगमात् तदन्तरस्य तत्र वैफल्यं स्यात्, अपि तु उपाधीनामेव, तत्र च एकल्पतम ( एकतम ) विषयेण अन्येषामनवगमान्न तदन्तरवैयर्थ्यमिति । तत्राह–]　20

**तद्वत्यचोदिते शक्तेऽशक्ताः किं तदुपाधयः ? ॥१९१॥**
**चोद्यन्ते शब्दलिङ्गाभ्यां समं तैस्तस्य लक्षणे ।**

[ § २१२. भवतु विशेषेष्वेव तस्य तत्; इति चेन्न; तेषामानन्त्येन अर्वाग्दृशां तत्र (तद) संभवात् इत्यभाव एवानुमानस्य । इदमेवाह–]

**सम्बन्धो यत्र तत्सिद्धेरन्यतोऽप्रतिपत्तितः ॥१९२॥**　25
**अनुमानमलं किं तदेव देशादिभेदवत् ? ।**

[ § २१३. साम्प्रतमुक्तन्यायेन सौगतमपि प्रतिक्षिपन्नाह–]

**एतेन भेदिनां भेदसंवृत्तेः प्रतिपत्तितः ॥१९३॥**
**तत्रैकं कल्पयन् वार्यः समाना इति तद्ग्रहात् ।**

[ § २१४. ततस्तत्र [ अपोहे ] भेदाभेदाभ्यां दोषोपकल्पनं परमतानभिज्ञानं पिशुनयति इति । तदेवाह– ]

**सामान्यं चेदपोहिनां बुद्ध्या सन्दर्श्यते तथा ॥१९४॥**
**अतद्धेतुफलापोहः;**

5 [ § २१५. तत्रोत्तरमाह– ]

**न तथाऽप्रतिपत्तितः ।**

[ § २१६. तत्प्रतिपत्तिः [ अपोहप्रतिपत्तिः ] तु वासनापरिपाकजन्मनो विकल्पादेव, तस्य चावस्तुविषयत्वान्न ततस्तद्व्यवस्थापनमिति चेदत्राह– ]

**यन्न निश्चीयते रूपं जातुचित्तस्य दर्शनम् ॥१९५॥**
10 **यथा निश्चयनं तस्य दर्शनं तद्वशात् किल ।**

[ § २१७. तत्रैकस्तत्परिणामः सम्भवति यस्य दर्शनं यतो वा सामान्यप्रयोजनमुपकल्प्येत, तदेवाह– ]

**समानपरिणामश्चेदनेकत्र कथं दृशिः ? ॥१९६॥**

[ § २१८. भवतु प्रतिविशेषं भिन्न एवेति चेत्, कथमिदानीमसौ सामान्यम् असाधार-
15 णत्वात्, विशेषवदसंभवाच्च विशेषाव्यतिरेकात् । व्यतिरेके सम्बन्धाभावात् तस्येति व्यपदेशानुपपत्तिः । तदाह– ]

**न चेद् विशेषाकारो वा कथं तद्व्यपदेशभाक् ? ।**

[ § २१९. प्रतिविधानमाह– ]

**सदृशासदृशात्मानः सन्तो नियतवृत्तयः ॥१९७॥**

20 [ § २२०. अतश्च ते सन्त इत्याह– ]

**तत्रैकमन्तरेणापि सङ्केताच्छब्दवृत्तयः ।**

[ § २२१. यदि न शब्दस्य कालान्तरावस्थितिः किमिति तत्र समयः साध्यते व्यवहारानुपयोगादिति चेदत्रोत्तरम्– ]

**तत्रैकमभिसन्धाय समानपरिणामिषु ॥१९८॥**
25 **समयः तत्प्रकारेषु प्रवर्त्तेतेति साध्यते ।**
**तज्जातीयमतः प्राहुर्यतः शब्दा निवेशिताः ॥१९९॥**

[ § २२२. साम्प्रतमुक्तार्थस्मरणार्थं 'सदृशासदृशात्मानः' इत्यादि व्याचक्षाण आह– ]

**नानैकत्र नचैकत्र वृत्तिः सामान्यलक्षणम् ।**
**अतिप्रसङ्गतस्तत्त्वादन्यत्रापि समानतः ॥२००॥**

30 [ § २२३. सर्वतः सर्वस्य व्यावृत्तत्वेन विलक्षणत्वात् कथं तत्परिणाम इत्यत्राह– ]

**व्यावृत्तिं पश्यतः कस्मात्सर्वतोऽनवधारणम् ? ।**

[ § २२४. न दृष्टमित्येव निश्चयः, तत्रापि सारूप्याद्विभ्रमोपपत्तेः मायागोलकवत् इति चेदत्राह–]

**सादृश्याद्यदि साधूक्तम्,**

[ § २२५. सादृश्यमपि व्यावृत्तिरूपमेवेति चेदाह–] 5

**तत्किं व्यावृत्तिमात्रकम् ? ॥२०१॥**

[ § २२६. परमतमाशङ्कते परिहर्त्तुम्–]

**एकान्ते चेत्तथाऽदृष्टेरिष्टम्;**

[ § २२७. अत्रोत्तरमाह–]

**वक्तुरकौशलम् ।** 10

**सर्वैकत्वप्रसङ्गो हि तद्दृष्टं भ्रान्तिकारणम् ॥२०२॥**

[ § २२८. न कश्चिदपि अन्यथा प्रतिभासहेतुर्भवेत् नौयानादीनामपि निरंशवादिनाम-संभवात् । माभूदिति चेदेतदेवाह–]

**नो चेद्विभ्रमहेतुभ्यः प्रतिभासोऽन्यथा भवेत् ।**

[ § २२९. अत्रोत्तरमाह–] 15

**तदकिञ्चित्करत्वं न निश्चिनोति स किं पुनः ? ॥२०३॥**

[ § २३०. भवत्वेवं तथापि किमित्याह–]

**तथाहि दर्शनं न स्याद् भिन्नाकारप्रसङ्गतः ।**

[ § २३१. विशेष एव परमार्थसंज्ञः तस्यैव दृष्टेः नाविशेष [ : ] परमार्थविपर्ययादिति चेदत्राह–] 20

**न च दृष्टेर्विशेषो यः प्रतिभासात् परो भवेत् ॥२०४॥**

[ § २३२. भवतु तर्हि यथादर्शनं वस्तुव्यवस्थितिरिति चेदत्राह–]

**प्रतिभासभिदैकत्र तदनेकात्मसाधनम् ।**

[ § २३३. अनेकान्तेऽपि दुर्लभैव दृष्टिरिति चेदाह–]

**अदृष्टिकल्पनायां स्यादचैतन्यमयोगिनाम् ॥२०५॥** 25

[ § २३४. उपसंहरन्नाह–]

**तस्मादभेद इत्यत्र समभावं प्रचक्षते ।**
**नेक्षते न विरोधोऽपि न समानाः स्युरन्यथा ॥२०६॥**

[ § २३५. कथं पुनः शब्दानामर्थवत्त्वं तदभावेऽपि प्रवृत्तेः प्रधानादिशब्दानाम्,

तेषामपि तद्वत्ते(त्वे) न कश्चिदपि अनृतवादी तीर्थकर इति प्रामाण्यमेव सर्वप्रधानानाम्, न च तदुपपपन्नम्, ततः प्रधानेश्वरादिशब्दवत् अन्येऽपि अनृतार्था एवेति चेदत्राह–]

**अक्षज्ञानेऽपि तत्तुल्यमनुमानं तदिष्यते।**
**ततः संभाव्यते शब्दः सत्यार्थप्रत्ययान्वितः ॥२०७॥**

5 [§ २३६. यस्यायं निर्बन्धो विवक्षाजन्मानः शब्दास्तामेव गमयेयुर्न बहिरर्थमिति। तत्राह–]

**सत्यानृतार्थताऽभेदो विवक्षाऽव्यभिचारतः।**

[§ २३७. साम्प्रतं 'तत्रैकमभिसन्धाय' इत्यादि प्रपञ्चेन श्लोकैर्व्याचिख्यासुः सङ्केतनिबन्धनं प्रत्यभिज्ञानमेव तत्र स इति अयमिति स्मरणदर्शनरूपयोर्विरुद्धाकारयोरनुपपत्त्या निराकुर्वन्तं प्रत्याह–]

10 **सह शब्दार्थदृष्टावप्यविकल्पयतः कथम् ॥२०८॥**
**समयस्तत्प्रमाणत्वे क्व प्रमाणे विभाव्यताम् ?।**

[§ २३८. किं पुनर्विकल्पेन, समुदायपरिज्ञानस्य प्रत्यक्षादेव भावादिति चेदत्राह–]

**तदर्थदर्शनाभावात्,**

[§ २३९. अर्थ एव सङ्केतो न ज्ञानाकारेषु इत्याह–]

15 **मिथ्यार्थप्रतिभासिषु ॥२०९॥**
**ज्ञानाकारेषु सङ्केत इति केचित् प्रचक्षते।**

[§ २४०. क्व तर्हि सः ? इत्याह–]

**वागर्थदृष्टिभागेषु गृहीतग्रहणेष्वपि ॥२१०॥**
**सत्याकारावबोधेषु सङ्केतमपरे विदुः।**

20 [§ २४१. भवतु तर्हि वागादिभेदेष्वेव समयः इति चेन्न;····एतदेवाह–]

**न भेदेषु न सामान्ये केवले न च तद्वति ॥२११॥**
**फलाभावादशक्तेश्च समयः सम्प्रवर्त्तते।**

[§ २४२. किन्निबन्धनः पुनः सङ्केतोऽयमपरे विदुरिति चेदत्राह–]

**स एवायं समश्चेति प्रत्ययस्तन्निबन्धनः ॥२१२॥**
25 **वितथोऽवितथश्चापि तत्रैकत्वनिबन्धनः।**
**तथा तत्प्रतिषेधेऽपि वैलक्षण्यादिशब्दवत् ॥२१३॥**

[§ २४३. साम्प्रतं सङ्केतितस्य शब्दस्य प्रवृत्तिप्रकारं दर्शयति–]

**तत्समानासमानेषु तत्प्रवृत्तिनिवृत्तये।**
**सङ्क्षेपेण क्वचित् कश्चिच्छब्दः सङ्केतमश्नुते ॥२१४॥**
30 **तथाऽनेकोऽपि तद्धर्मनानात्वप्रतिपादने।**

[§ २४४. कथं पुनरेकत्रानेकधर्मसद्भाव इत्यत्राह-]

**एकत्र बहुभेदानां संभवान्मेचकादिवत् ॥२१५॥**

[§ २४५. कथं पुनः सामान्यस्य व्यक्तिव्यतिरिक्तस्याभावे तद्व्यवहार इति चेदत्राह-]

**समानं केनचित्किञ्चिदपरञ्च तथाविधम् ।**
**भेदवद्धर्मिणः कृत्वा समानाकारकल्पना ॥२१६॥** 5
**तदन्यत्र समानात्मा स एवेति तथाविधे ।**
**व्यवच्छेदस्वभावेषु विशेषणविशेष्यधीः ॥२१७॥**
**तत्तन्निमित्तकः शब्दः तदन्यत्रापि योज्यताम् ।**

[§ २४६. यदि पुनः सदृशपरिणाम एव सामान्यं तस्य व्यक्तिवदनेकत्वात् कथं तत्र सत्तेत्येकतया व्यवहार इति चेदत्राह-] 10

**ततः सत्तेति साध्यन्ते सन्तो भावाः स्वलक्षणाः ॥२१८॥**
**नानैकवचनाः शब्दास्तथा सङ्केतिता यतः ।**

[§ २४७. यदि समानप्रत्यवमर्शात् सामान्यं तर्हि जलयोरिव जलमरीचिकाचक्रयोरपि भवेत् इदं जलमिदमपि जलमिति । तत्रापि प्रत्यवमर्शादिति चेन्न; तच्चक्रे प्रत्यवमर्शस्य बाध्यत्वेन मिथ्यात्वात्····ततो निर्बाधादेव प्रत्यवमर्शात्तत्सिद्धेरेतदेवाह-] 15

**प्रत्यभिज्ञा द्विधा काचित् सादृश्यविनिबन्धना ॥२१९॥**
**प्रमाणपूर्विका नान्या दृष्टिमान्द्यादिदोषतः ।**

[§ २४८. कथं तर्हि बहिरर्थादिवत् प्रधानस्यापि सत्त्वं ततो न साध्यते ? नान्वयादिति चेन्न; अन्वयस्य तन्मतेनालिङ्गलक्षणत्वात् इत्यत्राह-]

**अस्ति प्रधानमित्यत्र लक्षणासम्भवित्वतः ॥२२०॥** 20

[§ २४९. नन्वन्यथानुपपन्नत्वमपि सत्येव पक्षधर्मत्वादौ भवति, ततस्तदेव हेतुलक्षणम् । तदसत्त्वादेव च प्रधानास्तित्वमप्यसाध्यमिति चेन्न; तदभावेऽपि क्वचित्तदुपलम्भात् । तदाह-]

**तत्रान्यत्रापि वाऽसिद्धं यद्विना यद्विहन्यते ।**
**तत्र तद्गमकं तेन साध्यधर्मी च साधनम् ॥२२१॥**

[§ २५०. ततो न मृतशरीरवत् सुषुप्तादावपि जाग्रज्ज्ञानादुत्पत्तिरिति सन्निहित एव 25 कश्चिद्धेतुर्वक्तव्यः, स चात्मैव उपयोगपरिणामी नापर इति तत्रैव तस्य गमकत्वम् अन्यथानुपपत्तिसंभवादेतदेवाह-]

**अप्रत्यक्षः सुषुप्तादौ बुद्धः प्रत्यक्षलक्षणः ।**
**जीवतीति यतः सोऽयं जीव आत्मोपयोगवान् ॥२२२॥**

[ § २५१. कथं पुनरुपयोगवत्त्वे तस्य सुषुप्त्यादिः सत्यज्ञानस्वभावस्य तदसंभवादिति चेन्न; कर्मवशात्तस्यापि तदुपपत्तेः तदाह– ]

**कर्मणामपि कर्त्ताऽयं तत्फलस्यापि वेदकः ।**

[ § २५२. परमपि तत्फलं दर्शयति– ]

5 **संसरेत् परिणामात्तो मुच्यते वा ततः पुनः ॥२२३॥**

[ § २५३. नन्वात्मा कर्म तत्फलं संसारो मुक्तिरिति च सत्येव भेदे, नचायमस्ति तदवस्थानोपायाभावात् । ततोऽद्वैतबोध एव परमार्थः तस्य स्वत एवाधिगमात् 'स्वरूपस्य स्वतो गतिः' इति वचनादिति चेदत्राह– ]

**आत्मादिव्यतिरेकेण कोऽपरोऽध्यक्षतां व्रजेत् ? ।**

10 **नानाऽयं क्रमशो वृत्तेर्न चेदभिधास्यते ॥२२४॥**

[ § २५४. ततो युक्तं प्राणादिमत्त्वात् परिणामिन एवात्मनः साधनम् न कूटस्थस्य नापि ज्ञानसन्तानस्य तत्र तस्य विरुद्धत्वात् । परिणामिन्यपि विरुद्ध एवायं शरीरोपक्लृप्तादेव चैतन्यादुत्पत्तेरिति चार्वाकः । तदेवाह– ]

**भूतानामेव केषाञ्चित् परिणामविशेषतः ।**

15 **कायश्चित्कारणम्;**

[ § २५५. तत्रोत्तरमाह– ]

**सोऽपि कथं संसारमुक्तिभाक् ? ॥२२५॥**

**शक्तिभेदे तथा सिद्धिः; संज्ञा केन निवार्यते ?।**

**यथा भूताविशेषेऽपि प्रज्ञादिगुणसंस्थितिः ॥२२६॥**

20 **तथा भूताविशेषेऽपि भवद्भूतादिसंस्थितिः ।**

[ § २५६. तन्न तद्गुणस्यापि तेनाभिव्यक्तिः, नापि तत्कार्यस्य वक्ष्यमाणोत्तरत्वात् । कथमेवं गुणनिषेधे गुणवद्द्रव्यमित्युपपन्नं भवतोऽपि इति चेन्न; परकीयतल्लक्षणस्यैवातिव्याप्त्यादिना प्रतिषेधान्न गुणस्य । कथं तर्हि तदुपपत्तिरिति चेदाह– ]

**तस्मादनेकरूपस्य कथञ्चिद् ग्रहणे पुनः ॥२२७॥**

25 **तद्रूपं भेदमारोप्य गुण इत्यपि युज्यते ।**

[ § २५७. गुणतद्वतोः एकान्त एव भेदो न कथञ्चित्, तद्वादस्य विरोधादिदोषादिति चेदत्राह– ]

**यदि स्वभावाद्भावोऽयं भिन्नो भावः कथं भवेत् ? ॥२२८॥**

**अनवस्थानतो भेदे सकलग्रहणं भवेत् ।**

30 **तदनेकान्तात्मकं तत्त्वम्,**

[ § २५८. भवतु स एव वादः, तत्रैव चेतनो देहस्य गुण इति चेदत्राह–]

**नहि ज्ञानात्मना क्वचित् ॥२२९॥**
**शरीरग्रहणं येन तद्गुणः परिकल्प्यते ।**

[ § २५९. वैशेषिकादेस्स्व ( देस्त्व ) गुणवान् गुण इति ब्रुवाणस्य न गन्धादेर्गुणत्वं गुणवत्त्वात् । तदेवाह–] 5

**गुणानां गुणसम्बन्धो गन्धादेः सङ्ख्यया ग्रहात् ॥२३०॥**
**तादात्म्यं केन वार्येत ?**

[ § २६० ननूक्तं भाक्तत्वेन तन्निवारणमिति चेदत्राह–]

**नोपचारप्रकल्पनम् ।**
**अत्रान्यत्रापि तुल्यत्वादाधारस्यैकरूपतः ॥२३१॥** 10
**तत्रैकत्वं प्रसज्येत, सङ्ख्यामात्रं यदीष्यते ।**
**नानात्मविभ्रमादेवं न पृथग्गुणिनो गुणाः ॥२३२॥**

[ § २६१. आकारभेदात्ते ततः पृथगिति चेदेतदेवाह–]

**प्रसक्तं रूपभेदाचेत्;**

[ § २६२. तत्रोत्तरमाह–] 15

**भेदो नानात्वमुच्यते ।**

[ § २६३. नास्त्येव तत्रैकत्वं केवलं भावसादृश्यात्तत्र तद्व्यवहारः····तदेवाह–]

**एकता भावसाम्याचेत्;**

[ § २६४. तत्रोत्तरमाह–]

**उपचारस्तथा भवेत् ॥२३३॥** 20

[ § २६५. यदि च तत्र गुणवत्त्वभयान्न वास्तवमेकत्वं पृथक्त्वमपि न भवेत्, तदपि कुतश्चित्कार्यविशेषादेरुपचरितमेव स्यात् तदेवाह–]

**भेदेऽपि, वस्तुरूपत्वान्न चेदन्यत्र तत्समम् ।**

[ § २६६. तन्न गुणगुण्यादीनामपृथक्त्वम्, भवतु पृथक्त्वमेव प्रतिभासादिभेदादिति चेदत्राह–] 25

**एतेन भिन्नविज्ञानग्रहणादिकथा गता ॥२३४॥**

[ § २६७. तन्न गुणो नाम कश्चिन्निश्चितो य [त] श्चेतनोऽपि गुणः स्यात् । माभूत् धर्मस्तु तर्हि स्यात्, तदवष्टम्भेन अवस्थानात् चित्रवत् कुड्यस्य । यथा कुड्याद्यपाये न चित्रं तत्र तिष्ठति नाप्यन्यत्र गच्छति नश्यत्येव परं तथा शरीरापाये चेतनोऽपि इति मन्वानस्य मत-मुपदर्शयन्नाह–] 30

जीवच्छरीरधर्मोऽस्तु चैतन्यं व्यपदेशतः ।
यथा चैतन्यमन्यत्रेत्यपरः प्रतिपन्नवान् ॥२३५॥

[§ २६८. तत्रोत्तरमाह–]

अप्रत्यक्षेऽपि देहेऽस्मिन् स्वतन्त्रमवभासनात् ।
5 प्रत्यक्षं तद्गुणो ज्ञानं नेति सन्तः प्रचक्षते ॥२३६॥

[§ २६९. ततः किम् ? इत्याह–]

तद्दृष्टहानिरन्येषामदृष्टपरिकल्पना ।
स्वातन्त्र्यदृष्टेर्भूतानामदृष्टेर्गुणभावतः ॥२३७॥

[§ २७०. भवतु तस्य तदात्मत्वं तद्गुणत्वं वा तथापि संसारमोक्षयोरभाव इत्याह–]

10 तत्सारतरभूतानि कायापायेऽपि कानिचित् ।

[§ २७१. मतान्तरमुपदर्शयति दूषयितुम्–]

कार्यकरणयोर्बुद्धिकाययोस्तन्निवृत्तितः ॥२३८॥
कार्याभावगतेर्नास्ति संसार इति कश्चन ।

[§ २७२. तत्रोत्तरमाह–]

15 तस्यापि देहानुत्पत्तिप्रसङ्गोऽन्योन्यसंश्रयात् ॥२३९॥
उत्तरोत्तरदेहस्य पूर्वपूर्वधियो भवः ।

[§ २७३. उपसंहरन्नाह–]

अत एव विरुद्धत्वादलं प्रायस्तथा भवात् ॥२४०॥

[§ २७४. किञ्च, कायः कारणमात्रं तद्विशेषो वा बुद्धेः ? तन्मात्रमिति चेत्, न तर्हि 20 तन्निवर्त्तमानमपि कार्यस्य बुद्धेस्सत्त्वं निवर्तयति, निवृत्तेऽपि सहकारिणि कार्यस्यावस्थितिप्रतिपत्तेः, यथा मृतेऽपि स्थपतौ प्रासादगोपुरादेः । इदमेवाह– ]

तन्न कारणमित्येव कार्यसत्तानिवर्त्तकम् ।
स्वनिवृत्तौ यथा तक्षा गोपुराट्टालिकादिषु ॥२४१॥

[§ २७५. भवतु परिणामित्वेन कारणविशेष एव स तस्या इति चेदत्राह– ]

25 युगपद्भिन्नरूपेण बहिरन्तश्च भासनात् ।
न तयोः परिणामोऽस्ति यथा गेहप्रदीपयोः ॥२४२॥

[§ २७६. अतश्च न तयोः परिणामः इत्याह–]

प्रमितेऽप्यप्रमेयत्वाद् विकृतेरविकारिणी ।
निर्ह्रासातिशयाभावान्निर्ह्रासातिशये धियः ॥२४३॥
30 बलीयस्यबलीयस्त्वाद् विपरीते विपर्ययात् ।

[ § २७७. उपसंहरन्नाह-]

**काये तस्मान्न ते तस्य परिणामाः सुखादयः ॥२४४॥**

[ § २७८. यत्रापि परिणामतद्वद्भावो घटकपालादौ तत्रापि प्रमितेऽपील्यादि विद्यते, ततो व्यभिचारः; इति चेदाह-]

**एतदत्र घटादीनां न तज्जातुचिदीक्ष्यते ।** 5

[ § २७९. गुणदूषणमप्यत्रातिदिशन्नाह- ]

**तुल्यश्च गुणपक्षेण तत्तथा परिणामतः ॥२४५॥**

[ § २८०. कुत इदं संसारवैचित्र्यम् ?····तस्य च कर्मण एव तद्वैचित्र्यात्···एतदेवाह-]

**अक्षादीनां विकारोऽयमात्मकर्मफलं भवेत् ।** 10
**अन्यथा नियमायोगात् प्रतीतेरपलापतः ॥२४६॥**

[ § २८१. स्वभावकल्पनायां सामर्थ्यस्य मुक्तिरूपस्याभावात् कर्मफलमेव तद्वैचित्र्यं तदेवाह- ]

**कल्पनायामसामर्थ्यात्,**

[ § २८२. तदेवं तदहर्जातस्य परलोकित्वे कर्मसिद्ध्या सिद्धे यत्सिद्धं तदाह- ] 15

**ततस्तद्विकृते ऋते ।**
**पारम्पर्येण साक्षाच्च नास्ति विज्ञानविक्रिया ॥२४७॥**

[ § २८३. तन्न शरीरपरतन्त्रो जीवः तदुपरमे व्यवस्थानात्तदहर्जातवत् । कुतो वा तस्य तत्परतन्त्रत्वम् ? तद्धेतुत्वादिति चेन्न; केवलादुत्पत्तौ मृतेऽपि प्रसङ्गात् । इन्द्रियसहायादिति चेत्; 20 इन्द्रियाणामपि समुदायेन तत्सहायत्वं प्रत्येकं वा ? प्रथमविकल्पं निराकुर्वन्नाह- ]

**कारणं नाक्षसङ्घातः तत्प्रत्येकं विना भवात् ।**
**विकल्पानां विशेषाच्च तत्तद्वृति विरोधतः ॥२४८॥**
**जातिस्मराणां संवादादपि संस्कारसंस्थितेः ।**
**अन्यथा कल्पयन् लोकमतिक्रामति केवलम् ॥२४९॥** 25

[ § २८४. ततः पौर्वभविकस्यैव तस्य तेन स्मरणमिति कथन्न जातिस्मराणां संवादः ? एतदेवाह-]

**नाऽस्मृतेऽभिलाषोऽस्ति न विना सापि दर्शनात् ।**
**तद्धि जन्मान्तरान्न,**

[ § २८५. तदहर्जातस्य अभिलाष एव नास्ति तत्कुतस्तदनुमितिः ? इति चेदत्राह-] 30

**अयं जातमात्रेऽपि लक्ष्यते ॥२५०॥**

[§ २८६. सत्यं लक्ष्यते, स तु न पौर्वभविकाद् अनुमाना ( अनुभवा ) दपि तु गर्भभाविन एव, तदाह–]

**गर्भे रसविशेषाणां ग्रहणादिति कश्चन ।**

**तदादावभिलाषेण विना जातु यदृच्छया ॥२५१॥**

5 **तत्संस्कारान्वयेक्षत्वाद् भूयोभूयः प्रवर्त्तितः ।**

[§ २८७. तत्रोत्तरमाह–]

**कोशपानं विधेयम्,**

[§ २८८. भवतोऽपि समानमिदं गर्भ [ग] तस्यापि पौर्वभविकादेवानुभवादेः स्मरणादित्यत्रापि प्रमाणाभावादिति चेदत्राह–]

10 **न समं भूयस्तथा दृशः ॥२५२॥**

[§ २८९. पुनरपि गर्भ इत्यादि निराकुर्वन्नाह–]

**रूपादिदर्शनाभावात् तत्सम्बन्धस्मृतिः कथम् ?।**

**नावश्यं चक्षुरादीनां सर्वत्रोन्मीलनादयः ॥ २५३ ॥**

[§ २९०. पुनरपि 'तद्विकृतेः' इत्यादि समर्थयितुमाह–]

15 **तथा रागादयो दृष्टाः सङ्कल्पाद्यविनाभुवः ।**

[§ २९१. कथं तर्हि सामान्यस्मरणाद्विशेषे प्रवृत्तिरिति चेन्न; तस्य तस्मादव्यतिरेकात् दृष्टत्वाच्च, तदेवाह–]

**तदाहारादिसामान्यस्मृतितद्विप्रमोषयोः ॥२५४॥**

**भावोऽभावश्च वृत्तीनां भेदेष्विह च दृश्यते ।**

20 [§ २९२. उपसंहरन्नाह–]

**तस्मात्संसारवैचित्र्यं नियमान्न विहन्यते ॥२५५॥**

[§ २९३ व्याहतमेव पिपीलिकाजीवस्य तच्छरीरपरित्यागेन हस्तिशरीरसञ्चरणम्··· इति चेदत्राह–]

**न च कश्चिद्विरोधोऽस्ति देहान्तरपरिग्रहे ।**

25 [§ २९४. तदेवम् 'इह च दृश्यते' इत्यनेन तत्परिग्रहमुपपाद्य तदन्तरेणापि उपपादयन्नाह–]

**तदभावे हि तद्भावप्रतिषेधो न युक्तिमान् ॥२५६॥**

[§ २९५. तस्माद् बुद्धिरियं पुरुषस्यैव स्वभावो न पृथिव्यादेः । चार्वाकस्तत्स्वभावत्वे दूषणमाह–]

30 **बुद्धेः पुरुषतन्त्रत्वे नित्यत्वात्तदनुक्रिया ।**

**न भवेत्;**

[ § २९६. समाधानमाह–]

**परिणामित्वाद्विनाशानुपलक्षणात् ॥२५७॥**

[ § २९७. अत्यन्तविनाशेऽपि सन्तानापेक्षया तत्संभवं मन्यमानस्य मतमाशङ्कते–]

**परस्याप्यविरोधश्चेत् फलहेतुव्यपोहतः ।**
**प्रवृत्तेर्व्यवहाराणाम्;** 5

[ § २९८. परिहरन्नाह–]

**अविनाशेऽपि संभवात् ॥२५८॥**

[ § २९९. इदमेव श्लोकैर्व्याचिख्यासुः 'फलहेतुव्यपोहतः' इत्यस्य द्वितीयमर्थं दर्शयन्नाह–]

**यथाऽजनकजन्येषु न सन्ति कलशादयः ।** 10
**तथा जनकजन्येषु ततस्तत्त्वं निरन्वयम् ॥२५९॥**

[ § ३००. सत्येवं यत्सिद्धं तदाह–]

**तत्र नाशादिशब्दाश्च समिताः समनन्तरे ।**

[ § ३०१. तदेवं परमतमुपदर्श्य अल्पवक्तव्यत्वात् तत्रेत्यादि निराकुर्वन् विनाशं पृच्छति–] 15

**अन्यस्यान्यो विनाशः किम् ?**

[ § ३०२. इति प्रश्नयित्वा दूषणमाह–]

**किन्न स्यादचलात्मकः ? ॥२६०॥**

[ § ३०३. पर इदं परिहरन्नाह–]

**तद्विवेकेन भावाचेत्;** 20

[ § ३०४. उत्तरमाह–]

**कथन्नातिप्रसज्यते ? ।**
**सदापि सर्वभावानां परस्परविवेकतः ॥२६१॥**

[ § ३०५. साम्प्रतं विवेकमभ्युपगम्य जनकजन्येषु इत्येतन्निराकुर्वन्नाह–]

**न चानन्तरमित्येव भावस्तद्व्यपदेशभाक् ।** 25
**तत्प्रतीत्यसमुत्पादाद्भावश्चेत्; स कुतो मतः ? ॥२६२॥**
**सादृश्यात्; प्रत्यभिज्ञानं न सभागनिबन्धनम् ।**

[ § ३०६. चित्रज्ञानवादिनः संभवत्येव तदिति चेदत्राह–]

**विशेषकल्पनायां स्यात्परस्याव्यभिचारिता ॥२६३॥**

[ § ३०७. माभूत्प्रत्यभिज्ञानं युगपदपि चित्रैकस्यानभ्युपगमादिति चेदत्राह–] 30

**तस्मात्सभागसन्तानकल्पनापि न युज्यते ।**
**न चेत्स परिवर्त्तेत हेतुरेव फलात्मना ॥२६४॥**

[ § ३०८. कथं पुनर्हेतोः फलात्मना परिवर्त्तनं प्रत्यक्षबाधनात्, तेन निरन्वयस्यैव विनाशस्य प्रतिपत्तेरिति चेदत्राह–]

5 **तस्माद्भावविनाशोऽयं फलीभावस्तदग्रहः ।**
**तदग्रहः,**

[ § ३०९. भवतु तत्र फलीभावव्यवहारो विनाशव्यहारस्तु कथम् ? तद्भावस्याविनाशरूपत्वात् ; अत्राह–]

**प्रतिषेधोऽस्य केवलं तन्निबन्धनः ॥२६५॥**

10 [ § ३१०. साम्प्रतं हेतुफलयोः पराभिप्रेतमन्यत्वव्यवस्थापनं दर्शयति–]

**अन्यथात्वं यदीष्येत हेतोरपि फलात्मनः ।**
**अन्य एवेति किन्नेष्टमिति केचित् प्रचक्षते ? ॥२६६॥**

[ § ३११. तत्रोत्तरमाह–]

**अन्यथात्वं नचेत्तस्य भवेद् ध्रौव्यमलक्षणात् ।**
15 **अभावस्याप्यभावोऽपि किन्नेत्यन्ये प्रचक्षते ? ॥२६७॥**

[ § ३१२. साम्प्रतं व्यवहारस्यातिप्रसङ्गमपरत्र तदभावप्रसङ्गमिव परिहरन्नाह–]

**स्वस्वभावस्थितो भावो भावान्तरसमुद्भवे ।**
**नष्टो वा नान्यथाभूतस्ततो नातिप्रसज्यते ॥२६८॥**

[ § ३१३. तदेवं प्रपञ्चतः साध्यमुपदिश्य साधनस्वरूपं दर्शयन्नाह–]

20 **साधनं प्रकृताभावेऽनुपपन्नम्,**

[ § ३१४. हेत्वाभासानुपदर्शयति–]

**ततोऽपरे ।**
**विरुद्धासिद्धसन्दिग्धा अकिञ्चित्करविस्तराः ॥२६९॥**

[ § ३१५. यदि साधनं प्रकृते सत्येव न तदा स्वप (सप) क्षेऽपि स्यात् तत्र प्रकृताभावात्,
25 ततश्च न तस्य तदविनाभावपरिज्ञानम्, सपक्ष एव तत्संभवान्न पक्षे, तत्र अद्यापि प्रकृतस्यानिश्चयादिति चेदत्राह– ]

**तथाऽर्थे सत्यसम्भूष्णुः धर्मो न बहिर्गतः ।**
**सर्वथैकान्तविश्लेषे साध्यसाधनसंस्थितेः ॥२७०॥**

[ § ३१६. जात्यन्तरस्यैव तत्त्वात् । न तादृशं किमपि दृष्टमस्ति यतः सविस्रम्भं चेतः
30 स्यात् इति चेदाह–]

**एकं चलं चलैर्नान्यैः नष्टैर्नष्टं नचापरैः ।**
**आवृतैरावृतं भागै रक्तै रक्तं विलोक्यते ॥२७१॥**

[ § ३१७. अथ मतं चलादेस्ततोऽर्थान्तरत्वादचलादिकमेव तत्त्वतः, ततो न चलाचलादिरूपवत्तया जात्यन्तरस्यावलोकनमिति; तत्राह–]

**अन्यथा तदनिर्देश्यं नियमस्याप्यसम्भवात् ।** 5

[ § ३१८. संभव एव समवायादिति चेन्न; तस्य निषेधात् । अभ्युपगम्याप्याह–]

**वृत्तावपि न तस्येदं विश्वरूपं विभाव्यते ॥२७२॥**

[ § ३१९. तदनभ्युपगमे दोषमाह–]

**सम्यग्ज्ञानं व्यवस्थाया हेतुः सर्वत्र तत्पुनः ।**
**प्रत्यक्षं यदि बाध्येत लक्षणं प्रतिरुध्यते ॥२७३॥** 10
**साङ्कर्यं व्यवहाराणां सन्निवेशविशेषतः ।**
**नानैकपरिणामोऽयं यदि न व्यवतिष्ठते ॥२७४॥**

[ § ३२०. कुतश्चायं निरंशवादे वस्तुषु स्थूलप्रतिभासः ? न चायं नास्ति; प्रसिद्धत्वात् । एकार्थकारित्वादिति चेन्न; अर्थस्याप्यणुरूपस्याप्रतिवेदनात्····तन्न तत्कारित्वम्, सत्यपि तस्मिन् न ततस्तत्प्रतिभासो व्यभिचारात्, अस्ति हि तत्कारित्वमिन्द्रियालोकादीनां न च तत्र स्थूलैकप्र- 15 तिभासः, विषये चोदिता प्रवृत्तिरिन्द्रियादावपि स्यात्, एतदेव दर्शयन्नाह–]

**सत्यप्येकार्थकारित्वे संश्लेषपरिणामतः ।**
**इन्द्रियादिषु नैकत्वं यदि किं वा विरुद्ध्यते ? ॥२७५॥**

[ § ३२१. अस्यैव तात्पर्यं विस्तरतो व्याख्यातुकाम आह–]

**तदनेकार्थसंश्लेषविश्लेषपरिणामतः ।** 20
**स्कन्धस्तु सप्रदेशोंऽशी बहिः साक्षात्कृतो जनैः ॥२७६॥**

[ § ३२२. इदानीं तत्साक्षात्करणेनैव विपक्षाभ्युपगमं प्रतिक्षिपन्नाह–]

**नाऽनाकारैकविज्ञानं स्वाधारे बदरादिवत् ।**
**तादात्म्येन,**

[§ ३२३. भेदे दूषणान्तरमप्याह–] 25

**पृथग्भावे सति वृत्तिर्विकल्प्यते ॥२७७॥**

[ § ३२४. भवेदेवं यदि तथादर्शनं लभ्येत, न चैवं कश्चित्, तदभेदस्यैवोपलम्भात्, तदेवाह–]

**दर्शनादर्शने स्यातां सप्रदेशाप्रदेशयोः ।**

[ § ३२५. भवतु तर्हि भवत्परिकल्पितस्यापि स्कन्धस्याभावो भेदाभेदयोरेकत्र विरोधा- 30 दिति चेदत्राह–]

**विरोधानुपलम्भेन किल स्कन्धो विरुध्यते ॥२७८॥**

[§ ३२६. अर्वाग्भागदृष्ट्या परभागादेरपि दर्शने तदनुमानाभावप्रसङ्गात्। अदर्शने तदभेदात् अर्वाग्भागस्याप्यदर्शनमित्यनुपलम्भाद्भावस्यैव प्राप्तेरिति चेदत्राह–]

**सम्भवत्यपि मात्राणां दर्शनादर्शनस्थितिः।**

5 [§ ३२७. निदर्शनमत्र–]

**इदं विज्ञानमन्यद्वा चित्रमेकं यदीक्ष्यते ॥२७९॥**

[§ ३२८. भवतु चित्रमेकं वस्तु तथापि कुतः क (त) स्मिन् सति मात्राणां दर्शनादर्शनस्थितिरिति चेदत्राह–]

**अवान्तरात्मभेदानामानन्त्यात् सकलाग्रहे।**
10 **नानाकारणसामर्थ्याज्ज्ञानं भेदेन भासते ॥२८०॥**
**भेदसामर्थ्यमारोप्य प्रत्यासत्तिनिबन्धनम्।**
**चोद्यं महति नीलादौ तुल्यं तद्विषयाकृति ॥२८१॥**

[§ ३२९. सति चैवमनुपप्लवदर्शनविषयत्वे स्कन्धस्य यज्ज्ञा (यज्जा) तं तदाह–]

**सर्वथा श्लेषविश्लेषे नाणूनां स्कन्धसम्भवः।**
15 **अन्यथा नोऽप्रदेशादीत्यपरैर्दत्तमुत्तरम् ॥२८२॥**

[§ ३३०. अतो निर्दोषत्वात् स एव तदनुगुणः श्लेषः इति कथं तदभावः ? इदमेवाह–]

**नैरन्तर्यं निरंशानां स्वभावानतिरेचनम्।**
**स्कन्धो मात्रानुरोधेन व्यवहारेऽवधार्यते ॥२८३॥**

[§ ३३१. कुतः पुनरन्योन्यात्मगमनेनैव तस्यावधारणं न रूपान्तरेणेति चेदत्राह–]

20 **सङ्ख्यादिसमभावेऽपि तत्स्वभावविवेकतः।**

[§ ३३२. तथापि तदनभ्युपगच्छतो दूषणमाह–]

**अतादात्म्यस्वभावे वाऽऽनर्थक्यादलं परैः ॥२८४॥**

[§ ३३३. ततोऽवश्यं वक्तव्यः स्कन्धः तस्यैव तदुपयोगात्, स च रूपादीनामन्योन्याभेद एव नापरः इत्याह–]

25 **स्पर्शोऽयं चाक्षुषत्वान्न, न रूपं स्पर्शनग्रहात्।**

[§ ३३४. भिन्न एव कस्मान्न भवतीति चेदत्राह–]

**रूपादीनि निरस्याभिर्न (स्यान्यन्न) चाभ्युपलभेमहि ॥२८५॥**

[§ ३३५. एतदेव कस्मादिति चेदत्राह–]

**सामग्रीविहितज्ञानदर्शिताकारभेदिनः।**
30 **प्रायेणैकस्य ताद्रूप्यम्, पृथक्सिद्धौ प्रसङ्गतः ॥२८६॥**

[ § ३३६. नन्वेवमेकस्मिन्नेवेन्द्रिये तस्य तथैव प्रतिभासादिन्द्रियान्तरमनर्थकमिति चेदत्राह–]

**अल्पभूयःप्रदेशैकस्कन्धभेदोपलम्भवत् ।**
**अन्यथा स्वात्मनि ज्ञानमन्यथा चानुमीयते ॥२८७॥**

[ § ३३७. तत्सर्वमनेकान्तात्मकं प्रमेयत्वादिति । सतः प्रमेयत्वे तस्य च सति नियमे 5 स्यादिदमनुमानं नान्यथा हेतुदोषसंभवादिति मन्यमानस्य मतमादर्शयति–]

**सत्प्रमेयत्वयोर्नास्ति सर्वथा नियमो यदि ।**

[ § ३३८. तत्रोत्तरमाह– ]

**अप्रवृत्तेः फलाभावात् तत्र वृत्तेर्निषेधतः ॥२८८॥**

[ § ३३९. किं वा प्रमाणं यतः प्रमेयत्वमभावस्य ? प्रत्यक्षमिति चेदत्राह–] 10

**प्रमाणमर्थसम्बन्धात् प्रमेयमसदित्यपि ।**
**प्रवृत्तेर्ध्यान्धमेवैतत् किन्न सन्तं समीक्षते ? ॥२८९॥**

[ § ३४०. तन्न प्रत्यक्षतः प्रमेयत्वमभावस्य । नाप्यनुमानात्; तस्यापि प्रतिबन्धसव्य-पेक्षस्यैव प्रमाण्यादभावे च प्रतिबन्धस्यासम्भवात् । तदेवाह–]

**तत्प्रत्यक्षं परोक्षेऽर्थे साधनं त्रिविधं द्वयम् ।** 15
**हेत्वात्मनोः परं हेतुस्तज्ज्ञानव्यवहारयोः ॥२९०॥**
**परसत्त्वमसत्ताऽस्याऽदर्शनं परदर्शनम् ।**

[ § ३४१. यदि भावान्तरमेवाभावः तत्र कथम् असज्ज्ञानादिप्रवृत्तिरिति चेदत्राह–]

**सदसज्ज्ञानशब्दाश्च केवलं तन्निबन्धनाः ॥२९१॥**

[ § ३४२. भावस्यैवाभावात्मकत्वे प्रसिद्धमुदाहरणमाह–] 20

**अग्निः स्वपररूपाभ्यां भावाभावात्मको यथा ।**
**अन्वयव्यतिरेकाभ्यां शब्दबुद्ध्याऽवधार्यते ॥२९२॥**

[ § ३४३. निरूपितमिदम्, यदि न तावता परितोषः पुनरपि वदामः । इत्याह–]

**अप्रमेयं प्रमेयश्चेत् असत् किन्न सदात्मकम् ?।**
**अथ न व्यवहारोऽयमन्यत्रापि निरङ्कुशः ॥२९३॥** 25

[ § ३४४. सम्प्रति सर्वत्र प्रमेयत्वस्य सद्भावमुपसंहृत्य गमकत्वे निमित्तं दर्शयन्नाह–]

**सत्प्रत्यक्षं परोक्षार्थगतिस्तत्रैकलक्षणम् ।**
**साध्ये सति विरोधोऽयमतस्तर्केण साध्यते ॥२९४॥**

[ § ३४५. तन्न बहिरन्वयादिना किञ्चित् विनापि तेन तन्निर्णयात् । न च सर्वत्र तत्संभवो यतः तस्मादेव स भवेदित्याह–] 30

**सर्वत्र परिणामादौ हेतुः सत्त्वात्ततोऽन्यथा ।**
**शब्देऽपि साधयेत्केन ? तस्मान्नान्वयतो गतिः ॥२९५॥**

[ § ३४६. साम्प्रतं विपक्षव्यवच्छेदेन परिणामहेतुत्वमेव सत्त्वादेर्विस्तरेण व्याचक्षाण आह–]

**सिद्धमर्थक्रियाऽसत्त्वं सर्वथाऽविचलात्मनः ।**
5 **निरन्वयविनाशेऽपि,**

[ § ३४७. संवृतिसिद्धं तु तत्सत्त्वं शुद्धमशुद्धं वा तत्र हेतुरिति चेदत्राह– ]

**साधनं नोपचारतः ॥२९६॥**

[ § ३४८. ननु यथा क्षणिकाद्येकान्ते तथाऽनेकान्तेऽपि तस्यापि तत्कुर्वतः कुतश्चिद-प्रतिपत्तेरिति चेदत्राह–]

10 **अवश्यं बहिरन्तर्वा प्रमाणमवगच्छताम् ।**
**सिद्धमेकमनेकात्मपरिणामव्यवस्थितम् ॥२९७॥**

[ § ३४९. भवतु अन्तस्तत्परिणामव्यवस्था 'चित्रप्रतिभासाप्येकैव बुद्धिः' इति वचनात्, न बहिः; तत्र परमाणूनामेव प्रतिक्षणक्षीणानां परस्परविलक्षणानाञ्च भावादिति कश्चित् । अव-यवावयव्यादीनामेव इत्यपरः । तत्राह–]

15 **परापरविवेकैकस्वभावपरिनिष्ठितः ।**
**परमाणुरतोऽन्यो वा बहिरन्तर्न बुद्ध्यते ॥२९८॥**

[ § ३५०. तस्यापि स्वतोऽर्थक्रियासामर्थ्ये किं सहकारिप्रतीक्षयेति चेदत्राह–]

**अर्थस्यानेकरूपस्य कदाचित्कस्यचित्क्वचित् ।**
**शक्तावतिशयाधानमपेक्षातः प्रकल्प्यते ॥२९९॥**

20 [ § ३५१. यद्यर्थस्य स्वभावोऽतिशयः तर्हि तद्धेतोरेव सिद्धेरपेक्षया न किञ्चित्, असिद्धौ तु न तत्स्वभावत्वं सिद्धासिद्धयोर्विरुद्धधर्माध्यासेन भेदस्यैवापत्तेरिति चेदत्राह–]

**स्वभावातिशयाधानं विरोधान्न परीक्ष्यते ।**
**तत्र सिद्धमसिद्धं वा तस्माज्जातिर्न हेतुतः ॥३००॥**
**सन्निधानं हि सर्वस्मिन्नव्यापारेऽपि तत्समम् ।**

25 [ § ३५२ किं सर्वथा ततो न जातिः ? नेत्याह–]

**न चेत्स परिवर्त्तेत भाव एव फलात्मना ॥३०१॥**

[ § ३५३ सम्प्रति यदुक्तम्–विनाशनियतो भावस्तत्रानपेक्षणादिति; तस्य विरुद्धत्वं दर्श-यन्नाह–]

**परिणामस्वभावः स्याद्भावस्तत्रानपेक्षणात् ।**

30 [ § ३५४. कुतः पुनर्निरन्वयविनाशस्यैव ततो न सिद्धिः ? इत्यत्राह–]

**अयमर्थक्रियाहेतुरन्तरेण निरन्वयम् ॥३०२॥**

[ § ३५५. परिणामे भावसाङ्कर्यम्, कस्यचित्स्वपर्यायैरिव परपर्यायैरप्यविशेषात् सदापत्तेरिति चेदत्राह—]

**भेदाभेदात्मनोऽर्थस्य भेदाभेदव्यवस्थितिः ।**
**लोकतो वानुगन्तव्या सभागविसभागवत् ॥३०३॥** 5

[ § ३५६. साम्प्रतं तद्विशेषाणामपि तद्धेतुत्वं तज्ज्ञापकस्य तद्वचनादवगतमपि विनेयानुग्रहणार्थं दर्शयन्नाह—]

**सामान्यभेदरूपार्थसाधनस्तद्गुणोऽखिलः ।**

[ § ३५७. कुतस्तत्साधन एवायं न क्षणिकत्वादिसाधनोऽपीति चेदत्राह—]

**अन्यथाऽनुपपन्नत्वनियमस्यात्र संभवात् ॥३०४॥** 10

[ § ३५८. कीदृशो वा शब्दादिर्यत्र क्षणभङ्गसाधनम् ? निष्कलपरमाणुरूप इति चेन्न,····सञ्चये तर्हि सौक्ष्म्येणैव तेषां प्रतिपत्तिः स्यात् तत्स्वभावत्वात्, तथा च कथमेकघटादिव्यवहारः ? विकल्पारोपितादेव स्थौल्यात् क्षणभेदव्यवहारवदिति चेदेतदेव दर्शयति—]

**प्रत्यक्षेऽपि समानान्यनिर्णयः प्रतिरुद्ध्यते ।**
**यथा क्षणक्षयेऽणूनाम्;** 15

[ § ३५९. अत्रोत्तरमाह—]

**इत्यात्माप्तौ विडम्बयेत् ॥३०५॥**

[ § ३६०. तन्नायमारोपितः स्थूलाकारः तत्प्रत्ययव्यतिरेकेण प्रत्यक्षस्याप्रतिवेदनात् । एकत्वाध्यवसायाच्च तत्कल्पनस्य प्रतिक्षेपादेतदेवाह—]

**अपृथग्वेद्यनियमादभिन्नाः परमाणवः ।** 20

[ § ३६१. ततो यथा विभ्रमेतरविकल्पेतरादीनामेकत्र समुच्चयः तथा वस्तुस्वाभाव्यादेव सूक्ष्मेतराभेदेतराणामपि । एतदेवाह—]

**देशकालान्तरव्याप्तिस्वभावः क्षणभङ्गिनाम् ॥३०६॥**
**सम्प्रत्यस्तमिताशेषनियमा हि प्रतीतयः ।**

[ § ३६२. तस्मादक्रमवत् क्रमेणापि अनेकान्तात्मक एव भावः तथा प्रत्यभिज्ञानात् । 25 ननु च प्रत्यभिज्ञानं प्रत्यक्षविषय एव प्रवृत्तिमन्नान्यत्र अतिप्रसङ्गात् । न च प्रत्यक्षस्य परापरपर्यायेषु प्रवृत्तिर्यतः तेषां कथञ्चिदभेदप्रतिपत्त्या तस्मादनेकान्तविषयत्वात्प्रत्यभिज्ञानं तत्र स्यादिति चेदत्राह—]

**अग्रहः क्षणभङ्गोऽपि ग्रहणे किमनिश्चयः ? ॥३०७॥**

[ § ३६३. ····समारोपनिरासार्थत्वस्य तत्त्वादिति चेदत्राह—] 30

**आकृतिभ्रमवद् यद्वद्विषमज्ञैर्विलोकितम् ।**
**न च तेऽर्थविदोऽर्थोऽर्थात् केवलं व्यवसीयते ॥३०८॥**

[§ ३६४. तत्र व्यवसायार्थमपि दर्शनकल्पनमुपपन्नम् । भवतु व्यवहारार्थमेव तत्; अभ्यासदशायां दर्शनादेव व्यवसायनिरपेक्षाद् व्यवहारप्रवृत्तेरिति चेदत्राह–]

5 **भावान्तरसमारोपे भाविताकारगोचराः ।**
**समक्षसंविदोऽर्थानां सन्निधिं नातिशेरते ॥३०९॥**

[§ ३६५. ····कोऽपरः स्यादन्यत्र व्यवसायादिति तदात्मिकैव दृष्टिः, अन्यथा तस्याः तद्विषयस्य चानवकल्पनादित्यावेदयन्नाह–]

**अणवः क्षणिकात्मानः किल स्पष्टावभासिनः ।**

10 [§ ३६६. परमपि अरुचिविषयं दर्शयति–]

**अतत्फलपरावृत्तार्थाकारस्मृतिहेतवः ॥३१०॥**

[§ ३६७. ततो यथा तन्निर्णयात्तदाकारः तथा साधारणरूपमपि इति तस्यैव प्रत्यक्षवेद्यत्वमेतदेवाह–]

**स्थूलस्पष्टविकल्पार्थाः स्वयमिन्द्रियगोचराः ।**

15 [§ ३६८. तथा च यत्सिद्धं तदाह–]

**समानपरिणामात्मशब्दसङ्केतहेतवः ॥३११॥**

[§ ३६९. साम्प्रतं तस्यास्ततोऽन्यत्वेऽपि तत्संवेदनवत् इन्द्रियप्रत्यक्षस्यापि व्यवसायात्मकत्वं दर्शयन्नाह–]

**स्वभावव्यवसायेषु निश्चयानां स्वतो गतेः ।**
20 **नाशस्यैकार्थरूपस्य प्रतीतिर्न विरुद्ध्यते ॥३१२॥**

[§ ३७०. भवतोऽपि स्वपरनिर्णयात्मनो ज्ञानस्य स्वत एव सचेतनादिवत् प्रतिक्षणपरिणामादेरपि निर्णयात् किं तत्र प्रमाणान्तरेणेति चेदत्राह–]

**व्यामोहशबलाकारवेदनानां विचित्रता ।**
**साकल्येन प्रकाशस्य विरोधः सम्प्रतीयते ॥३१३॥**

25 [§ ३७१. नन्वेवमगृहीताकारसंभवे कुतस्तदस्तित्वमित्यत्राह–]

**संभावितान्यरूपाणां समानपरिणामिनाम् ।**
**प्रत्यक्षाणां परोक्षात्मा प्रमाणान्तरगोचरः ॥३१४॥**

[§ ३७२. कुतः पुनरिदमवगन्तव्यं प्रमाणान्तरगोचर आत्मा प्रत्यक्षाणामिति, प्रत्यक्षस्य तत्र तद्विषये च प्रमाणान्तरस्यावृत्तेः, उभयविषयस्य च कस्यचिदभावादिति चेदत्राह–]

30 **प्रत्ययः परमात्मानमपि च प्रतिभासयेत् ।**
**सत्यं परिस्फुटं येन तत्र प्रामाण्यमश्नुते ॥३१५॥**

[ § ३७३. एकस्य स्वपरप्रतिभासिनः स्वभावद्वयस्यासंभवात्, अत आत्मानमेव प्रत्ययः प्रतिभासयतीति चेदत्राह–]

**आसादितविशेषाणामणूनामतिवृत्तितः ।**
**एकाकारविवेकेन नैकैकप्रतिपत्तयः ॥३१६॥**

[ § ३७४. भवत्वेवं युगपच्चित्रमेव न तत्क्रमेण क्षणिकत्वादिति चेन्न; चित्रस्यापि क्षणक्षीण- 5 शरीरस्याऽप्रतिवेदनादेतदेवाह–]

**कालापकर्षपर्यन्तविवर्त्तातिशया गतिः ।**
**अशक्तेरणुवत् सेयमनेकान्तानुरोधिनी ॥३१७॥**
**अंशग्रहविवेकत्वान्मन्दाः किमतिशेरते ?।**

[ § ३७५. सत्यपि तदभ्यासात् बहिस्तेषां स्वाकारनिर्णये नातः (नान्तः) तत्संभवः इत्याह–] 10

**निर्णयेऽनिर्णयान्मोहो बहिरन्तश्च तादृशः ॥३१८॥**

[ § ३७६. [महामतित्वं] प्रतिक्षणपरिणामादिसकलसूक्ष्मविशेषेष्वपि किन्नेति चेत् ? स्यादेव यद्यसावनावृतः स्यादेतदेव दर्शयति–]

**जीवः प्रतिक्षणं भिन्नश्चेतनो यदि नावृतः ।**
**सकलग्रहसामर्थ्यात्तथाऽऽत्मानं प्रकाशयेत् ॥३१९॥** 15

[ § ३७७. प्रतिक्षणपरिणामे जीवस्य क्षणिकत्वमेव न नित्यत्वमिति चेन्न; तस्यापि प्रत्यभिज्ञाबलेन तत्र व्यवस्थापितत्वात् । तदपि सदृशापरापरोत्पत्तिविभ्रमादेव न तात्त्विकादेकत्वादिति चेदत्राह–]

**तादात्म्यात् प्रत्यभिज्ञा न सदृशापरहेतुतः ।**
**अवस्थान्तर्विशेषोऽपि बहिरन्तश्च लक्ष्यते ॥३२०॥** 20

[ § ३७८. पुनरपि तादात्म्यात् प्रत्यभिज्ञानमित्यत्रोपपत्तिमाह–]

**सूक्ष्मस्थूलतरा भावाः स्पष्टास्पष्टावभासिनः ।**
**वितथेतरविज्ञाने प्रमाणेतरतां गते ॥३२१॥**

[ § ३७९. माभूत्स्वयं परामर्शरूपं दर्शनं परामर्शस्य कारणं तु भवति संस्कारप्रबोधसहायमिति चेदत्राह–] 25

**यस्मिन्नसति यज्जातं कार्यकारणता तयोः ।**
**भेदिनां प्रत्यभिज्ञेति रचितोऽयं शिलाप्लवः ॥३२२॥**

[ § ३८०. तदेवं पक्षधर्मत्वादिकमन्तरेणापि अन्यथानुपपत्तिबलेन हेतोर्गमकत्वं तत्र तत्र स्थाने प्रतिवाद्यमेदं (पाद्य नेदं) स्वबुद्धिपरिकल्पितमपि तु परमागमसिद्धमित्युपदर्शयितुकामो भगवत्सीमन्धरस्वामितीर्थङ्करदेवसमवशरणात् गणधरदेवप्रसादादापादितं देव्या पद्मावत्या यदानीय 30 पात्रकेसरिस्वामिने समर्पितमन्यथानुपपत्तिवार्त्तिकं तदाह–]

**अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ? ।**
**नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ? ॥३२३॥**

[§ ३८१. ततः सामस्त्येनैव तत्करणमभ्युपगन्तव्यं तच्च ततो न संभवति, तदेवाह–]

**प्रत्येति न प्रमाहेतुं प्रत्येति पुनरप्रमाम् ।**
5 **प्रमाहेतुतदाभासभेदोऽयं सुव्यवस्थितः ! ॥३२४॥**

[§ ३८२. भवतु तर्हि प्रमाणादेव अनुमानाद् हेतुप्रतिपत्तिरिति चेदत्राह–]

**नियमेन न गृह्णाति निःशङ्कं चतुरस्रधीः ।**
**अन्यथाऽसंभवेऽज्ञाने ह्यर्थश्चात्मव्यवस्थितः ॥३२५॥**

[§ ३८३. तन्न कल्पितस्तद्भाव उपपन्नः, तदाह–]

10 **प्रतिव्यूढस्तु तेनैव प्रभवोऽनलधूमयोः ।**
**प्रत्यक्षेऽर्थे प्रमाणेन विकल्पेन प्रकल्पितः ॥३२६॥**

[§ ३८४. एवमेतत् प्रमाणतः प्रत्यक्षादेव तत्प्रतिपत्तेः एतदेव दर्शयति–]

**प्रत्यक्षानुपलम्भाभ्यां यदि तत्त्वं प्रतीयते ।**
**अन्यथानुपपन्नत्वमतः किन्न प्रतीयते ? ॥३२७॥**

15 [§ ३८५. प्रतिबन्धो यदि असाधरणः न तस्मादनुमानम्, यत्र तत्सिद्धिः प्रत्यक्षात् साध्यस्यापि तत्र तत एव सिद्धेः अन्यत्र चाविद्यमानत्वात् । साधारणश्चेत्, न तर्हि स विषयः प्रत्यक्षस्य स्यात्, तस्य स्वलक्षण एव नियमादतः प्रमाणान्तरस्यैव विषयो वक्तव्यः, तदेवाह–]

**प्रमाणसाधनोपायः प्रमाणान्तरगोचरः ।**
**व्याप्यव्यापकभावोऽयमेकत्रापि विभाव्यते ॥३२८॥**

20 [§ ३८६. प्रतिबन्धसमारोपनिवारणार्थं तन्निरूपणमिति कथं तद्व्यापारवान् विकल्पो न प्रमाणम् । अप्रमाणात्तन्निवारणायोगादनुमानवत्, एतदेवाह–]

**सत्यप्यन्वयविज्ञाने स तर्कपरिनिष्ठितः ।**
**अविनाभावसम्बन्धः साकल्येनावधार्यते ॥३२९॥**

[§ ३८७. पुनरपि तर्कस्यैव प्रामाण्यं दृढयन्नाह–]

25 **सहदृष्टैश्च धर्मैस्तन्न विना तस्य संभवः ।**
**इति तर्कमपेक्षेत नियमेनैव लैङ्गिकम् ॥३३०॥**
**तस्माद् वस्तुबलादेव प्रमाणम्,**

[§ ३८८. यद्येवं भवतोऽपि तृतीयं प्रमाणं प्राप्तम्, प्रत्यक्षवत् परोक्षेऽप्यनन्तर्भावादिति चेदाह–]

30 **मतिपूर्वकम् ।**
**बहुभेदं श्रुतं साक्षात्पारम्पर्येण चेष्यते ॥३३१॥**

[ § ३८९. बहुभेदत्वमेव तस्य दर्शयितुं तद्व्यापारानाह–]

**अर्थमात्रावबोधेऽपि यतो नर्ते प्रवर्त्तनम् ।**
**स युक्तो निश्चयो मुख्यं प्रमाणं तदनक्षवत् ॥३३२॥**

[ § ३९०. तद् व्यापारान्तरोपन्यासेन दर्शयति–]

**लिङ्गसांवृतयोस्तुल्या गृहीतग्रहणादपि ।** 5
**व्यवच्छेदाविसंवादव्यवहर्त्तृप्रवृत्तयः ॥३३३॥**

[ § ३९१. अविसंवादव्यवहारयोः निश्चयेऽपि परस्य प्रसिद्धत्वात् तत्र व्यवच्छेदं दर्शयन्नाह–]

**शब्दाद्ययोगविच्छेदे तत्प्रामाण्यं न किं पुनः ? ।**
**अनुमानं तु हेतोः स्यादविनाभावनिश्चयात् ॥३३४॥** 10

[ § ३९२. तदेवं कार्यादावन्यथानुपपन्नत्वादेव हेतुत्वमवस्थाप्य अनुपलम्भेऽपि तत एव तदवस्थापयन्नाह–]

**यथा कार्यं स्वभावो वाप्यन्यथाऽऽशङ्क्यसंभवः ।**
**हेतुश्चानुपलम्भोऽयं तथैवेत्यनुगम्यताम् ॥३३५॥**

[ § ३९३. तदेवमदृश्यानुपलम्भस्य गमकत्वमन्यथानुपपत्तिबलेनोपपाद्य दृश्यानुपलम्भ- 15
स्यापि तत एव तत्, न तदन्तरेणेति दर्शयन्नाह–]

**प्रत्यक्षानुपलम्भश्च विधानप्रतिषेधयोः ।**
**अन्तरेणेह सम्बन्धमहेतुरिव लक्ष्यते ॥३३६॥**

[ § ३९४. इदानीं तत्प्रपञ्चं दर्शयति–]

**प्रपञ्चोऽनुपलब्धेर्नाऽपक्षे प्रत्यक्षवृत्तितः ।** 20
**प्रमाणं सम्भवाभावाद्विचारस्याप्यपेक्षणात् ॥३३७॥**

[ § ३९५. साम्प्रतमुन्नामादेस्तदुत्पत्त्याद्यभावेऽपि गमकत्वोपदर्शनेन हेतुः ( तोः ) त्रैविध्यमपि विध्वंसयन्नाह–]

**तुलोन्नामरसादीनां तुल्यकालतया न हि ।**
**नामरूपादिहेतुत्वं न च तद्व्यभिचारिता ॥३३८॥** 25
**तादात्म्यं तु कथञ्चित्स्यात् ततो हि न तुलान्तयोः ।**

[ § ३९६. न केवलं तुल्यकालत्वात् कथञ्चिद्वादे चानिष्टापत्तेः तुलान्तयोरेव न तादात्म्यमपि तु अप्ये (अन्ये) षामपीत्याह–]

**सास्नादीनां ........... चन्द्रार्वाक्परभागयोः ॥३३९॥**

[ § ३९७. तदेवमुन्नामादेरकार्यस्वभावस्यापि लिङ्गत्वोपपादनेन त्रैविध्यनियमं प्रतिषिध्य 30
पात्रकेसरिस्वामिनाऽपि तन्नियमः प्रतिषिद्ध इति दर्शयंस्तद्वचनमाह–]

**उपलब्धेश्च हेतुत्वादन्तर्भावात् स्वभावतः ।**
**तयोरनुपलम्भेषु नियमो न व्यवस्थितः ॥३४०॥**

[ § ३९८. पुनरपि नियमेन (नियमं) विधुरयितुं लिङ्गान्तरमुपदर्शयन्नाह-]

**अभविष्यत्यसंभाव्यो धर्मो धर्मान्तरे क्वचित् ।**
5 **शेषवद्धेतुरन्योऽपि गमकः सुपरीक्षितः ॥३४१॥**

[ § ३९९. साम्प्रतं नैयायिकादिकल्पितमपि तन्नियममतिदेशेन विधुरयन्नाह-]

**एतेन पूर्ववद्वीतसंयोग्यादौ कथा गता ।**
**तल्लक्षणप्रपञ्चश्च निषेद्धव्योऽनया दिशा ॥३४२॥**

[ § ४००. सम्प्रति हेत्वाभासं दर्शयन्नाह-]

10 **अन्यथानुपपन्नत्वरहिता ये विडम्बिताः ।**
**हेतुत्वेन परैस्तेषां हेत्वाभासत्वमीक्ष्यते ॥३४३॥**

[ § ४०१. यद्यन्यथानुपपत्तिवैकल्यमेकान्ततः सत्त्वादीनाम्, क्षणभङ्गादिवत् परिणामेऽपि न तेषां हेतुत्वं स्यादिति चेन्न, एकान्ततस्तदभावादेतदेवाह-]

**विरोधादन्वयाभावाद् व्यतिरेकाप्रसिद्धितः ।**
15 **कृतकः क्षणिको न स्यान्नैकलक्षणहानितः ॥३४४॥**

[ § ४०२. विरोधमेव दर्शयन्नाह-]

**सत्ता सम्प्रतिबद्धैव परिणामे क्रियास्थितेः ।**
**निर्व्यापारो हि भावः स्यान्नित्यत्वे वा निरन्वये ॥३४५॥**

[ § ४०३. कः पुनरन्वय (नरय) मन्वयो नाम यतो निरन्वयो निर्व्यापारत्वमुच्यते इति
20 चेदत्राह-]

**अवस्थादेशकालानां भेदेऽभेदव्यवस्थितिः ।**
**या दृष्टा सोऽन्वयो लोके व्यवहाराय कल्प्यते ॥३४६॥**

[ § ४०४. उक्तमर्थं श्लोकाभ्यां सङ्गृह्णन्नाह-]

**सर्वसन्तानविच्छेदः सति हेतौ फलोदयः ।**
25 **अन्यथा नियमाभावादानन्तर्यं विरुद्ध्यते ॥३४७॥**

[ § ४०५. ततः क्षणिकादेरर्थक्रियाव्यावृत्तिनिर्णयात्तदात्मकं सत्त्वं कृतकत्वादयश्च तद्विशेषाः तत्साधनाय प्रयुक्ता विरुद्धा एव, परिणामस्यैव साधनादित्यावेदयति-]

**सत्त्वमर्थक्रियाऽन्ये वा वस्तुधर्माः क्षणक्षये ।**
**हेत्वाभासा विरुद्धाख्याः परिणामप्रसाधनाः ॥३४८॥**

30 [ § ४०६. सम्प्रति अनैकान्तिकांस्तदाभासानाह-]

**सर्वज्ञप्रतिषेधे तु सन्दिग्धा वचनादयः ।**

[ § ४०७. येषां तु त्रैरूप्याद्गमकत्वं तन्मत्या हेतव एवेत्याह–]

**रागादिसाधनाः स्पष्टा एकलक्षणविद्विषाम् ॥३४९॥**

[ § ४०८. परकीयं तत्रोत्तरं दर्शयति–]

**धर्मिधर्मस्य सन्देहे व्यतिरेके ततो भवेत् ।**
**असिद्धिः प्रतिबन्धस्येत्यपरे प्रतिपेदिरे ॥३५०॥** 5

[ § ४०९. अत्रोत्तरमाह–]

**वाचो विरुद्धकार्यस्य सिद्धिः सर्वज्ञबाधिनी ।**
**शिरःपाण्यादिमत्त्वाद्या विरुद्धव्याप्तिसिद्धयः ॥३५१॥**

[ § ४१०. तदेवं विरुद्धकार्योपलब्धिं विरुद्धव्याप्तोपलब्धिश्च प्रतिपाद्य व्यापकविरुद्धोपलब्ध्यादिनाऽपि तद्बाधनं दर्शयन्नाह–] 10

**सत्सम्प्रयोगजत्वेन विरुद्धः सकलग्रहः ।**
**स्वभावकारणासिद्धेरेकलक्षणविद्विषाम् ॥३५२॥**

[ § ४११. एवमेते वचनादयः कार्यस्वभावानुपलम्भरूपतया त्रैविध्यमपरित्यजन्तोऽपि अन्यथानुपपत्तिवैकल्यादेव अगमकाः, तदेव दर्शयति–]

**कथन्न सम्भवी वक्ता सर्वज्ञस्तस्य तेन नो ।** 15
**यावत्प्रकृष्यते रूपं तावत्कार्यं विरुध्यते ? ॥३५३॥**

[ § ४१२. स्यादेवं यदि विज्ञानाद्वचनम्, न चैवं विवक्षायास्तत्कारणत्वात् । सा च रागविशेषत्वेन दोषात्मा सती विधूताशेषदोषतो निःशेषतत्त्वज्ञानान्निवर्त्तमाना वचनमपि निवर्त्तयत्येव । तत्कथन्नान्यथानुपपत्तिर्यतः तत्सुगतादावनिवर्त्तितप्रसरतया प्रवर्त्तमानं विवक्षा दोषोपस्थापनेन निःशेषवेदित्वं व्यापादयेदिति चेदत्राह–] 20

**विवक्षामन्तरेणापि वाग्वृत्तिर्जातु वीक्ष्यते ।**
**वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः ॥३५४॥**

[ § ४१३. अतो विज्ञानहेतुकैव तत्प्रवृत्तिरेतदेव दर्शयन्नाह–]

**प्रज्ञा येषु पटीयस्यः प्रायो वचनहेतवः ।**
**विवक्षानिरपेक्षास्ते पुरुषार्थं प्रचक्षते ॥३५५॥** 25

[ § ४१४. भवतु वा विवक्षा, तथापि न दोष इत्याह–]

**अप्रमत्ता विवक्षेयम्, अन्यथा नियमात्ययात् ।**

[ § ४१५. ततः सा प्रमादरहितैव ततो न दोषवतीत्याह–]

**इष्टं सत्यं हितं वक्तुमिच्छा दोषवती कथम् ? ॥३५६॥**

[ § ४१६. कुतः पुनः कस्यचित् सकलज्ञानं यतः 'कथम्' इत्याद्युच्यते इति चेदत्राह–] 30

**प्रज्ञाप्रकर्षपर्यन्तभावः सर्वार्थगोचरः ।**

[ § ४१७. भवतु वक्ता सर्वज्ञः तद्वचनस्य तु कथं यथार्थत्वं यतस्तज्ज्ञानार्थिनामन्वेषणीयः स्यात् ? खरसत एव शब्दानामयथार्थबुद्धिहेतुत्वेन तदुक्तानामपि वस्तुगोचरत्वानुपपत्तेरिति चेदत्राह–]

5 **तत्कार्योत्कर्षपर्यन्तभावः सर्वहिताभिधा ॥३५७॥**

[ § ४१८. तदेवं वक्तृत्वस्य सर्वज्ञत्वेनाविरोधमुपपाद्य पुरुषत्वादेरप्युपपादयन्नाह–]

**यथा वचनसर्वज्ञकार्यकारणभूतयोः ।**
**अविरोधेन वाग्वृत्तेराद्रेकस्तन्निषेधने ॥३५८॥**
**तथैव पुरुषत्वादेरक्षयाद् बुद्धिविस्तरे ।**
10 **सर्वप्रकाशसामर्थ्यं ज्ञानावरणसङ्क्षयात् ॥३५९॥**

[ § ४१९. एतदेव स्पष्टयन्नाह–]

**अक्षयात्पुरुषत्वादेः प्रतिपक्षस्य सङ्क्षयात् ।**
**सर्वतोऽक्षमयं ज्योतिः सर्वार्थैः सम्प्रयुज्यते ॥३६०॥**

[ § ४२०. यदि प्रतिपक्षपरिक्षयात् ज्योतिः, छद्मस्थानां तदभावात् कथं रूपादिवेदन-
15 मिति चेदत्राह–]

**कथञ्चित् स्वप्रदेशेषु स्यात्कर्मपटलाच्छता ।**
**संसारिणां तु जीवानां यत्र ते चक्षुरादयः ॥३६१॥**
**साक्षात्कर्तुं विरोधः कः सर्वथावरणात्यये ? ।**
**सत्यमर्थं तथा सर्वं यथाऽभूद्वा भविष्यति ॥३६२॥**

20 [ § ४२१. परदुःखादिकं यदि सर्वज्ञो न जानाति कथं तज्ज्ञत्वम् ? जानाति चेत् कथन्न दुःखादिमान्····इति चेदत्राह–]

**परदुःखपरिज्ञानाद् दुःखितः स कथं भवेत् ? ।**
**स्वतो हि परिणामोऽयं दुःखितस्य न योगिनः ॥३६३॥**

[ § ४२२. किं पुनर्भावनापाटवात् कुतश्चिद् बुद्धिप्रकर्षो दृष्टः यतः सकलवेदनमपि
25 ततो भवेदिति चेत् ? वाढमस्ति, इत्याह–]

**भावनापाटवाद् बुद्धेः प्रकर्षोऽयं मलक्षयः ।**
**कारणासम्भवाक्षेपविपक्षः सम्प्रतीयते ॥३६४॥**

[ § ४२३. तदेवमनैकान्तिकत्वं वक्तृत्वादीनामभिधाय साम्प्रतमसिद्धमपि हेत्वाभासं दर्शयन्नाह–]

30 **असिद्धश्चाक्षुषत्वादिः शब्दानित्यत्वसाधने ।**

[ § ४२४. बहुविधत्वं चेष्यते, तत्कथमिति चेदत्राह–]

**अन्यथाऽसंभवाभावभेदात्स बहुधा स्मृतः ॥३६५॥**

[§ ४२५. कैः कृत्वा स बहुधा इत्याह–]

**विरुद्धासिद्धसन्दिग्धैरकिञ्चित्करविस्तरैः ।**

[§ ४२६. भवतु तर्हि सान्वयनिरन्वयविशेषविवक्षारहितं तदुभयसाधारणं विनाशमात्रं धर्मी सिद्धत्वादिति चेन्न; विशेषद्वयस्यासंभवात् । नहि निरन्वयोऽपि विनाशः क्वचिदवगतिपथ- 5 प्रस्थायी सान्वयस्यैव प्रतीतेः तत्कथं तयोः किञ्चित् सामान्यं नाम यस्य हेतुम्प्रति आश्रयत्वमुप- कल्प्येत ? तदेवाह–]

**सर्वथा नास्ति सामान्यं परिणामविनाशयोः ॥३६६॥**
**यो हेतोराश्रयः, अनिष्टः, इष्टः स्वात्मा विशेषतः ।**

[§ ४२७. तन्न कल्पनासिद्धस्य सिद्धत्वमित्यसिद्ध एव सत्त्वादिः, एतदेवाह–] 10

**साध्यसाधनभावो न शब्दनाशित्वसत्त्वयोः ॥३६७॥**

[§ ४२८. अत्रैव प्रतिवस्तूपमया दृष्टान्तमाचष्टे–]

**अनलः पावकोऽग्निरित्यादित्यनेकान्तविद्विषाम् ।**

[§ ४२९. भवतु कल्पितस्तत्रानेकान्तः इति चेन्न; अनवस्थादोषस्योद्घोषितत्वात् । भवतः कथं तयोस्तद्भाव इति चेदाह–] 15

**सर्वान्यसदृशः शब्दः सत्त्वादिपरिणामतः ॥३६८॥**
**सर्वार्थान्यासमः शब्दः शब्दादिपरिणामतः ।**

[§ ४३०. शब्दस्य परिणामि (णाम) त्वे परिणामिना भवितव्यम् तस्य तद्धर्मत्वात् । न चासौ कश्चिदप्यस्तीति चेन्न; पुद्गलपरमाणूनां भावात् । एतदेवाह–]

**अणूनां श्रुतयोग्यत्वातिशयादानहानयः ॥३६९॥** 20
**शब्दोत्पत्तिविनाशास्तत्साध्यसाधनसंस्थितिः ।**

[§ ४३१. सम्प्रति चिरन्तनाचार्यानुस्मरणेन पुण्यातिशयावाप्तिमनुसन्दधानः श्रीमत्पात्रके- सरिवचनेन हेत्वाभासानामुपसंहारं दर्शयन्नाह–]

**अन्यथानुपपन्नत्वरहिता ये त्रिलक्षणाः ॥३७०॥**
**अकिञ्चित्कारकान् सर्वांस्तान् वयं सङ्गिरामहे ।** 25

[§ ४३२. सम्प्रति दूषणाभासं दर्शन्नाह–]

**तत्र मिथ्योत्तरं जातिः,**

[§ ४३३. कीदृशं तदित्याह–]

**यथाऽनेकान्तविद्विषाम् ॥३७१॥**
**दध्युष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् ।** 30

[§ ४३४. स्याद्वादिमतमनवबुद्ध्य तत्रेदमुच्यमानं धर्मकीर्त्तेर्विदूषकत्वमावेदयति-]

**पूर्वपक्षमविज्ञाय दूषकोऽपि विदूषकः ॥३७२॥**

[§ ४३५. एतदेव प्रसिद्धेन निदर्शनेन दर्शयन्नाह-]

**सुगतोऽपि मृगो जातो मृगोऽपि सुगतः स्मृतः ।**
**तथापि सुगतो वन्द्यो मृगः खाद्यो यथेष्यते ॥३७३॥**
**तथा वस्तुबलादेव भेदाभेदव्यवस्थितेः ।**
**चोदितो दधि खादेति किमुष्ट्रमभिधावति ? ॥३७४॥**

[§ ४३६. सम्प्रति जात्यन्तरं दर्शयन्नाह-]

**अत्रैवोभयपक्षोक्तदोषारेकानवस्थितेः ।**

[§ ४३७. पुनरपि तदन्तरमाह-]

**अनन्वयादिदोषोक्तेः प्रपञ्चो वाऽनया दिशा ॥३७५॥**

[§ ४३८. ननु यथा व्याप्यसाधर्म्यादिसमा जातिर्नैयायिकेन कथ्यते तथा त्वया किन्नेति चेदत्राह-]

**मिथ्योत्तराणामानन्त्यात् शास्त्रे वा विस्तरोक्तितः ।**
**साधर्म्यादिसमत्वेन जातिर्नेह प्रतन्यते ॥३७६॥**

[§ ४३९. यथा जयेतरव्यवस्था तथा दर्शयन्नाह-]

**प्रकृताशेषतत्त्वार्थप्रकाशपटुवादिनः ।**
**विब्रुवाणोऽब्रुवाणो वा विपरीतो निगृह्यते ॥३७७॥**

[§ ४४० तस्मादेकस्य प्रकृतसिद्धेरेव परस्य निग्रहो न प्रकारान्तरेण, तदेवाह-]

**असाधनाङ्गवचनमदोषोद्भावनं द्वयोः ।**
**न युक्तं निग्रहस्थानमर्थापरिसमाप्तितः ॥३७८॥**

[§ ४४१. एतदेव दर्शयति-]

**वादी पराजितोऽयुक्तो वस्तुतत्त्वे व्यवस्थितः ।**
**तत्र दोषं ब्रुवाणो वा विपर्यस्तः कथं जयेत् ? ॥३७९॥**

[§ ४४२. कः पुनसौ दृष्टान्तो यद्दोषानुद्भावनं प्रतिवादिनो निग्रहस्थानं सङ्कल्पयन्ति सौगताः ? इति चेदत्राह-]

**सम्बन्धो यत्र निर्ज्ञातः साध्यसाधनधर्मयोः ।**
**स दृष्टान्तः, तदाभासाः साध्यादिविकलादयः ॥३८०॥**

[§ ४४३. कुतः पुनरेषामनुद्भावनान्न निग्रहस्थानमिति चेदत्राह-]

**सर्वत्रैव न दृष्टान्तोऽनन्वयेनापि साधनात् ।**
**अन्यथा सर्वभावानामसिद्धोऽयं क्षणक्षयः ॥३८१॥**

[§ ४४४. कः पुनरयं वादो नाम यत्रेदं निग्रहस्थानमित्यत्राह–]

**प्रत्यनीकव्यवच्छेदप्रकारेणैव सिद्धये ।**
**वचनं साधनादीनां वादः सोऽयं जिगीषतोः ॥३८२॥**

[§ ४४५. ततो लाभाद्यभाव एव निग्रहो वक्तव्यः इति चेदत्राह–]

**आस्तां तावदलाभादिरयमेव हि निग्रहः ।** 5
**न्यायेन विजिगीषूणां स्वाभिप्रायनिवर्त्तनम् ॥३८३॥**

[§ ४४६. सम्प्रति वादाभासं दर्शयति–]

**तदाभासो वितण्डादिरभ्युपेताव्यवस्थितेः ।**
**तदात्मोत्कर्षणायैव वाचो वृत्तिरनेकधा ॥३८४॥**

[§ ४४७. साम्प्रतं प्रत्यक्षादिज्ञानानां संख्यादिकथननिरूपणे प्रयोजनमुपदर्शयितुकामः 10
परेण प्रश्नङ्कारयति–]

**प्रामाण्यं यदि शास्त्रगम्यमथ न प्रागर्थसंवादनात्,**
**सङ्ख्यालक्षणगोचरार्थकथने किं कारणं चेतसाम् ? ।**
**आ ज्ञातं सकलागमार्थविषयज्ञानाविरोधं बुधाः,**
**प्रेक्षन्ते तदुदीरितार्थगहने सन्देहविच्छित्तये ॥३८५॥** 15

[§ ४४८. कुतः पुनर्न्यायदर्शनादि निःश्रेयसनिबन्धनतया प्रसिद्धमपि शास्त्रान्तरं परित्यज्य पुरुषार्थसिद्धये भगवदा [म्ना] य एव भवतामभिरतिरिति चेदत्राह–]

**शास्त्रं शक्यपरीक्षणेऽपि विषये सर्वं विसंवादकम्,**
**मिथ्यैकान्तकलङ्कितं बहुमुखैरुद्वीक्ष्य तर्कागमैः ।**
**दाहार्तैः परिणामकल्पविटपिच्छायागतैः साम्प्रतम्,** 20
**विस्रब्धैरकलङ्करत्ननिचयन्यायो विनिश्चीयते ॥३८६॥**

**इति न्यायविनिश्चये द्वितीयः अनुमानप्रस्तावः ॥**



## ३. तृतीयः प्रवचनप्रस्तावः ।

[§ ४४९. तदेवं प्रस्तुतप्रस्तावाभ्यां प्रत्यक्षानुमानयोः प्रामाण्यं निश्चित्य साम्प्रतं वचनस्य तन्निश्चय(यं)प्रतीतप्रस्तावान्यवृत्तेन सूचितं दर्शयितुमाह–] 25

**सकलं सर्वथैकान्तप्रवादातीतगोचरम् ।**
**सिद्धं प्रवचनं सिद्धपरमात्मानुशासनम् ॥३८७॥**

[ § ४५०. भवतु नाम कश्चिद्विश्वदर्शी परमवीतरागश्च सः, तत्कुतः प्रतिपत्तव्यः⋯⋯ न च प्रमाणान्तरमस्ति यतस्तत्प्रतिपत्तिः । अतः कथं तस्य प्रवचनानुशासित्वेन पर्येषणं प्रेक्षावद्भिरिति चेदत्राह–]

**तथान्यगुणदोषेषु संशयैकान्तवादिभिः ।**
**पुरुषातिशयो ज्ञातुं यद्यशक्यः किमिष्यते ? ॥३८८॥**

5

[ § ४५१. ततो न रागादिमति तदन्यव्यापारादिर्यतः ततः पुरुषातिशयप्रतिपत्तिरव्यभिचारिणी न भवेदेतदेवाह–]

**परोक्षोऽप्यविनाभावसम्बद्धैर्गुणदोषयोः ।**
**शास्त्रैर्निर्वर्त्तितैः शास्त्रकारवत्सम्प्रतीयते ॥३८९॥**

10 [ § ४५२. सम्प्रति सर्वथैकान्तवादिनः सुगतादेः दोषवत्त्वमेव तद्व्यापारसमधिगम्यमावेदयन्नाह–]

**सिद्धहिंसानृतस्तेयाब्रह्मचर्यप्रवृत्तितः ।**
**स प्रत्यस्तमिताऽशेषदोषो नेति प्रतीयते ॥३९०॥**

[ § ४५३. भवतु नाम सुगतस्तथाविधः तथापि किमित्याह–]

15 **हेयोपादेयतत्त्वस्य सोपायस्य किलेदृशः ।**
**प्रवक्तेति धिगनात्मज्ञं तदसाध्यमसाधनम् ! ॥३९१॥**

[ § ४५४. पुनरप्यत्रैवोपचयमाह–]

**सर्वथा सदुपादेयं हेयं स्यात्तदकारणम् ।**
**तदर्थोऽयं प्रयासश्चेत्यहो सत्यव्यवस्थितिः ! ॥३९२॥**

20 [ § ४५५. इदमेव श्लोकैः विवरीतुमाह–]

**करुणा स्वपरज्ञानसन्तानोच्छेदकारणम् ।**
**इति नः करुणेष्टमत्यन्तं परदुःखं न गोचरः ॥३९३॥**

[ § ४५६. इति तद्धेतुना नैव कृपा, या युक्तिमृच्छति, तदेवाह–]

**तत्त्वज्ञानाद्यनुत्पादहेतुरुन्मार्ग एव सः ।**

25 [ § ४५७. केवलं चित्तसन्तानस्य अपरिशुद्धस्य सतः सामग्रीविशेषतः परो भागो विशुद्ध उत्पद्यत इति तत्राह–]

**मिथ्याविकल्पविज्ञानभावनापरिपाकतः ॥३९४॥**
**तत्त्वज्ञानमुदेतीति कुतस्तत्त्वविनिश्चयः ? ।**

[ § ४५८. तन्नानादिसंस्कारसंभवः तदपरिज्ञानादेस्त ( नादेतदे ) वाह–]

30 **अनादिवासना न स्यात् त्रैलोक्यमविकल्पकम् ॥३९५॥**

[ § ४५९. ततः प्रत्यक्षत्वादात्मदर्शनस्य न तद्विपरीतैरनुमानविकल्पैरुपपन्ना बोद्धा ( बाधा ) परिकल्पना। तदाह-]

**निरुपद्रवभूतस्य बाधाऽयुक्ता विपर्ययैः।**

[ § ४६०. भवतु तर्हि संविदद्वैतमेव अविशेषवत्, यद्वद्वैते न तोषोऽस्ति मुक्त एवासि सर्वथेत्यभिधानादिति चेदत्राह-]　5

**विच्छेदो वरमुच्छेदात् विदस्तत्पक्षपाततः ॥३९६॥**

[ § ४६१. तदवस्थितिश्च करुणयेति चेत्तदाह-]

**यत्तावत्करुणावत्त्वात्तिष्ठत्येव हि चेतसाम्।**
**सन्तानः,**

[ § ४६२. अत्र दूषणमाह-]　10

**स परोच्छेदान्न समत्वं प्रपद्यते ॥३९७॥**

[ § ४६३. संसारदुःखसम्बन्धः सन्तानस्याऽसतः कथम् ? मोक्षोऽपि तदसम्बन्धः सन्तानस्यासतः कथम् ? ततः कथञ्चिदसत एवासौ तथा चेदाह-]

**तथा निरास्रवीभावः संसारान्मोक्ष उच्यते।**
**सन्तानस्यात्मनो वेति शब्दमात्रं तु भिद्यते ॥३९८॥**　15

[ § ४६४. साम्प्रतं सांख्यादिमते वेदस्य तत्प्रचिख्यासुराह-]

**नित्यस्यापि सतः साक्षाददृश्यानुभवात्मनः।**
**सुखादिर्विषयः शब्दादविशेषधियाऽन्यया ॥३९९॥**
**प्रदर्श्यः;**

[ § ४६५. साहसान्तरं पुनरित्यादिना निवेदयति-]　20

**पुनरस्यैव गुणयोगनिवृत्तितः।**
**निर्वाणमाह वेदोऽयं प्रमाणमिति साहसम्! ॥४००॥**

[ § ४६६. समानस्यापि कर्तुः क्वचिद्विप्रलम्भसंभवे चक्षुरादावप्यनाश्वासापत्तेरेतदेवाह-]

**विश्वलोकाधिकज्ञाने विप्रलम्भनशङ्किनः।**
**प्रामाण्यं कथमक्षादौ चञ्चले प्रमिमीमहे? ॥४०१॥**　25

[ § ४६७. तदेव त्रिभिरन्तरश्लोकैर्व्याचिख्यासुराह-]

**परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम्।**
**अदृष्टदोषशङ्कायाममानं सकलं भवेत् ॥४०२॥**
**प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः।**
**दर्शनादर्शनाध्यासात् क्वचिद् वृत्तसमत्वतः ॥४०३॥**　30

**तज्ज्ञानपूर्वकं तर्क्यमनुमानसमीक्षितम् ।**
**मानं वस्तुबलादेव सर्ववस्तुनिबन्धनम् ॥४०४॥**

[ § ४६८. यद्यपौरुषेयस्यापि पुरुषगुणबलादेव अर्थतत्त्वनिश्चयः, प्रवचनस्य पौरुषेयत्वमेव किन्न भवतीति मन्वान आह–]

5 **आगमः पौरुषेयः स्यात्प्रमाणमतिलौकिकम् ।**
**संवादासंभवाभावात् समयाविप्रलम्भनः ॥४०५॥**

[ § ४६९. किञ्चायमनुपलम्भो वादिनः स्वस्य वा भवेत् सर्वस्य वा गत्यन्तराभावात् । तत्रोभयत्रापि दोषमावेदयन्नाह–]

**सकलज्ञस्य नास्तित्वे स्व-सर्वानुपलम्भयोः ।**
10 **आरेकासिद्धते तस्याप्यर्वाग्दर्शनतोऽगतेः ॥४०६॥**

[ § ४७०. ततो युक्तमक्षानपेक्षं केवलिनः प्रत्यक्षम् तत्र वैशद्यस्य तल्लक्षणस्य पुष्कलत्वात्, तस्य चावरणविविक्तनिबन्धनत्वेन अक्षव्यापारपराधीनत्वाभावादेतदेवाह–]

**विज्ञानमञ्जसा स्पष्टं विप्रकृष्टे विरुद्ध्यते ।**
**न, स्वप्रेक्षणिकादेर्वा ज्ञानावृत्तिविवेकतः ॥४०७॥**

15 [ § ४७१. साम्प्रतं प्रतिपादितार्थसङ्ग्रहार्थं श्लोकानाचक्षाणः प्रथमम् आत्मनो ज्ञानात्मकत्वे सर्वस्य सर्वदर्शित्वपर्यनुयोगम् आवरणविवेकवैचित्र्येण परिहरन्नाह–]

**ततः संसारिणः सर्वे कथञ्चिचेतनात्मकाः ।**
**तत्तत्स्वभावतो ज्ञानं सर्वत्र शबलायते ॥४०८॥**

[ § ४७२. अनादिमूर्त्तकर्मसम्बन्धात्तत्प्रदेशानुप्रवेशरूपात् कथञ्चिन्मूर्त्तत्वस्यापि भावा-
20 त्तदेवाह–]

**अभिन्नो भिन्नजातीयैर्जीवः स्याचेतनः स्वयम् ।**

[ § ४७३. स तर्हि कस्मात् सर्वतो न प्रकाशते सर्वविषयतयेति चेदत्राह–]

**मलैरिव मणिर्विद्धः कर्मभिर्न प्रकाशते ॥४०९॥**

[ § ४७४. यदा तु तदावरणमलानां····निःशेषवृत्त्या जीवतो विश्लेषः तदा प्रकाशत
25 एवासौ समन्ततः सर्वार्थसाक्षात्करणरूपतया च····तदेवाह–]

**सर्वार्थग्रहसामर्थ्यात् चैतन्यप्रतिबन्धिनाम् ।**
**कर्मणां विगमे कस्मात् सर्वानर्थान्न पश्यति ? ॥४१०॥**

[ § ४७५. निरवशेषनिर्धूतबोधावरणमलस्यापि केवलिनः पुनः कुतश्चिदभिसम्बन्धसंभवादनर्थोपनिबन्धः किन्न भवतीति चेदत्राह–]

30 **प्रभुः साक्षात्कृताशेषप्रपञ्चभुवनत्रयः ।**
**अनर्थैः परमात्मानमत एव न योजयेत् ॥४११॥**

[§ ४७६. कुतः पुनः प्रभोर्निरवशेषप्रपञ्चभुवनत्रयसाक्षात्करणमिति चेदत्राह–]

**एवं यत्केवलज्ञानमनुमानविजृम्भितम् ।**
**नर्ते तदागमात् सिद्ध्येत्,**

[§ ४७७. नन्वेवम् आगमस्य तत्पूर्वकत्वं न भवेत् ततोऽपि पूर्वं तस्य भावादिति चेदत्राह–]　5

**न च तेन विनाऽऽगमः ॥४१२॥**

[§ ४७८. नचैवमन्योन्यसंश्रयः; हेतुहेतुमद्भावेन परमागमकेवलज्ञानसन्तानस्य बीजाङ्कुरवदनादित्वात् । एतदेव दर्शयन्नाह–]

**सत्यमर्थबलादेव पुरुषातिशयो मतः ।**
**प्रभवः पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥४१३॥**　10

[§ ४७९. ग्रहगत्यादयो हि देशकालजातीयविकल्पेन प्राणिनां श्रेयःप्रत्यवायोपनिपातपिशुनतया प्रतीयमाना निःशेषानपि देशकालविशेषान् तन्निवासिनः त्रसस्थावराद्यनेकविकल्पान् प्राणिनः तदधिकरणानदृष्टविशेषानपि तद्धेतुफलविकल्पेन प्रत्याययन्ति, अन्यथा तत्पिशुनतया तत्प्रतिपत्तेरनुपपत्तेः । तत्कथमशेषविषयमेव ततस्तन्न साधितं भवेदेतदेवाह–]

**ग्रहादिगतयः सर्वाः सुखदुःखादिहेतवः ।**　15
**येन साक्षात्कृतास्तेन किन्न साक्षात्कृतं जगत् ? ॥४१४॥**

[§ ४८०. साम्प्रतं परस्य निर्बन्धाल्लिङ्गबलोपनिबन्धनत्वे सत्यपि तस्य सूक्ष्मादिपदार्थसाक्षात्करणमवश्यम्भावीति दर्शयन्नाह–]

**सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा ।**
**अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः ॥४१५॥**　20

[§ ४८१. भवत्येव तत्प्रसङ्गसाधनं यदि ग्रहगत्यादिक्रममनुमानतः प्रतिपद्य कश्चिदुपदिशेत्, न चैवम्, तच्छास्त्रस्य वेदाङ्गत्वेनापौरुषेयस्य उपदेष्टुरभावात्, एतदेवाह–]

**वेदस्यापौरुषेयस्य स्वतस्तत्त्वं विवृण्वतः ।**
**आयुर्वेदादि यद्यङ्गम् ;**

[§ ४८२. अत्रोत्तरमाह–]　25

**यत्नस्तत्र निरर्थकः ॥४१६॥**

[§ ४८३. स च पुरुषः तदर्थसाक्षात्कार्येव नापरः····तदेव दर्शयन्नाह–]

**शास्त्रज्ञानं तथैव स्यात् सामग्रीगुणदोषतः ।**

[§ ४८४. प्रयत्नसापेक्षत्वेन तत्र नित्यत्वविरोधस्याभिधानात् । तदविरोधेऽपि दूषणमाह–]

**अविरोधेऽपि नित्यस्य भवेदन्धपरम्परा ॥४१७॥**　30

**तदर्थदर्शिनोऽभावान्म्लेच्छादिव्यवहारवत् ।**

[§ ४८५. सत्यपि तदर्थाभिमुखे अनादिसम्प्रदायत्वे वेदागमस्य भवितव्यं तदर्थदर्शिना पुरुषेणेति प्रतिपादयिषुः पूर्वपक्षयति-]

**अनादिसम्प्रदायश्चेदायुर्वेदादिरागमः ॥४१८॥**

5 [§ ४८६. अत्रोत्तरमाह-]

**कालेनैतावताऽनाप्तः कथन्न प्रलयं गतः ? ।**

[§ ४८७. ततो यत्सिद्धं तदाह-]

**सिद्धं श्रुतेन्द्रियातीतं त्रिकालविषयं स्फुटम् ॥४१९॥**

[§ ४८८. तर्हि तथाविधस्य तज्ज्ञानस्य संगता ( सुगता ) दिष्वेव भावात् त एव 10 तद्वेदादेः प्रवर्त्तकाः; ( काः स्युः ) इति चेदत्राह-]

**तथा न क्षणिकादीनां सर्वथाप्तगुणात्ययात् ।**

[§ ४८९. उपसंहरन्नाह-]

**तद्विरम्य विरम्यैतद् युक्तं शास्त्रप्रवर्त्तनम् ॥४२०॥**

[§ ४९०. तदेवं तस्य शास्त्रं प्रत्युपयोगमभिधाय तत्र प्रवृत्तेरर्थवत्त्वं प्रत्यभिधित्सुराह-]

15 **तादृशोऽभावविज्ञाने शास्त्रे वृत्तिरनर्थिका ।**

[§ ४९१. तत्र बाधकवत् साधकस्याप्यसंभवेन संशयस्यैवोपपत्तेरिति चेदत्राह-]

**सन्देहेऽपि च सन्देहः ततस्तत्त्वं निरूप्यते ॥४२१॥**

[§ ४९२. तदेवं वेदावयवत्वेन आयुर्वेदादेः नित्यत्वे दोषमभिधाय साम्प्रतं शब्दमात्रस्य नित्यत्वे तं दर्शयन्नाह-]

20 **स्वतन्त्रत्वे तु शब्दानां प्रयासोऽनर्थको भवेत् ।**
**व्यक्त्यावरणविच्छेदसंस्कारादिविरोधतः ॥४२२॥**
**वंशादिस्वरधारायां सङ्कुलं प्रतिपत्तितः ।**
**क्रमेणाशुग्रहेऽयुक्तः सकृद्ग्रहणविभ्रमः ॥४२३॥**
**ताल्वादिसन्निधानेन शब्दोऽयं यदि जायते ।**
25 **को दोषो येन नित्यत्वं कुतश्चिदवकल्प्यते ? ॥४२४॥**

[§ ४९३. भवतोऽपि तदुपादानस्य प्राग्भाविनः कुतो नोपलब्धिरिति चेदत्राह-]

**उपादानस्य सूक्ष्मत्वाद्युक्तश्चानुपलम्भनम् ।**

[§ ४९४. प्रत्यभिज्ञानात्तत्र नित्यत्वमेवोपपन्नं न भेदः, तत्प्रतिपत्तेस्तेनैव प्रतिक्षेपादिति चेदत्राह-]

30 **सादृश्यात्, नैकरूपत्वात् स एवायमिति स्थितिः ॥४२५॥**

[§ ४९५. यदि चायं निर्बन्धः तथाभूतयाऽपि प्रत्यभिज्ञया प्रतिक्षेपान्नित्यः शब्द एवेति। तत्राह-]

**यदि चैवंविधो नित्यो नित्यास्ते विद्युदादयः।**
**प्रत्यभिज्ञाऽप्रमाणं स्याद् युगपद्भिन्नदेशयोः ॥४२६॥**

[§ ४९६. भवतु ततस्तत्राप्यभेदप्रतिपत्तिरिति चेदत्राह-] 5

**सर्वार्थानामनादित्वे स विशेषो निराश्रयः।**
**योऽन्यथासम्भवी शब्दघटाद्याख्योऽवभासते ॥४२७॥**

[§ ४९७. तदुच्चारणस्य पारार्थ्यान्यथानुपपत्त्या नित्य एव शब्दः इति चेदुत्तरमाह-]

**स वर्णपदवाक्यानां कालदेशादिभेदिनाम्।**
**सदृशानां प्रबन्धोऽयं सर्वेषां न विरुध्यते ॥४२८॥** 10

[§ ४९८. कथं पुनरसति नित्यत्वे शब्दस्य प्रामाण्यमिति चेत्; क एवमाह-तस्य प्रामाण्यमिति, सम्यग्ज्ञानस्यैव तत्त्वात्। शब्दस्य तु तत्त्वं तत्कारणत्वेन उपचारात्। न च तद्धेतुत्वमपि नित्यत्वात्, अपि तु तदर्थवेदिपुरुषपूर्वकत्वात्, एतदेव दर्शयन्नाह-]

**वाचः प्रमाणपूर्वायाः प्रामाण्यं वस्तुसिद्धये।**
**स्वतः सामर्थ्यविश्लेषात् सङ्केतं हि प्रतीक्षते ॥४२९॥** 15

[§ ४९९. तदेवमनेकधा समयप्रतिपत्तिसंभवेनोपपन्नं तत्प्रतीक्षयैवार्थि(वार्थ)प्रत्यायकत्वं वचनस्य। तदनेकत्वमेव दर्शयन्नाह-]

**स पुनर्बहुधा लोकव्यवहारस्य दर्शनात्।**
**शब्दार्थयोर्विकल्पेन सन्निवेशोऽनुवर्त्तते ॥४३०॥**

[§ ५००. यदि पुनः शब्दस्य वस्तुनि स्वत एव योग्यत्वं को दोषो येन सङ्केतस्तत्रा- 20 पेक्ष्यते? इति चेदुच्यते-तत्सर्वविषयं नियतविषयं वा? पूर्वविकल्पे ततो युगपत्सर्वार्थप्रतीतिप्रसङ्गात्, तथा च न ततो नियतविषयप्रवृत्त्यादिरिति व्यवहारविलोपः। तत आह-]

**न सर्वयोग्यता साध्वी सङ्केतान्नियमो यदि।**

[§ ५०१. द्वितीयविकल्पे दोषमाह-]

**सम्बन्धनियमेऽन्यत्र समयेऽपि न वर्त्तताम् ॥४३१॥** 25

[§ ५०२. कस्तर्हि तयोः सम्बन्धः? इत्याह-]

**न हि शब्दार्थसम्बन्धो यतोऽर्थः सम्प्रतीयते।**
**तादृशो वाचकः शब्दः सङ्केतो यत्र वर्त्तते ॥४३२॥**

[§ ५०३. तत्र सौगतमते शब्दस्य संभवो वर्णस्यैव अनवस्थितो (तेः) तत्क्रमात्मनः पदादेरप्यव्यवस्थितेः। एतदेवाह-]

30

**क्रमेणोच्चार्यमाणेषु ध्वनिभागेषु केषुचित् ।**
**न वर्णपदवाक्याख्या विकारेष्वेव संभवात् ॥४३३॥**

[ § ५०४. स्वमते तु तत्संभवं दर्शयन्नाह— ]

**शब्दभागाः स्वहेतुभ्यः समानोऽन्नयहेतवः ।**
5 **सकलाग्रहणात्तेषां युक्ता हि श्रोत्रगोचराः ॥४३४॥**

[ § ५०५. तथाच पुद्गलपर्यायः शब्दः शरीरावयवसम्बन्धेनोपलभ्यमानत्वात् शीतातपादिवत्....एतदेव दर्शयन्नाह— ]

**परिणामविशेषा हि भावानां भावशक्तयः ।**
**ध्वनयस्तत्समर्थानामभावादतिरेकिणाम् ॥४३५॥**

10 [ § ५०६. साम्प्रतं प्रकरणार्थमुपसंहृत्य दर्शयन्नादितः शब्दानामपौरुषेयत्वे दोषमावेदयति— ]

**वाचामपौरुषेयीणामाविर्भावो न युज्यते ।**

[ § ५०७. पौरुषेयस्यापि वाचकत्वमभि (त्वमनभि) मतस्यापि किन्न स्यादिति चेदत्राह— ]

**सम्यग्ज्ञानाङ्कुशः सत्यः पुरुषार्थाभिधायकः ॥४३६॥**
15 **अत्रापौरुषेयत्वं जातु सिद्धमनर्थकम् ।**

[ § ५०८. किं पुनस्तत्सत्यम् यदभिधायित्वेन शब्दः सत्य उच्यते इत्यत्राह— ]

**सर्वार्थानामनेकात्मपरिणामौ व्यवस्थितौ ॥४३७॥**
**मार्गस्तद्विषयश्चेति मतं सत्यं चतुर्विधम् ।**

[ § ५०९. जीवादीनाञ्च मार्गविषयत्वप्रतिपादनमपरिज्ञाततद्रूपस्य प्रेक्षावतो मोक्षार्थायाः
20 प्रवृत्तेरनुपपत्तेः अत एवाह— ]

**अहं ममास्रवो बन्धः संवरो निर्जरा क्षयः ॥४३८॥**
**कर्मणामिति सत्कृत्य प्रेक्षाकारी समीक्षते ।**
**तत्त्वज्ञानप्रभावेण तपः संवरणं नृणाम् ॥४३९॥**
**तपसश्च प्रभावेण निर्जीर्णं कर्म जायते ।**
25 **रागद्वेषौ विहायैव गुणदोषवतोस्तयोः ॥४४०॥**
**मोक्षज्ञानात् प्रवर्त्तन्ते मुनयः समबुद्धयः ।**
**सज्ज्ञानपरिणामात्मतत्त्वसम्प्रतिपत्तितः ॥४४१॥**
**पीतदोषाश्रवाकारो विपरीतग्रहक्षयः ।**

[ § ५१०. कर्मपुद्गलश्लेषोऽपि जीवस्य अपरमोहादिपूर्वकः तत्त्वात् धत्तूरादिरसोपश्लेषवत्
30 इति सिद्ध आश्रवो बन्धश्च, तदुपश्लेषस्य बन्धत्वात्, तद्धेतोश्च मोहादेराश्रवत्वात् । एतदेवाह— ]

**रागादयः सजातीयपरिणामाभिवृद्धयः ॥४४२॥**
**सूचयन्ति हि कर्माणि स्वहेतुप्रकृतीनि च ।**

[ § ५११. साम्प्रतं 'तत्त्वज्ञान' इत्यादिना उक्तमपि कर्मनिर्जरणं विनेयजिघृक्षया स्पष्टममिधित्सुराह—]

**सात्मीभावाद्विपक्षस्य सतो दोषस्य सङ्क्षये ॥४४३॥** 5
**कर्माश्लेषः, प्रवृत्तानां निवृत्तिः फलदायिनाम् ।**

[ § ५१२. कुतः पुनः विपक्षस्य सात्मीभावः ? इत्याह—]

**प्रतिपक्षस्थिरीभावः प्रायः संस्कारपाटवात् ॥४४४॥**

[ § ५१३. के पुनस्ते दोषाः येषां तद्भावनाविपक्षभावेनोपेक्षिष्यते इति चेदत्राह—]

**निर्ह्रासातिशयौ येषां तत्प्रकर्षापकर्षयोः ।** 10

[ § ५१४. तत्र तस्य [नैरात्म्यस्य] भावना, तत्संभवेऽपि न किञ्चित्फलमित्यावेदयति—]

**यद्यप्यनात्मविज्ञानभावनासंभवस्ततः ॥४४५॥**
**न निरोधो निरोधे वा न प्रयोजनमीक्ष्यते ।**

[ § ५१५. तत्र सौगतकल्पितो मोक्षः, तदभावान्न तन्मार्गत्वम् । अनात्मविज्ञानाभियोगस्य नैरात्म्यज्ञानस्य मिथ्यात्वाच्च न तदभ्यासस्य मार्गत्वमित्यादर्शयति—] 15

**हेयोपादेयतत्त्वार्थविपरीतव्यवस्थितेः ॥४४६॥**
**मिथ्याज्ञानमनात्मज्ञं मैत्र्यादिप्रतिरोधतः ।**

[ § ५१६. साम्प्रतं स्वमते प्रमोदादेर्विषयभावादिना विधानमुपपन्नमिति दर्शयन्नाह—]

**तत्त्वार्थदर्शनज्ञानचारित्रेषु महीयसाम् ॥४४७॥**
**आत्मीयेषु प्रमोदादिरत एव विधीयते ।** 20

[ § ५१७. न चैवमवस्थितस्यापि सुगतस्य क्वचिन्मैत्र्यादिकं संभवतीत्याह—]

**यस्तावत्करुणावत्त्वात्तिष्ठत्येव हि चेतसाम् ॥४४८॥**
**सन्तानः स परोच्छेदान्न समत्वं प्रपद्यते ।**

[ § ५१८. तत्र उच्छेदात्मा मोक्षः संभवति । कस्तर्हि कर्त्तव्य इत्याह—]

**तस्मान्निरास्रवीभावः संसारान्मोक्ष उच्यते ॥४४९॥** 25
**सन्तानस्यात्मनो वेति शब्दमात्रं तु भिद्यते ।**

[ § ५१९. एकान्तनित्यत्वेन (त्वे) विनश्वरैकान्तवन्निर्वाणस्यैवाभावप्रसङ्गादेतदेवाह—]

**नित्यस्येच्छा प्रधानादियोगोऽनित्यः किमात्मनः ॥४५०॥**
**मिथ्याज्ञानादनिर्मोक्षः तथाऽनेकान्तविद्विषाम् ।**

[ § ५२०. तच्च [प्रवचनं] स्वविषये सप्तभङ्ग्या प्रवर्त्तते इति, तद्विनिश्चयं कुर्वन्नाह–]

**द्रव्यपर्यायसामान्यविशेषप्रविभागतः ॥४५१॥**
**स्याद्विधिप्रतिषेधाभ्यां सप्तभङ्गी प्रवर्त्तते ।**

[ § ५२१. तत्र प्रथमद्वितीयौ तद्भावाभावयोः प्रत्येकं प्रतिपित्सायाम्, तृतीयस्तु तदुभय-
5 जिज्ञासायाम् । तदेवाह–]

**तदतद्वस्तुभेदेन वाचोवृत्तेस्तथोभयम् ॥४५२॥**

[ § ५२२. चतुर्थस्तु युगपत्तत्प्रतिपित्सायां वचनप्रवृत्तेरसंभवादाह–]

**तदतद्वागवृत्तेश्च,**

[ § ५२३. पञ्चमादिभङ्गत्रयं तु प्रथमादेः प्रत्येकं जिज्ञासया चतुर्थेन सम्मीलनात्तदेव
10 निवेदयति–]

**सह तद्वागवृत्तिना ।**

[ § ५२४. तर्हि किमर्थोऽयं स्यादेवकारप्रयोगः विनापि तेन भङ्गविकल्पानामुपपत्तेरिति
चेदुच्यते–]

**प्रयोगविरहे जातु पदस्यार्थः प्रतीयते ॥४५३॥**
15 **स हि शब्दार्थतत्त्वज्ञैस्तस्येति व्यपदिश्यते ।**

[ § ५२५. किं स्यात्कारादेः प्रतीतार्थस्य प्रयोगेन इति चेन्नायमुपालम्भो लोक (के)
प्रतीतार्थानामपि प्रयोगप्रतीतेरिदमेवाह–]

**अहमस्मीति वाक्यादौ सिद्धावन्यतरस्थितेः ॥४५४॥**
**उभयोक्तिवदत्रोक्तौ उपालम्भो विरुद्ध्यते ।**

20 [ § ५२६. प्रकारान्तरेणापि स विरुद्ध्यते इति दर्शयति–]

**यदि केचित् प्रवक्तारो वृत्तिवाक्यार्थयोरपि ॥४५५॥**
**सूत्रेष्वेव तयोरुक्तौ त्रैलोक्यं किन्न वर्त्तते ? ।**

[ § ५२७. तर्हि स्यात्कारादिप्रयोगोऽपि सफल एव तद्विषये मन्दमतीनां भावादेतदेवाह–]

**केवलं प्रतिपत्तारः स्याद्वादे जडवृत्तयः ॥४५६॥**

25 [ § ५२८. परेऽपि जडवृत्तय इति दर्शयति–]

**जातितद्वदपोहादिवादश्च न हि जानते ।**

[ § ५२९. के तर्हि स्याद्वादमनुरुन्धन्ते यदि सौगतादयो जडवृत्तय इति चेदत्राह–]

**सर्वथैकान्तविश्लेषतत्त्वमार्गव्यवस्थिताः ॥४५७॥**
**व्याख्यातारो विचक्षणाः स्याद्वादमनुरुन्धते ।**

[ § ५३०. प्रमाणप्रसिद्धत्वादेव अनेकान्ते संशयादिदोषप्रसङ्गोऽपि प्रेक्षावतां नावतरतीत्याह–]

**अनेकलक्षणार्थस्य प्रसिद्धस्याभिधानतः ॥४५८॥**
**संशयादिप्रसङ्गः किं स्याद्वादेऽमूढचेतसः ? ।**
**साकल्येनेह सामान्यविशेषपरिणामधीः ॥४५९॥** 5
**मिथ्यैकान्तप्रवादेभ्यो विदुषो विनिवर्त्तयेत् ।**

[ § ५३१. कथं पुनः शासनत्वाविशेषेऽपि शासनान्तरपरिहारेण भगवदर्हच्छासनस्यैव प्रामाण्यमित्यारेकायां तथा तद्दर्शयन्नाह–]

**आप्तवादः स एवायं यत्रार्थाः समवायिनः ॥४६०॥**
**प्रमाणमविसंवादात्,** 10

[ § ५३२. कथं पुनः दृष्टागमविरोधविकलतया प्रमाणमप्यनेकान्तवादः····सकलवेदिन एवेति निश्चयः ? कथं वा यथोक्तगुणोपपन्नोऽपि कश्चिन्मिथ्यावचनानामप्रणेता इत्येव निर्णयः ? वीतरागाणामपि सरागवच्चेष्टासंभवादेतदेव दर्शयति–]

**प्रणेता यदि शङ्क्यते ।**

[ § ५३३. प्रथमशङ्कायामुत्तरमाह–] 15

**आत्मा योऽस्य प्रवक्ताऽयमपरालीढसत्पथः ॥४६१॥**
**नात्यक्षं यदि जानाति नोपदेष्टुं प्रवर्त्तते ।**

[ § ५३४. द्वितीयशङ्कायामप्याह–]

**परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम् ॥४६२॥**
**अदृष्टदोषाशङ्कायामन्यत्रापि प्रसज्यते ।** 20

[ § ५३५. ततः स्वसंवेदनं प्रमाणयता प्रवचनमपि प्रमाणमभ्युपगन्तव्यम् अविशेषात् । एतदेवाह–]

**प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः ॥४६३॥**
**उपलब्ध्यनुपलब्धिभ्यां कचिद् वृत्तसमत्वतः ।**

[ § ५३६. तदेवं प्रवचनस्य प्रामाण्ये यत्सिद्धं तद्दर्शयन्नाह–] 25

**तथा साक्षात्कृताशेषशास्त्रार्थोऽक्षानपेक्षणात् ॥४६४॥**
**सद्वृत्तकेवलज्ञानः सर्वज्ञः सम्प्रतीयते ।**

[ § ५३७. सकलावरणपरिक्षयाविर्भूतमपि कथं तदशेषविषयमिति चेदत्राह–]

**ज्ञस्यावरणविच्छेदे ज्ञेयं किमवशिष्यते ? ॥४६५॥**

[§ ५३८. भगवतोऽज्ञानपेक्षदर्शनत्वात्तदाह–]

**अप्राप्यकारिणस्तस्मात् सर्वार्थावलोकनम् ।**

[§ ५३९. सर्वार्थावलोकनमेव दर्शयन्नाह–]

**शास्त्रे दुरवगाहार्थतत्त्वं दृष्टं हि केवलम् ॥४६६॥**

5 **ज्योतिर्ज्ञानादिवत्सर्वं स्वत एव प्रणेतृभिः ।**

[§ ५४०. तद्वत् अन्यदपि सर्वं तत्तैर्दृष्टमेव अन्यथा तद्विषयानुपदेशालिङ्गानन्वयव्यतिरेकाविसंवादिशास्त्रप्रणयनानुपपत्तेः । अनुपदेशादयः प्रणयनविशेषणत्वेन संहता एक (एव क) स्माद्धेतवो न प्रत्येकमपीति चेदत्राह–]

**सङ्घातो हेतुरेतेषां पृथगन्यत्र सम्भवात् ॥४६७॥**

10 [§ ५४१. ततो न सुगतादीनां प्रणेतृत्वं तदभावात् । तत्र च दोषमाह–]

**एवं हि सुगतादिभ्यो वरमीक्षणिकादयः ।**

[§ ५४२. अर्हतामपि किं तत्त्वदर्शित्वकल्पनया शास्त्रादेव अनुष्ठेयार्थप्रतिपत्तेः, तस्य च संवादादेव प्रामाण्यावगमात् इति चेदत्राह–]

**शास्त्रं तल्लक्षणव्याप्तं सर्वज्ञादेरबाधनात् ॥४६८॥**

15 **अपौरुषेयवृत्तान्तोऽप्यत एव विरुद्ध्यते ।**

[§ ५४३. सम्प्रति शास्त्रार्थमुपसंहरन्नाह–]

**प्रत्यक्षमञ्जसा स्पष्टमन्यच्छ्रुतमविप्लवम् ॥४६९॥**

**प्रकीर्णं प्रत्यभिज्ञादौ प्रमाणे इति सङ्ग्रहः ।**

[§ ५४४. साम्प्रतं परोक्षविकल्पानां प्रागुपवर्णितमपि प्रामाण्यमनुस्मरणार्थं पुनरुप-
20 दर्शयिषुः प्रथमं तदाद्यत्वात् स्मरणज्ञानस्योपदर्शयति–]

**इदमेवमिति ज्ञानं गृहीतग्रहणेऽपि नः ॥४७०॥**

[§ ५४५. साम्प्रतं तर्कस्य प्रामाण्यं दर्शयितुमाह–]

**प्रत्यक्षेऽर्थेऽन्यथारोपव्यवच्छेदप्रसिद्धये ।**

**अनुमानमतो हेतुव्यवच्छेदेऽनवस्थितिः ॥४७१॥**

25 [§ ५४६. साम्प्रतमुपमानस्य प्रत्यभिज्ञाविशेषत्वेन प्रमाणान्तरत्वमुपाचिकीर्षुः तदेव तावत्परि (तावत्पर) कल्पनामादर्शयति–]

**उपमानं प्रसिद्धार्थसाधर्म्यात् साध्यसाधनम् ।**

[§ ५४७. तान् प्रति अतिप्रसङ्गं दर्शयन्नाह–]

**यदि किञ्चिद्विशेषेण प्रमाणान्तरमिष्यते ॥४७२॥**
**प्रमितोऽर्थः प्रमाणानां बहुभेदः प्रसज्यते ।**

[ § ५४८. तर्हि स्मरणादिकं किन्नाम प्रमाणमिति चेदाह–]

**सर्वमेतच्छ्रुतज्ञानमनुमानं तथाऽऽगमः ॥४७३॥**

[ § ५४९. कथं पुनरागमः प्रमाणमिति चेदाह–] 5

**सम्प्रदायाविघातेन यदि तत्त्वं प्रतीयते ।**

[ § ५५०. किं पुनः प्रत्यक्षं किं वा परोक्षमित्यत्राह–]

**आद्ये परोक्षमपरं प्रत्यक्षं प्राहुराञ्जसम् ॥४७४॥**

[ § ५५१. कथं तर्हि मतिज्ञानस्यैव (वं) अवग्रहादिभेदस्य प्रत्यक्षत्वमुक्तम् आत्ममात्रापेक्षत्वाभावादिति चेदत्राह–] 10

**केवलं लोकबुद्ध्यैव मतेर्लक्षणसङ्ग्रहः ।**

[ § ५५२. कथमागमस्य परोक्षत्वमुक्तम्–'अनुमानं तथागमः' इति; तस्य अज्ञानत्वात्, ज्ञानस्यैव चागमे परोक्षत्वकथनादिति चेदत्राह–]

**स्याद्वादः श्रवणज्ञानहेतुत्वाच्चक्षुरादिवत् ॥४७५॥**

[ § ५५३. तत्किमिदानीं प्रमाणफलमित्याह–] 15

**प्रमाणस्य फलं तत्त्वनिर्णयादानहानधीः ।**
**निःश्रेयसं परं वेति केवलस्याप्युपेक्षणम् ॥४७६॥**
**प्रत्यक्षं श्रुतविज्ञानहेतुरेव प्रसज्यते ।**

[ § ५५४. प्रमाणवन्नयानामपि अधिगमहेतुत्वं····तेऽपि विप्रतिपत्तिनिरासेन निर्णेतव्यम् (व्याः) इति चेदत्राह–] 20

**इष्टं तत्त्वमपेक्षातो नयानां नयचक्रतः ॥४७७॥**

[ § ५५५. तदेवं व्यवस्थापितप्रामाण्यस्य प्रवचनस्य शास्त्रान्ते प्रयोजनमाह–]

**मिथ्यात्वं सौगतानां कणचरसमयं कापिलीयं प्रमेयम्,**
**प्रागल्भ्यं शाबराणां जिनपतिविहिताशेषतत्त्वप्रकाशे ।**
**पर्याप्तत्वं व्यपोहन्नुपहसनमयं प्रस्तुवन्न्यायमार्गे,** 25
**स्याद्वादः सर्ववादप्रवणगुणगणः श्रेयसे नोऽस्तु नित्यम् ॥४७८॥**

[ § ५५६. किं पुनस्तच्छ्रेयो यदर्थत्वं स्याद्वादस्याशास्यते इति चेत् ? सकलावरणपरिक्षयविजृम्भितं केवलज्ञानमेव । तदेवाह–]

नैकान्तक्षायिकाणामतिशयमवदन्नैव नानार्थसाध्यम्,
नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे ।
निष्पर्यायं प्रवृत्तं सकलविषयगं केवलं वेद नित्यम्,
योऽयं तस्मै नमामः त्रिभुवनगुरवे शम्भवे शान्तये ते ॥४७९॥

5 [ § ५५७. पुनरपि शासनस्याराध्यत्वं फलवत्त्वेन दर्शयन्नाह- ]

युक्तायुक्तपरीक्षणक्षमधियामत्यादराराधिनाम्,
संसेव्यं परमार्थवेदसकलध्यानास्पदं शाश्वतम् ।
लोकालोककलावलोकनबलप्रज्ञागुणोद्भूतये,
आभव्यादकलङ्कमङ्गलफलं जैनेश्वरं शासनम् ॥४८०॥

10 इति न्यायविनिश्चये तृतीयः प्रवचनप्रस्तावः ॥

[ समाप्तश्चायं ग्रन्थः ]

---



श्रीमद्भट्टाकलङ्कविरचितः

# ॥ प्रमाणसङ्ग्रहः ॥

## १. प्रथमः प्रस्तावः



॥ नमः श्रीवर्द्धमानाय ॥

**श्रीमत्पमर ( त्परम ) गम्भीरस्याद्वादामोघलाञ्छनम् ।**
**जीयात् त्रैलोक्यनाथस्य शासनं जिनशासनम् ॥ १ ॥**

**[§ १. प्रत्यक्षं विशदज्ञानं त्रिधा श्रुतमविप्लवम् ।**
**परोक्षं प्रत्यभिज्ञादि प्रमाणे इति संग्रहः ॥ २ ॥]**

§ १. **प्रत्यक्षं विशदज्ञानं** तत्त्वज्ञानं विशदम्, इन्द्रियप्रत्यक्षम् अनिन्द्रिय- 5
प्रत्यक्षम् अतीन्द्रियप्रत्यक्षम् **त्रिधा। श्रुतम् अविप्लवम्** प्रत्यक्षानुमानागमनिमित्तम्।
**परोक्षं** *प्रत्यभिज्ञादि स्मरणपूर्वकम्। हिताहितप्राप्तिपरिहारसमर्थे द्वे एव **प्रमाणे**
**इति** शास्त्रार्थस्य **सङ्ग्रहः**, प्रतिभासभेदेन सामग्रीविशेषोपपत्तेः ।।छ।।

**प्रामाण्यमप्रसिद्धार्थख्यातेरर्थानुकारिणः ।**
**व्यभिचारादनिर्णीतं व्यावृत्तं सर्वतो गतम् ॥ ३ ॥** 10

§ २. प्रमाणम् अच्युत्तन्न (अव्युत्पन्न) सन्दिग्धविपर्यस्तार्थप्रतीतौ विषया-
नुविधायिनोऽकिञ्चित्करारेकाविपर्यासाऽनिवृत्ते ( त्तेः ) सर्वथा सारूप्यासंभवात् ।
अर्थोपलम्भाद्यवसायसामर्थ्ये अन्यकल्पनावैयर्थ्य (र्थ्या) त् । तज्जन्मसारूप्याध्यव-
सायस्य अन्यत्र वृत्तिः भ्रान्तिकारणवत्। निष्कलानामेतन्न भवति, सकलव्यवच्छेद-
निर्णयाऽनिर्णयादिप्रसङ्गः ।।छ।। 15

**अक्षज्ञानमनेकान्तमसिद्धेरत्प (रप) राकृतेः ।**
**स्पष्टं सन्निहितार्थत्वाद् भावनातो निवर्त्तते ॥ ४ ॥**

§ ३. चक्षुरादिज्ञानं सविकल्पकं सामान्यविशेषात्मविषयं वर्णसंस्थानादिमतः

---

* प्रत्यभिज्ञा स्मृति ऊह

स्थूलस्य कस्यचिद्दर्शनात्, अन्यथार्थी नियम वैस्यद्येच्छा वृत्तयः (?) सङ्कलनान्तर-
वत्। न तादृशं सञ्चितालम्बनं युक्तम्; विविधान् विधानस्य (विवादानुविवादनस्य)
विकल्पनान्तरीयकत्वात्। तदेकान्ते परत्र को [ऽ] परितोषः ? सकृत्प (त्प्र) तिभास-
भेदः संविदात्मनः सन्तानान्तरवत्। तत्र भेदाभेदसाधनो न भेदसाधनो न भेद-
5 प्रतिषेधो विषयवत्, विज्ञानसञ्चये पुनरसङ्क्रमादपरामर्शस्पर्शादिज्ञानयौगपद्ये तदर्थान-
न्तरमानसप्रत्यक्षेऽपि समानः प्रसङ्गः। तन्न अतीतविषयं परिस्फुटं युक्तम् अतिप्रस-
ङ्गात्। तदेवं विप्लुतवद् भावनातो निवर्त्तते। अचिन्तायां विकल्पसंहारे तथादृष्टौ
पुनर्भावयतोऽनिवृत्तेः ॥छ॥

**[§ ३. सदर्थनियतं ज्ञानं फलं तत्त्वार्थनिर्णयः।**
10 **तदभावे प्रमाणाभं मानसं सविकल्पकम् ॥ ५ ॥]**

§ ४. **सदर्थनियतं ज्ञानम्**, नहि सतोर्विषयविषयित्वेऽपि अनियमो भ्रातृव-
दुपचारस्यापि तत्रानुपयोगः। सम्भवत्यपि भावानां स्वभावभेदः। **फलं तत्त्वार्थ-
निर्णयः**, स्वार्थमात्राध्यवसायाभावे दर्शनस्य सन्निधानाभेदेन दृष्टसजातीयाभिला-
पास्मृतेः उभयव्यवसायोऽपि न स्यात्। **तदभावे प्रमाणाभम्**, तिमिराद्यवग्रहः
15 प्रमाणं चन्द्रादिष्वविसंवादं न पुनः शुक्त्यादौ, तथाऽनभिनि (ऽभिनि) बोधे यथार्थदर्श-
नेऽपि विप्लवसम्भवात्। **मानसं सविकल्पकम्**, सुखादिरविकल्पप्रत्यक्षाप्रत्यक्षैकान्ते
न मानसं क्षणपरिमाणादेरप्रतिभासः केशादिविवेकवत्। परोक्षज्ञानार्थपरिच्छेदः परो-
क्षवत्। सत्यपि समानेतरपरिणामातिशये नानैकसन्तानात्मना (नां) तथाभावसङ्कर-
व्यतिक [र] व्यतिरेकाद् अन्वयिनोरस्खलत्समानैकप्रत्ययविषयत्वं परस्परपरिग्रहपरि-
20 णामाविनाभावी मतिश्रुतयो [:] स्वार्थविवेको नियतोद्भवेतरविवर्त्तेन गुणवत्, उभयो-
पयोगलक्षणत्वादात्मनः।

**स्वनिश्चयफलापेतं मानाभासं सुषुप्तवत्।**

§ ५. स्वतो निर्णयात्मकं फलम्, प्रमाणान्तरानुभवनिर्णयं पुनर्मानाभम्।

**शास्त्रार्थज्ञानसंवादः तत्प्रत्यक्षप्रसाधनः ॥ ६ ॥**

25 § ६. सर्वमिथ्यैकान्तातीजा (ता) तिशयज्ञानं प्रवचनम्, अतिकरणप्रत्यया-
त्यये सर्वथा सम्बन्धग्रहणायोगादन्धपरम्परयाऽनुपपन्नम् ॥छ॥

**कालेने (नै) तावता [ऽ] नाप्तः कथं न प्रलयं गतः ?।**

§ ७. नहि शब्दः स्वतः प्रमाणं विप्रतिपत्तिदर्शनेन तदर्थोपलम्भसम्प्रदाया-
पेक्षः संवादसत्यप्रतिपत्तेः। दोषावरणक्षयोपशमप्रयोगातिशयवशाद् विज्ञानविशेषा-
30 नुपपत्तौ तज्ज्ञानमपि न प्रमाणम्। तदर्थदर्शनसमयसंवादे समभिहारेण प्रमाणान्तर-
प्रवर्त्तने सम्प्रदायाऽविच्छेदः।

**अन्तरङ्गं स्वतः सिद्धमक्षादेर्व्यभिचारतः ॥ ७ ॥**

§ ८. ज्ञानपरिणामव्यतिरेकिणो ज्ञत्वविरोधात्। स्वयंप्रभुरलङ्घनार्हः स्वार्थालोकपरिस्फुटमवभासते सत्यस्वप्नवत् ॥छ॥

**एकत्र निर्णयेऽनन्तकार्यकारणतेक्षणे ।**

§ ९. चैतन्यस्वभावस्य शतः ( सतः ) सहक्रमसंयोगधर्मान्तरेभ्यो व्यावृत्तिरिति समवग्रहे स्फुटम् आत्मसहभाविना पूर्वापरकोटयोः अनाद्यनन्तयोरनवयवेन परिज्ञानम् आवरणविगमे । 5

**परं ज्योतिरनाभासं सर्वतो भासमक्रमम् ॥ ८ ॥**

§ १०. नातीन्द्रियमत्येव सर्व [ वि ] त् सर्वत्र परिस्फुटं यथा ईक्षणिकादे [ः] सकलज्ञानावरणपरिक्षये तु निराभासम्, सामान्यविशेषात्मनोऽयुगपत्प्रतिभासायोगात्। 10

**लक्षणं सममेतावान् विशेषोऽशेषगोचरम् ।**
**अक्रमं करणातीतमकलङ्कं महीयसाम् ॥९॥**

इति प्रमाणसङ्ग्रहे प्रथमः प्रस्तावः ॥छ॥



## २. द्वितीयः प्रस्तावः

**प्रमाणमर्थसंवादात् प्रत्यक्षान्वयिनी स्मृतिः ।** 15

§ ११. इन्द्रियज्ञानं हिताहितप्रतिपत्तौ न वै साधकतम (मं) स्मृतिव्यवधानात्, दृष्टसअ (सजा) तीयसम्बन्धाव्य (ध्य) वसायनान्तरीयकत्वात्। अनधिगतार्थावग्रहेऽपि अर्थातिशयवैधुर्ये प्रवृत्तेरनङ्गमनध्यवसायादिनिमित्तम्। समधिगते पुनः व्यामोहविच्छेदेन प्रमाणान्तरवत् ।

**प्रत्यभिज्ञा फलं तस्याः प्रामाण्यं प्रतिपत्तितः ॥१०॥** 20

§ १२. प्रत्यवमर्शः फलमपि प्रमाणम् उपादानादेः तदना ( तन्ना ) न्तरीयकत्वात् ।

**द्रव्यसामान्यसंहारविषयः पुरुषादिवत् ।**

§ १३. जीवादयो द्रव्यपदार्था विनियततद [ त ] त्परिणामसतत्व (तत्त्व)-विवर्त्तग्रन्थिविकाराः कौमारादिवत् । सदृशपरिणामः सामान्यं यमलकवत् । सभारा: 25 (भाग) विसभागयोरसाङ्कर्येण प्रत्यवमर्शः एकानेकस्वभावनियमः ।

**तदाभासौ विपर्यासंसशयो ( यौ ) मतिविभ्रमात् ॥११॥**

§ १४. न संशयो व्यवसायसादृश्याभिनिबोधनियमादनुद्भूतविकल्पो [ऽ] नध्यवसायः, तदतद्विशेषाध्यवसायानियमप्रत्ययो विमर्शो [ऽ] नध्यवसायः। विपर्यासः प्रत्यक्षप्रतिभासवैकल्येन हिताहितविवेकविरहः ॥छ॥

5 **सम्भवप्रत्ययस्तर्कः प्रत्यक्षानुपलम्भतः।**
**अन्यथासम्भवासिद्धेरनवस्थानुमानतः ॥१२॥**

§ १५. समक्षविकल्पानुसरणपरामर्शसम्बन्धाभिनिबोधस्तर्कः प्रमाणम्। संवादसामर्थ्यभेदेन सहक्रमसंयोगभाविषु तथाभावाऽभावनियमनिश्चये न पुनरवग्रहव्यापारो विषयविषयिसन्निपातसमनन्तरलक्षणत्वात्। नहि प्रतिबन्धनिर्णयात् प्राक् 10 सिद्धमनुमानम्, अनवस्था च ॥छ॥

**विवर्त्तः सर्वथैकान्ते विरुद्धः पुरुषादिवत्।**

§ १६. प्रधानपुरुषकालपरमाणुस्वभावप्रवादेषु सहक्रमसंयोगवैस्य( वैस )-रूप्यविरोधिचेतनेतरप्रभेदैकपरिणामे नाम्नि विवादः सन्मात्राविशेषात्। अन्यथा सर्वत् (सर्वं) सर्वत्र सर्वथा स्यात् ॥छ॥

15 **नित्यमेकमनेकत्र निमित्तं समवायिनम् ॥१३॥**
**निरंशं कर्मसंयोगात् कारणं परिणामिनम्।**

§ १७. निमित्तम् उत्पत्तिमतां यदि नित्यं स्थित्युत्पत्तिविपत्तीनामक्रमः ज्ञानेच्छाकरणशक्तीनामव्यतिरेकात्, अन्यथा तदकर्तृत्वम्। तत्करणनियमे तुल्यः प्रसङ्गः, व्यपदेशनियमाभावः, स्वतः सिद्धेः। तदुत्पत्तिमत्त्वेऽपि देशकालस्वभावानियमो 20 निर्हेतुकत्वात्। तद्धेतुत्वे पुनरक्रमः, तत्करणशक्तेस्तदात्मकत्वात्, व्यतिरेके समानः प्रसङ्गोऽनवस्था च। सहसिद्धेः तद्वृत्तायामात्मादेः तद्गुणत्वं सर्वत्र समवायाऽविशेषात्। नित्यानां स्वभावोत्पादवि(दावि)घातादनपेक्षा। तदन्यकरणे पुनरनिवृत्तः प्रसङ्गः। न कर्म संयोगकारणं सावयवविरोधात्, सर्वस्य परमाणुमात्रप्रचयो वा। परिणामेऽपि निमित्तान्तरकल्पनायामनवस्था।

25 **तत्रैकमर्थकृद् बुद्धेरानन्तर्यमनर्थकम् ॥१४॥**

§ १८. एकमनेकत्र निष्पर्यायं प्रत्यवयवं न सर्वात्मना प्रत्येकं तत्स्वभावनै-( वेनै ) कत्वविरोधात्। नैकदेशेन निरवयवानाम्, अन्यथा अनवस्था। 'वर्त्तते' इति विज्ञप्तिमात्रेऽपि सर्वं समानम्। न चैतन्यमित्येव तदवयवविकल्पननिवृत्तिः। विभ्रमशून्यप्रतिपत्तिविप्रतिषेधः।

30 **इति तर्कमपेक्षेत नियमेनैव लैङ्गिकम्।**

§ १९. साधनस्य क्वचिदुपलम्भेऽपि विरोधाविरोधयोः तदर्थत्वात् । दोषावरणपरिक्षये वचनादेः सम्भवो नान्यतः ।

**अन्यथा सम्भवज्ञान (नं) कुतका भ्रान्तिकारणम् ॥१५॥**

§ २०. विवक्षातो वाचोवृत्तेरन्यत्रानुपलम्भेन सर्वतः तदभावे व्यतिरेकचिन्ता मिथ्योहः, सुप्तप्रमत्तयोः तदभावेऽपि दर्शनाद्, हेतुसन्निधानासन्निधानाविशेषः करण- 5 शक्त्यनुविधानात् ।

**विज्ञानगुणदोषाभ्यां वाग्वृत्तेर्गुणदोषता ।**
**वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः ॥१६॥**

§ २१. शरीरं यदि गुणदोषकारणं तन्निर्ह्रासातिशयानुविधानम् । तेषां शरीरस्थितिहेतुत्वे तत्रानुपरमः स्यात् । दोषावरणकारणत्वे तत्प्रकर्षापकर्षाविरोधः । तदा- 10 त्मकत्वे पुरुषस्यैकभावे निवृत्तिः चैतन्यवत् । तद्गुणदोषानुविधायिनी वर्णपदवाक्यानुपूर्वी दोषया( जा )तिं विशेषयेद्, विवक्षायामपि अविषये स्वयमप्रवृत्तेः ।

**प्रत्यक्षनिर्णयान्नर्ते सामान्यानुस्मृतिस्ततः ।**
**प्रत्यभिज्ञा ततस्तर्कः ततः साध्यपरिग्रहः ॥१७॥**
**आत्मैव मतिमा (मान्) दृष्टसामान्याभिनिबोधतः ।** 15
**परोक्षेऽप्यविनाभावमुपैति श्रुतपाटवात् ॥१८॥ ॥छ॥**

इति प्रमाणसङ्ग्रहे द्वितीयः प्रस्तावः ॥



## ३. तृतीयः प्रस्तावः

**अनुमानसमासार्थमनुमानमतः परम् ।**
**प्रमाणं क्वचिदेकस्य विधानप्रतिषेधयोः ॥१९॥** 20

§ २२. साध्याविनाभावे सहक्रमसंयोगलक्षणे साधनस्य साक्षात्कृते साध्य- (ध्या) र्थसमाक्षिप्तः तत्र स्मृतिविकल्प (ल्पः) कुतश्चित् प्रमाणम्, कथन्न ऊहादिः ? स्वसंवेदनेऽपि समारोपव्यवच्छेदाभावात्, इव (इत) रथा विप्रतिपत्तेरनन (नु) मानम्, स्वतो [ऽ] सिद्धस्य साधनान्तरेऽप्यनवस्था । अयुक्तम्- § १.) "नाऽप्रत्यक्षमनुमानव्यतिरिक्तं मानम्" इति । सर्वत्र संवादाविशेषे तद्विधिप्रतिषेधयोर्विप्रतिषेधः 25 शास्त्रानुमानवत् ।

**[§ ३. साध्यं शक्यमभिप्रेतमप्रसिद्धं ततोऽपरम् ।**
**साध्याभासं यथा सत्ता भ्रान्तेः पुरुषधर्मतः ॥२०॥]**

§ २३. **साध्यं शक्यमभिप्रेतमप्रसिद्धम् ।** अव्युत्पत्तिसंशयविपर्यासविशिष्टोऽर्थः साध्यः । तत्र साधनसामर्थ्यम् । यथा सर्वं सामान्ये (न्य) विशेषात्मकमिति । **ततोऽपरं साध्याभासम् । यथा सत्ता,** सदसदेकान्तयोः साधनासम्भवः, तदतदुभयधर्माणामसिद्धविरुद्धानैकान्तिकत्वम् । **भ्रान्तेः पुरुषधर्मतः** विप्रतिपत्तयः सदसत्प्रमाणप्रमेयैकान्तात्म ( त्मा ) नो बहुप्रभेदाः प्रतिपन्नभिप्रायाणां निरङ्कुशत्वात् ।

**साधनं प्रकृताभावेऽनुपपन्नं यथा सति ।**
**प्रमेयत्वं निरंशानां प्रतिभासविरोधतः ॥२१॥**

§ २४. साध्यार्थाऽसम्भवाभावनियमनिश्चयैकलक्षणो हेतुः, सर्वमनेकात्मकं प्रमेयत्वात् । नहिं चक्षुरादिज्ञानमन्यद्वा स्वभावान्तरविवेकेन ज्ञारुचिदे ( जातुचिदे )-कमाकारं विषयीकरोति । परस्परविश्लेषिणामणूनां भवतामप्यनुपलम्भः । विप्रतिषिद्धं तादृशां वर्त्तनं सम्बन्धासिद्धेः, पृथक्सिद्धिप्रसङ्गः । शकला (सकला) वयवोपलम्भासम्भवे तदग्रहः, तदवयवान्तरदर्शनादर्शनविरोधः ।

**विश्वं सर्वगतं सत्त्वं व्यक्तं चेद् व्यक्तिभिः स्फुटम् ।**

§ २५. एकमक्रमं सर्वव्यक्तिसामान्यमन्यतमाभिव्यक्तं स्वाश्रये यदि सतुप्र (सत्प्र) त्ययहेतुरविशेषेण सकलं सदै (दे) व प्रमेय ( यम् ) तद्विशेषे स्वभावहानिः ।

**सर्वस्वाश्रयसम्बन्धे सामान्यं स्यात् प्रदेशवत् ॥२२॥**

§ २६. यदि सर्वगतं सामान्यं सर्वत्र विशेषप्रत्यस्तन (म) ये प्रत्ययसङ्करः । स्वाश्रयव्यापित्वे तथाऽनेकत्वम् । का श्र विरिणो ( आश्रयविरहिणोऽ ) वस्तुत्वम् । आश्रयाश्रयिभावोऽभिव्यक्त्यनभिव्यक्ती सत्प्रत्ययकर्त्तृत्वाकर्तृत्वे सहकारिकारणापेक्षाविशेषतो निष्कलस्य युगपदनेकत्र वृत्तिः इति दुरन्वयम् । सतोऽपि तदाश्रयादर्शने दर्शने च सावयवत्वम् ।

**एकं चलं चलैर्नान्यैर्नष्टं नष्टैर्न चापरैः ।**
**आवृत्तै (तै) रावृत्तं (तं) रूपं रक्तं रक्तैर्विलोक्यते ॥२३॥**

§ २७. विचित्रावयवात्मकमेकं बहिरन्तश्च कैश्चिदेव आत्मभूतैः अन्यैश्च मात्राभेदैश्चलमचलम्, विनष्टमविनष्टम्, आवृतमनावृतम्, रक्तमरक्तम्, उपलम्भानुपलम्भयोग्यं नापरैः, अनवस्थाप्रसङ्गः । तेनैव तदात्मकं युक्तं येनातिशयेन वस्त्वन्तरं समवैति ।

**स्वलक्षणमसङ्कीर्णं समानं सविकल्पकम् ।**
**समर्थं स्वगुणैरेकं सहक्रमविवर्त्तिभिः ॥२४॥**

§ २८. उदयस्थितिसंहारलक्ष[ण]स्य सतः प्रतिभासादिभेदाभेदाभ्यां भेदाभेदप्रसिद्धिः, आत्मप्रतिबन्धेन तथा परिणामात् संशयविरोधवैयधिकरण्योभयदोषप्रसङ्गाऽनवस्थासङ्कराभावकल्पनाम् अन्योन्याविवेकप्रतीतिः अतिशेते । जात्यन्त- 5 राधिगमे मेचकादिवत् सत्यपि वैश्वरूपे तथापरिणामेन समानशक्तीनामेकत्वम् । तेनैव तत्समं कर्त्तव्यमिति नियमाभावात् । नहि सहकारिणां शक्तिसङ्करः । व्यक्तिवदेकैकस्य सकलशक्तियोगे सहकारिकारणापेक्षा मा भूत् । समग्राणां तदेकाभिव्यक्तौ युक्तः तदेककार्यः प्रादुर्भावः । प्रधानपुरुषयो[ः] शक्तिसङ्करप्रसङ्ग[ः] । गुणानाञ्च न कर्तृत्वम्, अन्यत्राभिव्यक्तेः । तदिमे सामान्यविशेषात्मानो न सङ्कीर्यन्ते । 10

**विज्ञानस्यैकरूपत्वे विज्ञेयस्याऽविशेषतः ।**

§ २९. 'प्रतिभासभेदेऽपि बुद्धेरेकत्वम्' इति विरुद्धं पश्यामः । सर्वस्यैकांशमात्रानुषङ्गः संवित्स्वभावस्य ते तथोत्पत्तिरेव संवेदनम्, अन्यथा एकत्रापि 'क्षणिकत्वविज्ञप्तिमात्रता सन्तानान्तरविवेक' इति न स्वतो नान्यतः । वितथनिर्भासाऽविशेषे वृक्षादिदर्शिनः स्वांशमात्राविग्रहविकल्पैर्न्न तत्त्वप्रतिपत्तिव्यापारव्याहारप्रतीतिः । विप्लवेऽपि 15 सर्वथा विभ्रमे विभ्रमासिद्धिः । अनेकात्मकत्वे बाह्यार्थे कोऽपरितोषः ? सर्वथा विरोधपरिहारस्य कर्त्तुमशक्तेः । स्वसंवेदनमात्रस्य कदाचिदनुपलम्भे यथोपलम्भं विप्रतिषेधेन शून्यताप्रतिपत्तेरशून्यतानुषङ्गः । तथाहि—

**नाभावस्य प्रमेयत्वं न भावस्याऽप्रमेयता ॥२५॥**

§ ३०. सर्वथा सतः प्रतीतौ अनिवृत्तिः । असदुपलम्भो विप्रतिषेधः । अर्थाभा- 20 वविकल्पस्य स्वविषयत्वम् । कस्यचित् कैवल्यमपरस्य वैकल्यम् । तदेतत् प्रमेयत्वमवितत्त्व (थ) प्रत्ययात्मकं प्रमातरि प्रत्यक्षं प्रमेयधर्मतया तदधिगमयोग्य स (स्व) भावः, परोक्षं च । विषयद्वैविध्येन सद्व्यवहारलक्षणं प्रमेयमेव । सर्वत्र सर्वथा भावे विरोधः ।

**परापरविभागैकपरिणामविशेषतः ।**
**तान्येव पश्यन् प्रत्येति शाखा वृक्षेऽपि लौकिकः ॥२६॥** 25
**प्रमाणमात्मसात्कुर्वन् प्रतीतिमतिलङ्घयेत् ।**
**वितथज्ञानसन्तानविशेषेषु न केवलम् ॥२७॥**
**तत्र चित्रं भवेदेकमिति चित्रतरं ततः ।**
**चित्र (त्रं) शून्यमिदं सर्वं वेत्सि चित्रतमं ततः ॥२८॥**

इति प्रमाणसङ्ग्रहे तृतीयः प्रस्तावः ॥छ॥ 30



## ४ चतुर्थः प्रस्तावः ।

**अन्यथा [ऽ] सम्भवो ज्ञातो यत्र तत्र त्रयेण किम् ? ।**

§ ३१ अनित्य आत्मादिः शरीरादेरनित्यत्वात् । नहि तत्परिणाममन्तरेण तद्विकारित्वं युक्तमिति । एतावता यदि प्रतीतिः किं साध्यधर्मकल्पनया धर्मा-
5 न्तरत्वात् ? उदेष्यति शकटम् उद्गाद्भरणिः कृत्तिकोदयादिति । कालादिधर्मिकल्पनायामतिप्रसङ्गः । शब्दानित्यत्वे चाक्षुषत्वादिरपि सिद्धः (?) । सात्मकं या (जी) वच्छरीरं प्राणादिमत्त्वादिति । चैतन्योपयोगादन्यत्रावृत्तौ सुषुप्तादिषु दर्शनादयुक्ता वृत्तिः । न शरीरपरिणामः तदप्रत्यक्षे (क्ष) त्वे प्रत्यक्षः । तथाऽपरिणामिनः तद्गुणत्वे अनवस्था । सहभावनियमेऽपि अन्योन्यव्यपेक्षातोऽनादिसम्बन्धप्रसङ्गः, तदुभयत्रा-
10 विशेषात् । पूर्वाभ्यस्तस्मरणाविनाभाविनः क्वचिद् गुणान्तरस्य लिङ्गतो जातिस्मरसंवादेन निरंशस्य विग्रहव्याप्तिविरोधः । नानात्वे पुनरसम्भवः, प्रभवस्मृतिप्रत्यभिज्ञाद्यं (दि) विघातः । तथापरिणामे सकलदोषनिवृत्तिरित्यात्मभावसिद्धितः किमन्वयेन शब्दपरिणामे श्रावणत्वादिवत् ? पूर्वापरस्वभावपरिहारावाप्तिलक्षणत्वाद् । उपाधिप्रतिषेधे कृतकत्वादि वैश्वरूप्यं सत्ताव्यतिरिक्तं मा भूत् । सर्वस्य सतः तथा विप्रतिपत्तौ
15 एकत्रानन्वये कथमुपसंहरेत् ? तद्विशेषानाक्षेपे किं साधनम् ? एकलक्षणानुपलक्षणे कार्यादेरगमत्व (मकत्वम्) । वचनपुरुषत्वानुपलब्धीनां क्वचिद् रागादि-सर्वज्ञताभावसाधनसामर्थ्यवैधुर्य ( र्यें ) व्याप्तिविशेषः कोऽपरोऽन्यथा [ ऽ ] सम्भवात् ।

**सत्प्रवृत्तिनिमित्तानि स्वसम्बन्धोपलब्धयः ॥२९॥**

§ ३२. स्वभावोपलब्धिः—यथा अस्त्यात्मोपलब्धेरिति । ज्ञानस्वभावपरिणा-
20 मिनो विग्रहव्यापिन ( नः ) स्वसंवेदनेऽन्यवेदनम् । नहि सुखादयो भेदिनः संविद्रते तथा [ऽ] निर्णयात् । विभ्रमकल्पनातो नान्योन्यमतिशयाते । स्वभावकार्योपलब्धिः—अभूदात्मा स्मरणात् । सत्यपि प्रभवसाक्षा (वस्या) तिशये तदसम्भवः, जन्यजनकवद् विसदृशपरिणामेऽपि बालवृद्धवत् । स्वभावकारणोपलब्धिः—भविष्यति आत्मा सत्त्वात् । स्वभावान्तरपरिणामात्मकं भावलक्षणम् । सकलशक्तिविरहिणो निरुपा-
25 ख्यत्वम् । स्वपरिणामविकलस्य परत्रासामर्थ्यम् । सहचरोपलब्धिः अस्या (अस्त्या)-त्मा स्पर्शादिविशेषात् । तादृशं लोको विवेचयति । सहचरकार्योपलब्धिः—अत्र वचनात् कायव्यापारः । अन्वयव्यतिरेकानुविधानं सहचारिणो व्यापारे साधकतमत्वम् । सहचरकारणोपलब्धिः—सकल आत्मा शरीरावयवभेदात् । तद्वृत्तिनान्तरीयकः संयोगः कार्यकारणयोः तथापरिणामः । तादृशः क्रमवृत्तेरप्रतिघातः । नानात्वेऽप्रति-
30 सन्धानम् । एकस्य कालदेशान्तरव्यापित्वं प्रतिभासभेदेन रूपेतरयोर्दर्शनात् । दर्शनवत्तद्वृत्तौ तथा संश्लेषे सर्वथाऽसम्बद्धः प्रसङ्गः ।

तथा [ऽ] सद्व्यवहाराय स्वभावानुपलब्धयः ।

§ ३३. स्वभावानुपलब्धिः–यथा न क्षणक्षयैकान्तोऽनुपलब्धेः । नहि बहिरन्तर्वा भेदनिर्भासविवेकः । परमाणुवच्छूल (वत्स्थूल) स्य कस्यचित् प्रतिभासे तदाभासविरोधः । कार्यानुपलब्धिः–अत्र कार्याभावात् । सति तादृशे कार्ये यदि अक्रमःप्र- (मप्र) सङ्गः । कारणानुपलब्धिः–अत्रैव कारणाभावात् । नाशसमकालकार्यकल्पनायां 5 पश्चादपि असतोऽविशेषात् । समनन्तरभावेऽपि अतिप्रसङ्गः । विशेषव्यवस्थायां तादात्मा (त्म्या) सिद्धिः । उपादानप्रक्लप्तैः ( प्तौ ) प्रत्यभिज्ञादिहेतोः कोऽपरोऽतिशयोऽन्यत्र परिणामात् । स्वभावसहचरानुपलब्धिः–नात्रात्मा रूपादिविशेषाभावात् । तादृशो [ऽ] विवेके कथं दाहादिसाहसमाचरेत् प्रेक्षापूर्वकारी ? सहचरकार्यानुपलब्धिः–अत्र व्यापारव्याहारविशेषाभावात् । निवृत्तिप्रतिबन्धयोः विशेषानुपलक्षणे 10 पुनरविविक्तं स्यात् । सहचरकारणानुपलब्धिः–अत्रैव आहारभा ( राऽभा ) वात् । स विचित्रः शरीरस्थितिहेतुर्विज्ञेयः । परिणामि-सहकारिकारणयोः तदविशेषेऽपि तादात्मो- (त्म्ये) तदभेदेऽपि युगपद्भाविनामजन्यजनक [क] त्वसहभावनियमः । स्वापदोन- ( स्वोपादान ) सहकारिविवर्त्तविकल्पे प्रतिबन्धनियमे किं परस्प ( रम्प ) रया नियमहेतुना ? तदन्यत्रानिवारणे स्वभावान्तरवत् । 15

सद्वृत्तिप्रतिषेधाय तद्विरुद्धोपलब्धयः ॥३०॥

§ ३४. नानुपलब्धिरेव अभावसाधनी । यथा स्वभावविरुद्धोपलब्धिः–नाविचलितात्मा भावः परिणामात् । स्थितिस्वभावैकान्तस्य स्वभावपरिहारविरोधः । स्वतो [ऽ] नश्वरत्वे कौटस्थ्यप्रसङ्गः । कार्यविरुद्धोपलब्धिः–न लक्षणविज्ञानं प्रमाणं विसंवादात् प्रमाणान्तरापेक्षणे । कारणविरुद्धोपलब्धिः–नास्य परीक्षाफलम् अभावैकान्तग्रह- 20 णात् । संवृतिवादेऽपि समीक्षाविरोधः ।

व्याप्यव्यापकयोरेवं सिद्ध्यसिद्धी विचारतः ।
सदसद्व्यवहाराय तत्त्वान्यत्वविवेकतः ॥३१॥

§ ३५. सर्वत्र व्याप्यसिद्धिरविशेषेण व्यापकसाधनी । यथा [ऽ] नित्यं कृतकत्वात् । परिणामाभावे तदनुपपत्तिः । तथा व्यापकस्यानुपलब्धिः व्याप्यवि- 25 निवर्त्तनी । न निरन्वयविनाशो भावस्य अत्यन्ताभावानुपलब्धेः । इति स्वभावसहचरकार्यकारणभेदपरिग्रहः । स्वभावविरुद्धव्याप्तोपलब्ध्योः व्यापकानुपलब्धौ अन्तर्भावः । न नित्यः कृतकत्वात्, अकृतकत्वासिद्धिः (द्धेः) । अविशेषेण स्वभावविरुद्धकार्यो ( र्या ) नुपलब्ध्योः कार्यानुपलम्भे । तत्र प्रयत्नानन्तरीयकत्वात् इति नापरो हेतुरनुपलम्भात् । उपलब्धेर्वा अन्योन्यविवेकोपलम्भलक्षणत्वात् । अनयो 30 [:] स्वभावविरुद्धोपलब्ध्योरनुपलम्भलक्षणत्वात् । अन्योपलम्भोऽनुपलम्भः ।

स्वभावविरुद्धव्याप्यव्यापककार्यकारणोपलम्भानुपलम्भप्रयोगभेदाः प्रत्यक्षेऽपि विवादवृत्तयो निर्णये नियमेन परीक्षामपेक्षन्ते । तदर्थसाधनं सर्वत्र ज्ञानशब्दव्यवहारसाधनम् ।

अध्यक्षस्यापरीक्षत्वादनुमानं (न) परम्परा ।
5 अविनाभावसम्बन्धेऽप्यन्तर्व्याप्त्याऽवतिष्ठते ॥३२॥

§ ३६. बहिर्दर्शनादर्शने धर्मिधर्मस्य न लिङ्गिलक्षणं तन्दुलपाकादिवत् । तन्नैतावता व्याप्तिः अन्यत्र विचारात्, यतो व्यापकं निवर्त्तमानं व्याप्यं निवर्त्तयेत् । कस्यचिदवग्रहमात्रं नित्यानित्ययोः विरोधाऽविरोधात् नियमं न परीक्षते अतिप्रसङ्गात् । तदनुमानपरम्पराऽपि अनवस्था । परस्य दर्शनपाटवादिमतः स्वतो विवेच-
10 कत्वाद् विप्रतिपत्तिनिवृत्तिः । अविषयेऽन्यस्यावृत्तिः । तदाश्रयत्वाच्च सर्वत्र दृष्टान्तो नावश्यं बहिः ।

अपेक्षः सदनै(ने)कान्तं सम्पश्यद्भिः ( द्भिः ) समीक्षकैः ।
अन्यथायोगतः सर्व [ः] तथैवेत्यनुमीयते ॥३३॥

§ ३७. साध्यसाधनयोः स्वभावप्रतिबन्धे साक्षात्कृतेऽपि साकल्येन व्याप्तिः
15 परीक्षातः । तद्विभ्रमकल्पनायां प्रकृतमकृतं स्यात् । तदाभासाविशेषे कादाचित्कसंवादस्याप्रतिबन्धेऽपि सम्भवत्स्वलक्षणयोगे व्यभिचारः, समीक्षाकारिणः पुनरविप्रतिसारः । तत्र सर्वत्र विभ्रमोपलम्भो [ऽ] विशेषात् । सतामेकान्तानेकान्तविच्छेदपरिच्छेदयोरभेदप्रत्यनीकस्वभावविधिप्रतिषेधप्रतिबद्धे ।

प्रत्यक्षस्यापि सामग्रीप्रतिभासविशेषतः

20 § ३८. मतिश्रुतयोः प्रतिभासभेदेऽपि परमार्थैकतानत्वम् । सामग्रीभेदे प्रत्यक्षवश्वांस (वस्त्वांश) मात्राभिनिबोधे नान्यार्थोऽन्यव्यवच्छेदः । अविषये स्वयमप्रवृत्तेः । अयथार्थात्मावभासविच्छेदः परोक्षमात्मानं कथञ्चिद् विदधतो विच्छेदेन बहिरर्थावलम्बनम् असाधारणनिर्भासविरहिणोऽपि अविरुद्धम् ।

ज्ञस्य विभ्रमसंश्लेषे कथञ्चिद्भ्रान्तिरात्मनि ॥३४॥
25 सर्वथा विभ्रमे तस्य विभ्रमोऽपि न सिद्ध्यति ।
यथा विभ्रमविच्छेदाज्ज्ञानात्यन्तरितं स्वयम् ॥३५॥
तथाऽर्थजातिधर्माणां तत्र सम्प्रतिपत्तितः ।

§ ३९. चेतनस्य सतः कथञ्चित्स्वभावाप्रतिपत्तौ न वै निमित्तान्तरमन्यत्र विभ्रमात् । अन्यथा सुप्तप्रबुद्धाविशेषप्रसङ्गम्रु (ङ्गः । उ) पलक्षितसुखादिविज्ञानस्वल-
30 क्षणक्षणक्षयादिविशेषानुपलक्षणे दूरासन्नादिदेशस्थपुरुषैकविषयोपलम्भवत् । क्वचिद्

विभ्रमेऽपि वस्तुमात्रोपग्रहे व्यक्तमनेकान्तसिद्धिः, इति साकारौ विषय-विषयिणौ स्याताम्। एवं हि कालादिव्यवहितात्मपर्यायसमुपग्रहे परत्र कः प्रतिघातः ? व्यामोहवि-च्छेदाविशेषेण अन्तस्तमोविगमे बहिरकारणं संस्कृतेन्द्रियवत्। मूर्च्छितादौ बहिरङ्ग-साकल्येन अन्तरङ्गं बलीयस्त्वम्। तदतत्कार्यविच्छेदमुपैति न तत्त्वपरिच्छेदमिति स्वरु-चिविरचितदर्शनप्रदर्शनमात्रम्। तत्समारोपविविधिप्रतिषेधयोरतादात्म्ये प्रकृतमकृत (तं) 5 स्यात्। समानपरिणामरहितानां (ना) मतत्कार्यव्यावृत्तौ समानप्रत्ययः चक्षुरादि-वत्। समे समविकल्पजनकत्वे क्वचित् परामर्शनियमः तादृशो दर्शने सामान्यस्य तैरप्याश्रयणीयत्वम्, अर्थक्रियाविरोधः, कल्पनागौरवतो जातिलक्षणसंवृतेः। स्वसा-मान्यलक्षणयोर्भेदाभावे प्रत्यक्षेतरयोरतादात्म्येऽप्यनवस्थादिदोषानुषङ्गः। सविकल्पः सिद्धः तदन्यविधिप्रतिषेधविषयमनुमानम्। 10

अप्रत्यक्षेऽपि देहेऽस्मिन् स्वतन्त्रमवभासनात् ॥३६॥
प्रत्यक्षं तद्गुणो ज्ञानं नो जातिस्मरदर्शनात्।

सत्यं तमाहुर्विद्वांसो विद्यया विभ्रमेण यः ॥३७॥
यथार्थमयथार्थस्या (र्थं वा) प्रभुरेषोऽवलोकते।

तुलोन्नाम-रसादीनां तुल्यकालतया नहि ॥३८॥ 15
नाम-रूपादिहेतुत्वं तादात्म्यं सहचारतः।

अन्वयोऽन्यव्यवच्छेदो व्यतिरेकः स्वलक्षणम् ॥३९॥
ततः सर्वा व्यवस्थेति नि (नृ) त्येत् काको मयूरवत्।

इति प्रमाणसङ्ग्रहे चतुर्थः प्रस्तावः ॥छ॥



## ५ पञ्चमः प्रस्तावः। 20

अन्यथानिश्चितं सत्त्वं विरुद्धमचलात्मनि ॥४०॥
निर्व्यापारो हि भावः स्यान्नित्यत्वे वा निरन्वये।

§ ४०. साध्याभावसम्भवनियमनिर्णयैकलक्षणो विरुद्धो हेत्वाभासः, यथा नित्यः शब्दः सत्त्वात् इति। सर्वथा [ऽ] विचलितात्मनः क्वचिदनुपयोग [:]। कस्यचिद्भावे स्वयमनायासयतो भावान्तराऽविशेषिणोऽभावाविशेषसन्निधानेऽप्य- 25

नुपकारः। तथा नित्यानां परस्परतो हेतुफलाभावः। निर्व्यापारेषु व्यापारसमारोपः क्रमयौगपद्यासम्भवो न कारकज्ञापकव्यवस्था पारमार्थिकी। तदाकस्मिकत्वे देशकालस्वभावनियमायोगः। इष्टविघातकृतदे (कृदे) कस्य पूर्वापरस्वभावपरिहाराऽवाप्तिनान्तरीयकत्वादर्थसिद्धेः, इत्यनिश्चि (श्चि) तविपक्षव्यावृत्तिरनैकान्तिकः। कौटस्थो 5 (स्थ्ये) विक्रियाविरोधः। क्षणिकत्वे सर्वथानन्वयः। जात्यन्तरे वितर्कयतः सम्मोहः। कृतकत्वादिषु समानश्चर्चः।

**जात्यन्तरोपलम्भेन कथञ्चित्सकलग्रहः ॥४१॥**
**अतर्का (र्क्का) र्यव्यवच्छेदेऽप्यर्थमात्रोप्र (प) योगतः।**

§ ४१. स्वतो व्यतिरेके न उपाधयः स्युरि (र) तिप्रसङ्गात्। तथा दृष्टे प्रमा-10 णान्तरवृत्तिर्न, एकोपावि(पाधि)प्रतिपत्तेः श(स)कलग्रहनान्तरीयकत्वात्। अन्यथा अनवस्थाप्रतीतिः। समारोपव्यवच्छेदे समानः प्रसङ्गः तत्परिच्छेदाऽविशेषः। इतरथा विपक्षानतिशायनात्। स्वतो निर्णयस्य अतद्धेतुफलापोहनिर्णयः, स्वविषयनिश्चययोरविनाभावः, परतोऽनवस्था च। नहि निर्णयस्य स्वरूपमन्यदपि निर्णयात्। स पुनः अवश्यमात्मानं व्यवसाययत् (यन्) सकलं न्यायविषयीकरोति। सर्वथा 15 तदतद्भ्रान्तिविच्छेद एकत्र निश्चयसमारोपविघातात्, तदेतदपि गण्डूपदभयाद् अजगरमुखकुहरपरिपतनमनुसरति। तस्मान्न भेदाऽभेदप्रतिपत्तिः उभयत्र व्याघाता [त्]। क्वचिदनयोरवाच्यतायां तद्वैकल्यम्। अतो न दृष्टाद् गरिष्ठमिष्टम्।

§ ४२. प्राणादीनाम् **अन्यथानिश्चितं सत्त्वं विरुद्धमचलात्मनि**। स्वयमदृश्येऽपि न्यायस्य प्रविजृम्भणात्। प्रभवाभावविरोधप्रसिद्धिः व्याधिभूतग्रहादिवत्। 20 अतः साकल्येन चलनोन्नान्यः (?) तादृशो विप्रतिषेध इत्यनभि (भिनि) निबोधनैकान्तिकत्वम्। अदृश्यानुपलम्भादभावाप्रसिद्धेः घटादीना(नाम्) नैरात्म्यासिद्धौ प्राणादेरनिवृत्तिः इति तमासा (तमसो) नैर्घृण्यात्।

§ ४३. चलानां तनुकरणभुवनादीनां सन्निवेशादेः अन्यथा निर्णीतं सर्वं (सत्त्वं) विरुद्धमचलात्मनि। विप्रकृष्टेऽपि न्यायस्य विजृम्भणम्। परिणामिनि संशयः। 25 सिद्धः संस्थानादिर्विवादास्पदे तथा प्रत्यवमर्शेनाभिधानमात्रम्। विशेषकल्पनायामतिप्रसङ्गः। तादृशज्ञानपूर्वकत्वाभावेऽप्यविरोधादनैकान्तिकः।

§ ४४. चलानां चक्षुरादीनां सन्निवेशादेः अन्यथा निर्णीतं सत्त्वम् इष्टविघातकृत् अचलात्मनि। परिणामिनि संशयः। संहतानां पारार्थ्या (र्थ्ये) नियमाभावः। कार्यकारणयोः भेदैकान्ताऽसिद्धेः।

30 § ४५. चलानां शब्दादीनां सन्निवेशादेः सत्त्वं विरुद्धमचलात्मनि। प्रधानपुरुषादौ परिणामिनि संशयः। कार्यकारणानामन्वयादेरनेककारणपूर्वकत्वे सम्भवः।

§ ४६. चलानां सुखादीनां सत्त्वं विरुद्धमचलात्मनि। प्रधानादौ तेषामनुप्रवेशो वा। चलात्मनि चैतन्यपरिणामिनि तदुभयत्र वृत्तेरनैकान्तिकम्।

**सहोपलम्भनियमः स्याद् भेदस्यापि साधकः ॥४२॥**

§ ४७. उक्तविघातकृद् द्रव्यपर्यायपरमाणूनां सहदर्शनम्, यथा भेदः, तदन्यथा विघातो भेदप्रतिषेधको न स्यात्। भेदमात्रस्य साधनात्। नहि सर्वचित्तानां 5 सहोपलम्भो[ऽ]परः सहोत्पत्तेः। स्वभावान्तरविरोधकल्पनायां तथोपपत्तिः। सन्दिग्धा[ः] कर्तुरस्मरणो(णा)दयः। सतः स्मृतेरभावो यद्विरुद्धः सर्वः सर्वज्ञः स्यात्। अन्यतमस्यापि सम्भवे तत्प्रतिषेधे विप्रतिषेधः। शास्त्रलिङ्गतः प्रतिपत्तावनियमः। तदविशेषण (षेण) वृत्तौ प्रत्यक्षेऽपि कार्यव्यभिचारः। सतो दर्शनसाकल्यनियमे स्मृतिर्न भवेत्। तदभावे मानान्तराऽसिद्धिः। स्वतः प्रामाण्यविप्रतिषेधे पुनरन्धपरम्परायां 10 न गुणोत्कर्षः। तदर्थसंवादस्मरणव्यतिरेकेऽपि सर्वथा साधकप्रमाणप्रतिक्षेपे च सन्देहः। इत्यनैकान्तिकभेदाः निश्चितसन्दिग्धव्यभिचारिणोऽनेकप्रकाराः।

§ ४८. त्रिलक्षणयोगेऽपि 'सर्वज्ञो न वक्तृत्वात्' इति पक्षधर्मस्य सपक्ष एव दर्शनात् स्वभावप्रतिबन्धेन प्रमाणान्तरं व्याप्तिः अयुक्तप्रतिपत्तिः, अतो न व्यापकानुपलब्धिर्व्य (ब्धिव्य) वस्था। तथा च न कश्चिद् विशेषः। तादृशवचनादिगुणो- 15 पपत्तौ अन्तर्व्याप्ति (प्ते) रसिद्धावगमकत्वम्, तत्सिद्धौ अनन्वयेऽपि। न त्वसाधारणा हेतवः, तद्यथा नित्यः शब्दः श्रावणत्वात्। सर्वथाऽपरिणामिनः तदसम्भवैकान्तः, तत्र सर्वहेतूनामसाधारणत्वम्। साकल्येन व्याप्तिदर्शनेऽविप्रतिपत्तिः। अन्यथा प्रकृतेऽपि कथमुपसंहरेत्?

**सर्वथा भावात् सन्देहेऽप्यन्यथाव्यस्तसंविदः।** 20

§ ४९. असिद्धः चाक्षुषत्वादिः। शब्दस्य परिणामेऽपि चक्षुरादिज्ञानमयुक्तम्। रूपादिविवर्त्तस्य तत्त्वव्यतिक्रमेण द्रव्यमनादिनिबन्धनं (निधनम्) न शब्दपर्यायो (यः) चाक्षुषत्वप्रसङ्गादिति हेतुलक्षणं पुष्णाति।

**[§ ४. सहोपलम्भनियमोऽप्यन्योन्यार्थविदां विदाम् ॥४३॥]**

§ ५०. **सहोपलम्भनियमो**ऽपि अर्थज्ञानयोः **अन्योन्यार्थविदां विदाम्**। 25 यदेकार्थोपनिबद्धदृष्टयः परस्परज्ञानं परचित्तविदो वा तदर्थं नावि (नाव) श्यं संविदन्ति, बहिरसति तादृशो [ऽ] सम्भवः। विभ्रमे कुतो विशेषः? तथा सिद्धो हेतुः कुतश्चिद् ग्राह्यग्राहकविप्लवनिवृत्तेः विप्रतिषेधः। एवमसहानुपलम्भो व्यावृत्तिमात्रं शशविषाणयोरिव बाह्येतरपक्षयोरसिद्धः। सदसतोरसम्बद्धो (न्धो) भेदाभावे भावसिद्धौ किं वादः? तत्र एकोपलम्भनियमः, तदात्मकत्वे साध्याऽविशेषः। स्वोपलम्भनियमो 30

विज्ञप्तिमात्रसिद्धेः स्यात् । अतद्रूपस्याप्यतत्परिच्छेदव्यतिरेकनियमेन विषयाकाराविशेषे विज्ञानसन्तानभेदवादो निरालम्बः । तद्विशेषो विभ्रमविवेकनान्तरीयकः । नास्ति सर्वज्ञोऽनुपलब्धेः इति स्वप्रमाणनिवृत्तिरन्यथाऽपि । सर्वोपलम्भनिवृत्तिरसिद्धा । सम्भवेऽपि निर्णेतुमशक्तौ तादृशो विप्रतिषेधे तत्प्रतिषेधयोः स्वयमुपलम्भात्मकत्वाच्च
5 स्वाश्रययोः सन्देहे सन्देहः ।

**सिद्धे [ऽ] किञ्चित्करो हेतुः स्वयं साध्यव्यपेक्षया ।**

§ ५१. शब्दविनाशादौ सत्त्वेन सिद्धे सिद्धोऽपि कृतकत्वादिः प्रत्यक्षाग्नौ धूमवत् । विशेषाधानमर्थान्तर (?) तत्र धूमदर्शिनः प्रत्यक्षवत् साक्षात्कृतेऽपि कुतसिद्धि (श्चिद्धि) पर्यासनिवृत्तिरज्ञातोऽहेतुः । साध्येऽपि कृतकत्वादिः अज्ञातः साधनाभासः ।
10 तदसिद्धलक्षणेन अपरो हेत्वाभासः, सर्वत्र साध्यार्थासम्भवाभावनियमासिद्धेः अर्थज्ञाननिवृत्तिलक्षणत्वात् । अनयोरर्थेऽपि विरुद्धाव्यभिचारिणः सम्भवः, यथा नित्यो भावः तद्भावं प्रत्यनपेक्षणात् । तद्धेतूनामसामर्थ्ये तद [त] त्कारणासम्भवः । कादाचित्कत्वमपेक्षातः स्यात् । नहि भावादव्या (दन्या) र्थक्रिया । कादाचित्कत्वमयुक्तः (क्तम्) स्वप्नादिवत् । क्वचित् प्रतिभासभेदो विरुद्धधर्माध्यासो वा ग्राह्यग्राहकवत् । न चापरं
15 भेदलक्षणमित्यविविक्तं तत्त्वम् । स्वतो जन्मनि सदसतोः प्रभवविरोधः । परतः तुल्यः पर्यनुयोगः । एतेन उभयानुभयविकल्पाः प्रत्युक्ताः । तत्र निर्व्यापारेषु व्यापार-कल्पनायां परत्र को [ऽ] परितोषः ? नित्यसन्निधाने कल्पनागौरवपरिहारेण भाव-धर्मपरिसमाप्तेः । तथा सर्वमनित्यमर्थक्रियाकारित्वात् । तदभावे निरुपाक्ष (ख्य) त्वम् । पूर्वापरस्वभावपरिहारावाप्तिरयुक्ता तदवस्थस्य । न तावत् क्रमेण; कस्यचिदे-
20 कत्र करणाकरणविरोधात् । पूर्वमसमर्थं पश्चादपि । सहकारिकारणवैकल्यं समानम् । तदपेक्षाऽयोगः । तत्कृतमुपकारमात्मसात्कुर्वतः स्वभावभेदः । अन्यकरणे असम्ब-न्धाऽनवस्था । न सर्वथा नित्यमुपकर्तुं युक्तम् । अकिञ्चित्करोऽनपेक्ष [ः] स्यात् । नापि यौगपद्येन; तत्करणस्वभावस्य पुनस्तदकरणेऽपि स्वभावहानिः । सहकारिवैक-ल्यादि समानं प्रत्यभिज्ञानेऽपि । सदृशापरापरोत्पत्तिविप्रलम्भान्नैकत्वम् । तादृशं भेद-
25 नान्तरीयकम् । न चापरं भेदलक्षणमिति । स्वभावप्रतिबन्धे नैतावन्योन्यमतिशयाते । समुदायोऽहेतु [ः] मिथ्यैकान्तपरिग्रहात् ।

**सर्वथान्योन्यसम्बन्धे विरुद्धं श (स) कलात्मनि ॥४४॥**

§ ५२. प्रत्येकं सह वा सामान्यविशेषार्थसाधनः ।

**एकान्ताश्रये विरुद्धः तद्धेदिति सन्देहकृत् ।**
30 **संशयाद्धेत्वभावेऽपि साध्येऽकिञ्चित्करोऽखिलः ॥४५॥**

§ ५३. किं वै व्यभिचारिणः सन्देहः सत्यप्यविनाभावे पक्षविपक्षयोः तद-

वेदिनि सम्भवी ? प्राग् विपर्यासवद्वृत्तस्यानिराकरणं सर्वत्र समानम् । साध्ये गुणदोषयोः कस्यचिदन्वेषणं सिद्धसाध्यार्थयोः सिद्धासिद्धाऽकिञ्चित्करविस्तरा विरुद्धादयः ।

**अन्यथासम्भवासिद्धः साधनः प्रतिरूपकः ।**
**विरो ( रु ) द्धोऽकिञ्चित्करो ज्ञातः प्रत्येकमिति सङ्ग्रहः ॥४६॥**
**विरुद्धाव्यभिचारी स्यात् विरुद्धो विदुषां पुनः ।** 5
**प्रकृया ( प्रक्रिया ) व्यतिरेकेण सर्वे सम्मोहहेतवः ॥४७॥**
**तथाहि सर्वहेतूनां भावना सत्त्वमीक्षते ।**
**स विरुद्धोऽन्यथाभावाद् असिद्धः सर्वथात्ययात् ॥४८॥**
**व्यभिचारी विपक्षेऽपि सिद्धेऽकिञ्चित्करोऽखिलः ।**
**अज्ञातः संशयासिद्धव्यतिरेकान्वयादितः ॥४९॥** 10
**विरुद्धाव्यभिचारी स्यादर्थमात्रावधारणात् ।**
**अन्तर्व्याप्तावसिद्धायां बहिरङ्गमनर्थकम् ॥५०॥छ॥**

इति प्रमाणसङ्ग्रहे पञ्चमः प्रस्तावः



## ६. षष्ठः प्रस्तावः

**[ § ९. समर्थवचनं वादः शाश्वतं सत्क्रियाश्रयात् । ]** 15

§ ५४. **समर्थवचनं वादः** । प्रकृतार्थप्रत्यायनपरं साक्षिसमक्षं जिगीषतोरेकत्र साधन-दूषणवचनं वादः । **शाश्वतं सत् क्रियाश्रयात्** । 'सर्वं नित्यं कृतकत्वात्, यत् कृतकं तन्नित्यं युक्तं यथा आत्मा, तथा च सर्वं कृतकम्, तस्मान्नित्यम्' इति साधनाङ्गवचनोपालम्भच्छलेन स्वामेव स्थितिं विधुरयं ( यन् ) सर्वथानर्थनिबन्धिनो विजयते । विचित्रा हि परप्रत्यायनोपायाः स्वनिश्चयवत् । प्रत्यक्षेऽपि कुतश्चित् 20 साधनसम्बन्धप्रतिपत्तेः । सम्मोहव्यवच्छेदेन तत्त्वावधारणे स्वयं साक्षात्कृतेऽपि साधनवचने कथञ्चिन्निश्चित्य विचारे विनिश्चयोपपत्तौ साध्यधर्मसम्बन्धदर्शनस्य प्रतिज्ञाविशेषेण तदन्यतरवचनप्रतीतौ वाचकम् उपनयादिसमम् । अन्यथा साध्यसमम् । तदेवमपि 'युक्तं न वा' इति तर्कय तावदक्षिणी विस्फाल्य । यदि युक्तम्; किंकृताकृ[त] नियमेन ? तावत् प्रयोक्तव्यं यावता साध्यसाधनमधिकरणं प्रत्येति ॥छ॥ 25

**नहि तैः सर्वथाऽसिद्धं कर्तुं युक्तं निरन्वये ॥५१॥**

§ ५५. प्रागुत्पत्तेः असतः पूर्वं प्रत्यनपेक्षा, निष्पन्नस्यापि सतः स्वयमनाधेयातिशयात्मनो भावान्तरवत्। एतेन उभयावु (नु) भयविकल्पः प्रतिव्यूढः। सत्तासम्बन्धेऽपि समानः प्रसङ्गः। कालाद्यनपेक्षिणः सर्वतो व्यावृत्तेः स्वतन्त्रो भावः स्यात्। अपेक्षितपरव्यापारो हि भावः कृतकः। तत्कृतमुपकारमात्मसात्कुर्वतः तन्नियत5 वृत्तेः सर्वथा तत्कार्यतया प्रतिक्षणं भेदिनः तद्भावाऽव्यवसायतया तदपेक्षणम्। इतरवा (था) कारणस्यापि सतः सामर्थ्ये सकृत् कार्यजनने विश्वमक्रममकार्यकारणमनुपाख्यम्। सति समर्थे तत्राभवत् नियमेन पश्चात् स्वयं भवत् किमानन्तर्यमपेक्षते? तदसामर्थ्याविशेषेण प्रागपि स्यादभावानन्तर्याविशेषेण। तदयं प्रभवसमर्थां सतीं विहाय मृतां पुत्राय कामयते। सम्भवत्यपि परिणामिनां शक्तिविचित्रता
10 अभावविलक्षणत्वात्। विरुद्धधर्माध्यासेऽपि नानैकव्यवस्था नानार्थैकज्ञानवत्।

**तदयं भावः स्वभावेषु कुण्डलादिषु सर्पवत्।**

§ ५६. तत्र स्पष्टनिर्भासो विकल्पः सन्निधानापेक्षी भावनातो निवृत्तिः सुखादिवत्। अन्यथा स्मरणप्रत्यभिज्ञाऽभावः। तदेवं परस्परपरिणामपरिग्रहविवर्त्ताहितविविधपर्यायैरवस्थान्तरमनुभवति ॥छ॥

15 **उत्पादविगमध्रौव्यं सत् प्रत्येकमसम्भवात् ॥५२॥**

§ ५७. नाशस्यापि कारणे सिद्धं कृतकत्वमुत्तरोदयाऽविशेषेण। पूर्वापरावधिपरिच्छिन्नसत्तासम्बन्धेऽपि तादात्म्याऽनतिक्रमः। तन्न उत्पत्तिसंहारौ स्थितिरहितौ स्याताम्। एवं प्रतिक्षणम् उत्पादविगमध्रौव्ययुक्तं सत्। सकृदपि अतत्स्वभावस्य तन्नियमविरोधः। नाशश्चानपेक्षायां न कदाचिद्भवेत् पूर्वोत्तराविशेषेण। स्वतो
20 हेतोर्नश्वरस्थास्नुरुदेति न पुनरनपेक्षः। परस्परपरिणामाहितविशेषपरिग्रहेऽपि स्वरसवृत्तेरप्रतिघातः विषयसन्निधानाहितविशेषविज्ञानवत्। स्वरसभङ्गुरस्यापि विरोधिप्रत्ययविहितविशेषलक्षणेन निवृत्तिं पश्यामः। सदसतोः पूर्वापरभावनियमः। कथञ्चित् कार्यकारणवत् अचलस्याप्यव्ययादुत्तरीभवति। तादात्म्यपरिणामेन सत्त्वप्रतिभासनात्। सर्वस्य अनेकान्तात्मकत्वे तदतद्व्यवस्था तथापरिणामात्।
25 नहि तथा अपरिणतं तत् विप्रतिषेधात्। प्रसिद्धप्रभवसादृश्यप्रत्यासत्तिविप्रकर्षयोरपि नानैकस्वभावनियमः पितापुत्रवत्। सन्तानस्य अन्यथाऽसम्भवात्। एकप्रत्यवमर्शविशेषव्यवस्थायाम् एकत्वविधानम्। विभ्रमकल्पनाऽनानैकव्यवस्था, नैकयोगक्षेमलक्षणमेकम् अतिप्रसङ्गात्। विरुद्धधर्माध्यासाद् बहिरन्तर्मुखप्रतिभासविज्ञानैकतानिवृत्तिः। अर्थज्ञानविवेकप्रतिभासयोः अदृश्येतरयोरविरोधे सूक्ष्म-
30 स्थूलकलाकलापस्य प्रतिक्षणमुदयस्थितिसंहारमनुभवतः क्रमवृत्तेरप्रतिघाते विवेककल्पनाविवेकः। आदौ दृष्टापरस्वभावाविघातेन पुनः क्षयदर्शनात् सिद्धेः (द्धः) अन्ताद्योः

पूर्वापरस्वभावाप्तिपरिहारयोः साध्यसाधनभावः। श (स)कलशक्तिविरहिणोऽवस्तुत्वे तदुपादानविच्छेदः, प्रकृतिविकारनान्तरीयकत्वादर्थान्तरप्रसूतेः। त्रिलक्षणं प्रतिक्षणमविकल्पितं विकल्पलक्षणम्, अन्यतरव्यतिरेकेऽनुपपन्नम्। समुदायेऽसङ्करप्रसङ्गः। एकशः तल्लक्षणान्वये भेदकल्पनानर्थक्यम्। तदयम् उत्पाद एव तिष्ठति, नश्यति। नाशयेव तिष्ठति, उदेति। स्थितिरेव नश्यति उदेति ॥छ॥ 5

प्रकृताऽशेषतत्त्वार्थप्रकाशपटुवादिनः।
विब्रुवाणोऽब्रुवाणो वा विपरीतो निगृह्यते ॥५३॥

§ ५८. नित्य आत्मा कथमन्यथा कृतक इति ? न्यूनतया किलायमपि असात् प्रत्यवस्थातुमकृतज्ञः स्वयमवयवान् कलयति।

स्यादजग्रं परापेक्षमुदयं प्रलयं प्रति। 10
अभावस्यानपेक्षत्वं भावस्य परिनिष्ठिते ॥५४॥

§ ५९. न खलु अकृतकस्य नित्यत्वम्। उत्पादविगमक्रियाभावस्यैव क्षणिकस्यानपेक्षत्वम्। सिद्धासिद्धयोः तदयोगः। स्वयमात्मलाभं प्रति अपेक्षितपरपरिस्पन्दं नित्यं कथमकृतकम् ? सर्वदेशकालादिसम्बन्धसातत्ये तत्कृतोपकारापेक्षम्। व्यतिरेकेऽनवस्था, सम्बन्धासिद्धिः। स्वयमात्मलाभस्य कथञ्चिद् व्यपदेशः। नित्यानित्ययोरचलयोः 15 अनुपकारेऽपि सत्स्वभावानतिक्रमाविशेषः। 'कृतकाकृतकयोः नित्यानित्यस्वभावप्रतिषेधः' इति दूषणोद्भावने भूयस्तथैकान्तप्रतिषेधे श(स)कलकलाकलापसमाश्लेषजात्यन्तरप्रतिपत्तिनान्तरीयके प्रकृतसाधने परं पराक्रमते। तथाऽनित्यं कृतकत्वादित्यत्रापि सर्वं समानम्। अविचालिनं (चलिनां) क्रियानिवृत्तिः, स्वभावान्तरलक्षणत्वात् सत्तायाः। तथाऽप्रतिपादने साधनदूषणसामर्थ्याऽपरिज्ञानम्। अज्ञाताऽकिञ्चित्क- 20 राभिधानेऽपि जयाभावः प्रकृतसाधनशक्तिवैगुण्येन।

साध्ये परतिरस्कारो जल्पः तच्छक्तितो जयः।
तत्र मिथ्योत्तरं या (जा) तिः यथाऽनेकात्मविद्विषाम् ॥५५॥

§ ६०. सर्वमनेकान्तात्मकं सत्त्वात् इत्यत्र (त्रा) रेकाः प्रत्येकमाहोस्वित् समुदितम् ? सिद्धसाधनम् सर्वस्य अनेकात्मकताविगानम्। एकात्मकत्वप्रतिषेध (धे) 25 विरोधः। क्वचिदेकताऽभावे अनेकत्वाऽसिद्धिः। अथ एकैकशः एकात्मकत्वम् अन्यथा नानात्वम्; अधिकरणं प्रतिज्ञान्तरं पुनरकिञ्चित्करम्। अथ एकत्वविधेः सामानाधिकरण्यम्; उभयदोषप्रसङ्गः साध्यसाधनसम्बन्धासिद्धिः। अथ तादात्म्यम्; सङ्करः, परस्परानुप्रवेशः। विशेषे नैकाधिकरणत्वम्। संश्लेषे पुनरनवस्था। अतो निरू (रु) पाख्यतया

१ अत्र "रोर्यः" ( सिद्धहेम० १-३-३६ ) इत्यनेन नाशः+एव = नाशयेव इति ज्ञेयम्।

खपुष्पवत् प्रत्येकमनेकात्मनि संशयः क्वचिद् ऊर्ध्वतादिवत्। तादात्म्यनिर्णये परस्परप-
रिहारे (र) स्थितिः एकानेकस्वभावयोः निमित्तभेदात्। निष्प्रत्यनीकत्वे वैयधिकरण्यात्।
उभयदोषे सदुभयोपयोगेन भेदसंहारे साङ्कर्येण व्यवस्था मा भूत्। तदनयोरेकस्यापि
कस्यचिद्रूपस्य अभावात् स्वरूपस्यातद्भाविनः स्वनियतस्याऽभावात् सर्वव्यवहार-
5 सङ्करः। तदतिशये व्यतिरेकादुभयाभावः। एकमनेकात्मकं स्ववचनविरुद्धम्;
शबलाकारज्ञानाभावात्। प्रत्यक्षविरुद्धम्; कस्यचिदेकस्यानुपलम्भेन। संहारस्तत्र-
नीलादेरपरं न मेचकादिकं प्रमेयम्। तद्बुद्धेरपि तद्रूपत्वे तथाभावः, तदनेकात्म-
कत्वविरुद्धं द्रव्यान्तरवत्। यदेकं तदेकात्मकमेव नानात्वविरुद्धं तदेकांशवत्,
तदत्यये धर्मनैरात्म्यम्। तथोपलब्धिः इत्यसिद्धम्। वेद्यवेदकैकाकारज्ञानेऽपि अनैका-
10 न्तिकत्वम्, यथोपलम्भं भावस्वभावनियमाभावः स्वप्नवत्। तथोपलम्भस्य तद्भाव-
नियम इष्टविघातकृत्। परिणामविघातः तदन्यथोपलम्भाभावः, साधनान्तरं तदपि
प्रकरणसमम्, तथाऽन्यथा सम्भवसमारेकतः प्रक्रियाप्रवृत्तेः। नहि दृष्टाद् गरिष्ठमिष्टं
यतोऽयं तथादर्शी प्रमापणीयः। साध्यसाधनव्यवस्थायां पुनः सन्देहो यथा किंश्वि
(श्चि) दयं स्थाणुः स्यात् इति। निपातस्य पूर्वप्रयोगनियमे विरुद्धश्च परनियमोपलब्धेः।
15 उच्चैर्दर्शने व्यभिचार इत्यनेकवा (धा) जञ्जपूके परस्य तद्विप्रतिपत्तौ अप्रतिपत्तौ
प्रकृतार्थविधानप्रतिषेधविधुरे गुणदोषविशेषामवस्थातो (?) जयपराजयाऽसम्भवे
राजकुलवत् जल्पानारम्भेऽपि निग्रहस्थानम् आकस्मिकम्, अतिशयान (अतिशायने)
कथमस्थानं स्यात्। भूतदोषोद्भावनेऽपि तत्त्वं प्रतिपित्सवो निगृह्यते (न्ते) सन्मार्ग-
स्थायिनो वा प्रस्तुतानुपयोगप्रलापैरिति प्रकृतार्थप्रत्यायने वाग्दोषेऽपि जल्पाकं
20 विजयते, यथाऽनित्यः सत्त्वात् इति।

असिद्ध [:] सिद्धसेनस्य विरुद्धो देवनन्दिनः।
द्वेधा समन्तभद्रस्य सत्त्वादिरचलात्मनि ॥५६॥

§ ६१. यावान् कश्चित्स्वभावो मिथ्यैकान्ते स सर्व आश्रयासिद्धः। तदत्यये
तेषां च तत्राभावः तदात्मकत्वात्। नहि अस्ति सम्भवः यन्निरंशो भावः परस्पर-
25 विश्लेषविघातात् तत्रासिद्धिः अनेकान्तसिद्धिः। तत्प्रतिविधानं हि तत्, क्वचित्
कश्चित् प्रसिद्धो धर्मः प्रतिपक्षापेक्षी। तदतत्परिणामलक्षणोऽर्थः स्वभावान्तरविरोधी
परस्परविवेकस्थितेः अर्थान्तरवत्। तदयम् अन्तरङ्गबहिरङ्गप्रत्यनीकस्वभावप्रतिक्षेप-
विकलतया विरुद्धम्। व्यभिचारी प्रभवसामान्यसहचरप्रत्यासत्तिविप्रकर्षयोरपि
तदर्थान्तरभावयोः तथापरिणामव्यवस्थायाम्। साध्यसाधनभेदेऽपि तादात्म्यम्।
30 निष्कलस्य तथाप्रतिभासविक्रियाविरोधः। गुणपर्ययवद्द्रव्यम्। व्यतिरेके पृथगुप-
लम्भसहभावेऽपि समवायिनो नैकयोगक्षेमलक्षणो गुणभावः। तादात्म्ये कथञ्चि-

१ एतदनन्तरं ता० प्रतौ 'व्यतिरेके पृथगुपलम्भसहभावेऽपि समवायिनो' इति पाठः पुनर्लिखितः।

द्भेदः स्पर्शादेः संख्यादिवत् । प्रत्ययभेदिनोऽप्येकत्वं सामग्रीभेदेन कार्यकारणवत् । वर्णसंस्थानादेरकत्वे विप्रतिभासः, क्वचिद् दूरासन्नादिकरणगुणवैगुण्यतारतम्यभेदेन मुक्तादिविशेषस्य रूपज्ञानस्य प्रतीतिः, अन्यथा देशादिनियमेन चन्द्रादौ तथा संवादः कथञ्चिदविप्रतिसारः सामग्रीवैकल्येऽपि न स्यात् । वितण्डात्मतिरस्कारः सं (स) वैतण्डिको मिथ्यादृष्टिः नियमेन परतिरश्चिकीर्षया स्ववचनप्रतिघाती यथा सदस- 5 दात्मा क [ श्चित् ] ।

स्वभावपरभावाभ्यां वाचोवृत्तिरनेकधा ।

§ ६२. यदि स्वरूपेण अस्ति पररूपेणापि भावस्य क्वचिदभावविरोधः । चेतनेतरविकल्पेऽपि न वस्तुविकल्पः । सत्ताविशेषेण प्रमाणस्य अप्रमेयत्वे स्वरूपं न स्यात् । प्रमेयस्याऽप्रामाण्येऽपि संवादाविशेषेण वेद्यवेदकयोः परस्परपरिहारेऽपि बहिर- 10 न्तश्च वेद्यता । विशेषेण व्यापारनिर्भासस्य केवलस्य दर्शनात् आत्मनः स्वयम् आत्मा- न्तरेण सत्त्वम् अनन्यवेद्यनियमात् । निर्व्यापारस्य व्यापारतो वृत्तिः उदयस्थिति- संहारविरहे एकाकारस्याऽदृष्टौ पुनः अनेकस्य तथा विरोधेन भावलक्षणवैधुर्यम् । सर्वे ( र्वं ) विकल्पातीतं तत्त्वमिति स्वामेव कृतिं स्ववाचा विडम्बयति । यदि पररूपेण असत्; तद्विविक्तस्वरूपस्य कथञ्चिदनुपलब्धौ पररूपाऽविशेषेण स्वरूपेणापि 15 इति; सोऽयमात्मानं विडम्बयतितराम् । संवृत्या स्वपरपक्षसाधनदूषणव्यवस्थां समारभयन् सुतरां विडम्बयति परमार्थविपर्ययेण। तथाऽपरपर (तथा पर) प्रसिद्धप्रमा- णेन § २.) "नाप्रत्यक्षं प्रमाणं न परलोकादिकं प्रमेयम् अननुमानमनागमं च" इति लोकविसंवादशास्त्रागमनिकायादयोऽधिकरणभेदेपि केवलम् आत्मोत्कर्षणार्थं लाभ- लोकपूजाख्यातिहेतवो वाग्वृत्तयोऽनेकधा, वर्णपदवाक्यानुपूर्वीनियमः तत्त्वप्रति- 20 पत्तेरनङ्गम्, अन्यत्र आहोपुरुषिकातः । कल्पनातोऽनवस्था ।

शून्यसंवृतिविज्ञानकथानिष्फ (ष्क) लदर्शनम् ॥५७॥
सञ्चयापोहसन्तानाः श (स) त्वेते जाद्य (ड्य) हेतवः ।
प्रतिज्ञाऽसाधनं यत्तत्साध्यं तस्यैव निर्णयः ॥५८॥

यदहृश्यमसंज्ञानं त्रिकमज्झी ( ह्री ) कलक्षणम् । 25
प्रत्यक्षं निष्कलं शेषं भ्रान्तं सारूप्यकल्पनम् ॥५९॥

क्षणस्थानमसत्कार्यमभाष्यं पशुलक्षणम् ।
प्रेत्यभावात्ययो मानमनुमानं मृदादिवत् ॥६०॥

शास्त्रं सत्यं तपो दानं देवतानि (ने) त्यलौकिकम् ।
शब्दः स्वयंभुः सर्व [ त्र ] कार्याकार्येष्वतीन्द्रिये ॥६१॥ 30

न कश्चिचेतनो ज्ञाता तदर्थस्येति तामसम् ।
पदादिसत्त्वे साधुत्वनू(न्यू)नाधिक्यक्रमस्थितिः ॥६२॥
प्रकृतार्थाविघातेऽपि प्रायः प्राकृतलक्षणम् ॥छ॥

इति प्रमाणसङ्ग्रहे षष्ठः प्रस्तावः ॥



## ७. सप्तमः प्रस्तावः ।

सिद्धं प्रवचनं सिद्धपरमार्थानुशासनम् ॥६३॥

§ ६३. सर्वमिथ्यैकान्तातीतं शासनम् अनवयवेन प्रमाणम्, साक्षात्कृतसमय-संवादेन तादृशोऽबाधनं प्रत्यक्षादिवत् । प्रसिद्धसंज्ञानसामग्रीप्रभवतया प्रमाणान्तर-सम्प्लवासम्भवेऽपि कारणगुणदोषसाकल्यवैकल्याभ्यां प्रवृत्तेरङ्गम् । सर्वत्र शङ्कानिवृत्तेः स्वतः प्रतिबन्धवैधुर्ये प्रणेतुरनुभवैरनादित्वेऽपि कायविज्ञप्तिवत् । स्वतः प्रामाण्यमतीन्द्रिये न वै बुद्धेर्विप्रतिषिद्धं वचनवत् । स्वविषये प्रकर्षनियमेन दोषावरणपरिक्षयाभावे तदर्थेष्वनाश्वासः । प्रकारान्तरासम्भवेन तदर्थज्ञानाभ्यासप्रकर्षप्रभवपरिस्फुटप्रत्यये प्रियमनुष्ठितम् । क्वचित्तत्त्वपरिच्छेदव्यामोहविच्छेदयोस्तादात्म्येन सर्वहेयोपादेयोपायपरिज्ञाने किमपरिज्ञानं (तं) स्यात्? तदविशेष (तद्विशेष) व्यामोहे तदर्थासिद्धे [:] सर्वस्य प्रकरणोपयोगः । साकल्येन वृत्तौ प्रवचनं विप्रकृष्टेऽपि स्पष्टमवितथं प्रतिविशिष्टस्वभावं स्वप्नादिवत् । प्रतिबन्धवैकल्ये स्वप्रभवकायवाग्व्यवहारानुमेया रागादिप्रतिपक्षाः ।

पुरुषातिशयोऽज्ञेयो विप्रलम्भी किमिष्यते ? ।

§ ६४. यदि ज्ञानविशेषो दुरवगाहः प्रेक्षावतः कथमागमार्थेषु प्रवृत्तिः ? सर्वविशेषाणां शक्यक्रियत्वात् । सिद्धेऽप्यकृतकस्य प्रामाण्ये तद्विशेषापरिज्ञानम् । श्रुतेः प्रायशो विपर्यासैः सर्वथा व्यवस्था न स्यात् । तदयं त्रिपुरदहनादिवद् आत्मघातोऽपि सितासनपुरःसरो मिथ्यैकान्तप्रलापी प्राकृतप्रज्ञाविगाह्यार्थदिग्मूढः स्वयमङ्गीकृतातीन्द्रियार्थप्रत्यक्षदेशनातः सत्यतपःप्रभावरहितो मनुष्यधर्मा करणादिच्छलेन सम्भावितोद्वृत्तवृत्तिः । प्रसिद्धहिंसानृतस्तेयाब्रह्मपरिग्रहस्वविपक्षगुणोत्कर्षमासं (शं)-समानः यथार्थदर्शनादिगुणो नेति निःशङ्कं नश्चेतः । §३.) "क्षीणावरणः समधिगतलक्षणोऽपि सन् विचित्राभिसन्धिः अन्यथा देशयेत्" इति विप्रलम्भशङ्की तादृशं प्रकरणानुपयोगविशेषं किमर्थं प्रवृत्तिकामो मृगयतो (ते)? दृष्टेष्टयुक्त (क्ति) विरुद्धार्थप्रवचनसमयान्तराणां प्रणेतारो विप्रकर्षेऽपि विशेषतो निर्णीयन्ते शास्त्रकारा इव शास्त्रैः यथार्थदर्शनादिसाकल्यवैकल्यप्रतिबन्धेन ।

समानपरिणामार्थे सङ्केताच्छब्दवृत्तितः ॥ ६४ ॥

§ ६५. क्वचित् समयानपेक्षणे शास्त्रमपौरुषेयमनर्थवद् । अनादित्वे व्यवहारवद् व्याख्याविप्रतिपत्तौ परमगहने कः साक्षी यतो निःशङ्कं चेतः पुरुषः ? स्वयंकृतसमये तदर्थदर्शी कथञ्चिद् व्यवहारिणः प्रवर्त्तयेत् । नित्येऽपि शब्दार्थसम्बन्धे अनवस्था-प्रसङ्गः । सङ्केतदर्शिनः तत्प्रतिपत्तौ तदन्यतमे चलत्यचलति वा अचलश्चलो वा विप्र- 5 तिषिद्धः । नित्यानामनित्यानां वा सब ( सम्ब ) न्धोऽनुपकारविशेषणे सिद्धस्य परतन्त्रतायोगो व्यतिरेकाव्यतिरेकयोरनवस्थासङ्करप्रसङ्गः । तत्सङ्केताद्यभिव्यक्तौ अन्यकल्पनासामर्थ्यम्, उभयोरत्र (च) लात्मतया देशकालावस्थाभेदेन उपलम्भास-म्भवः अन्यत्र प्रतिपत्तेः । अन्यत्र सङ्केते अतिप्रसङ्गः । सामान्यसन्निवेशिनि तथा समवा-याविशेषेण नियतवृत्तेर्विशेषाविशेषव्यपोहवत् । स्वभावभेदानुपलब्धेर्ज्ञानाभिधानानु- 10 प्रवृत्तेः, अन्यथा सम्भवो द्रव्यगुणसमवायेषु प्रसङ्गः । समानप्रत्ययजनकेषु तदव्यति-रेकेण समविषमतया सम्प्रज्ञायमानेषु जातिधर्मपरिसमाप्ता च त (ावत) त्कारणव्या-वृत्तावसाधारणत्वम् । अभावविशेषे जातिवत् समानप्रत्ययः, समानो नाम एकज्ञाननी-लादिवत् । चक्षुरादिज्ञानेऽपि सर्वत्र सर्वथा सारूप्यव्यभिचाराभावः, तादूप्यनियम-सम्भवः । दर्शनेतरयोः सर्वथा भेदे पश्यतो [ऽ] स्मृतिरस्मृतेरपरामर्श इति विषयज्ञानवत् 15 समनन्तरयोर्मतिश्रुतयोः स्वभावभेदे वेद्यवेदकलक्षणम्, तदेकार्थविषये (य) योरभि-न्नात्मना बहिरपि शब्दार्थसङ्केते तदर्थप्रत्यभिज्ञाने वा सत्यार्थता, समानैकात्मप्रतिपत्तौ सत्यानृतार्थताभेदः । समवायसाकल्यवैकल्याभ्यां शाब्देऽपि आभिनिबोधिकवद् भिन्नप्रतिभास एकतानत्वम् । यथार्थदर्शनादिगुणवैगुण्याभ्यां प्रवचनेतरव (वं) शसंवृत्तौ सर्वविशेषकल्पनायामाप्तागमपदार्थप्रमाणप्रवृत्तिफललिङ्गचारित्रं मा भूत् । स्वांशमात्रा- 20 वलम्बिनो नार्थप्रतिपत्तिः ।

§ ६६. एकत्र बहुभेदासम्भवे मिथ्याविकल्पो न स्यात् । सर्वथा विभ्रमे नीलादिविशेषवद् देशकालादिभेदेऽपि दृष्टसमानार्थं विकल्पयतः तद्विषयताप्रत्यक्षवद् देशादिनियमः, अन्यथा स्वप्नवद् दूरासन्नकार्यकारणभावप्रतिविधावनानैकं समनन्त-रसाधारणमात्मानं संविदत् (न्) स्वरूपतत्त्वविभ्रमं वा साधारणं प्रतिलक्ष(तिक्ष)णं त्रिका- 25 लगोचरानन्तपर्यायदर्शी दोषावरणक्षयोपशमवशाद् दर्शनविषयसामान्यविशेषात्मानं समासादयेत् स्थापनादिवत् । प्रतिमादौ यथासमारोपं व्यवस्थापिते तत्समानविक-ल्पमात्मानं धारयति, समानेऽपि सर्वत्र तथाऽर्थदर्शनादिगुणयोगवियोगः तत्त्वमि-थ्याप्रतिपत्तिः । सत्यां प्रतीतौ तदनुमानं श्रेयोऽवाप्तिपरिहरत्तद्गुणदोषविवेको वा सन्निधिवत् तत्स्थाया ( तच्छाया ) प्रतिपत्तौ तदनुमानं स्वरूपप्रतिभासातिशये तथा- 30 परिणतम्, न चैतद् युगपद्भिन्नदेशोपलम्भे स्वपरप्रत्यक्षं विभ्रमकल्पनाविरुद्धम् ।

§ ६७. सन्निकर्षाद् रूपज्ञानं यदि स्पष्टावग्रहः, तदर्थप्रतिघाते दीपरश्मिवद् अनियमप्रकाशप्रसङ्गः । स्फटिकाद्युपहितार्थप्रतिबिम्बोध ( प ) लम्भवच्छ ( च्छु ) तौ तदर्थाधिगमे प्रमाणान्तरेऽपि तदयमर्थमभिनिबुध्य श्रुतविकल्पे द्रव्यपर्यायसामान्यविशेषविषयमधिगच्छति । व्यामोहविच्छेदे सति मतिश्रुतयोरेकत्वेऽपि कथञ्चित्
5 प्रतिभासभेदो अवग्रहादिवत् । तदेतदसद्रूपत्वेऽपि तत्समधिगमनिमित्तम् । तन्न तदधिगम एव सत्यपि सारूप्ये स्थापनादिवत् ।

परंज्योतिरनाकारं पर्यायानुक्रमस्थिति ।

§ ६८. स्थापनाश्रुतिरेव व्यापिनी सर्वत्र समानाकारसम्भवः । सतोऽपि क्वचिदसदविशेषो व्यतिरेकासिद्धिः, समयस्मरणाभावे तदर्थाप्रतिपत्तिः । असत्यर्थज्ञा-
10 पने तदभ्यासमात्रेऽपि श्रेयोऽतिशयप्राप्तिः । विचित्राभि [स] न्धयः प्रतिपत्तारः । स्वाध्यायतपःप्रभावमूलं सकलमलं तदर्थज्ञानं तत्परिच्छेदसामर्थ्यं प्रतिनियतभेदमेतदाकारातिरेकेण व्यभिचारदृष्टौ तदावरणपरिक्षये निरुपाधिकप्रवृत्तिः, यथाप्रतिबन्धक्षयोपशमं वर्णपदवाक्यानुपूर्वीसंहारातिशयः परमाणुक्रमनिमेषलक्षणपर्यायसमासतः ताल्वादिव्यापाराहितसंस्काराः सदृशापरपरिणामेन शब्दधा ( धा ) राः शरीरावयव-
15 संस्पर्शिन्यः प्रत्यवभासेरन् ।

§ ६९. श्रोत्रं हि नाप्राप्यकारि चक्षुरिव प्रत्यासन्नाग्रहणप्रसङ्गः । तदभिघाते विशेषोपलम्भे दिग्विभागप्रतीतिः । अवगृहीतस्याप्रत्यक्षगुणत्वमयुक्तम्, अनाहितविशेषगुणोत्पत्तिविनाशाऽसम्भवात् । निरंशानां क्रमवृत्तौ अर्थान्तरव्यक्तिवद् अर्थोपयोगः स्यात् । कुतश्चिदक्रमस्य व्यक्तावनभिव्यक्तौ तदन्यवैयर्थ्यम् । ध्वनिविशे-
20 षाहितसंस्कारश्रुतिपरिणामी तदर्थमधिगच्छेत् । गुणपर्ययवद्द्रव्यम् । स्पर्शवतः क्रमवृत्तेः द्रव्यत्वं न कस्यचिदपरिणामिनः, पौर्वापरयोर्भागस्य परपरिणामे वर्णान्तरपरावृत्तौ असकलप्रतिपत्तिः। उभयपरिणामे अनुक्रमग्रहणनियमानुपपत्ति [ः] प्रतिवर्णप्रयत्नभेदेन कस्यचित्तिरोभावे परोऽपि तादृशपरिणामः समनन्तरमाविर्भवति कारणसामग्रीसन्निधौ । प्रत्यभिज्ञानेऽपि नानात्वम् । युगपद्भिन्नदेशोपलब्धैः (ब्धेः) सर्व-
25 गतत्वे सर्वत्र सर्वदोपलब्धिः । अपरिणामिनः ताल्वादेरभिव्यक्ता [वा] वरणविच्छेदात् क (क्व) संस्कारादिवियोगः ? सकृन्नानादेशोपलम्भो व्यापिनः प्रयासेऽपि न स्यात् । व्यञ्जकव्यापारे व्यङ्ग्यविशेषानियमः । करणसन्निपातौ ( तो ) पनीतश्रावणस्वभावः पूर्वापरकोट्योः दीपादिद्रव्यवद् अनुपादानानुत्पत्तिरपरिणामविघातः । तथाऽनुपालम्भेऽपि नित्यस्वभावान्तरप्रतिबन्धी । तथाहि–द्रव्यमेव भावाव्यभिचारि तदात्मक-
30 त्वाद्युराप (त्वाद् युगपत्) क्रमभावेऽपि तदेकयोगक्षेमलक्षणवन्नामसदृशोपलम्भतः ।

**तथा द्वि (तद्वि) शेषाप्रतिपत्तेरात्मा स्वामी तदर्थकृत् ॥६५॥**

§ ७०. सर्वस्य निर्दिष्टस्य सर्वथा नोपकारकत्वम् । शरीरादिपरिणामोपयोग-साधनेन गतिस्थितिकरणविघाते तदनुपकार्ये भोक्तृत्वविरोधः । सम्बन्धासिद्धिः उपकारः परिणामाव्यतिरेकेणानवस्था । सर्वत्र तद्गुणोपलब्धावधिध्यानातिरेकः तन्नियतवृत्ता-वतिरेकव्यतिकरसङ्करप्रसङ्गः । तद्गुणान्तरसमवायाविशेषस्वात्मान्तरस्यापि कालाद्य-विशेषेणेच्छादिसमवायनियमः कुतः संसारः ? चेतनस्यापि नित्यमदृश्यस्य स्वयं विज्ञाने 5 न बुद्धिश्चेतना अतीतकार्यकारणतया विकारिणमात्मान नं) कथं दर्शयते ? तदुपलम्भा-निवृत्तेरविशेषेण तद्वृत्तिसङ्करः । तदात्मानतिशायनं (?) यदि विग्रहमात्रव्यापी न भवेत् सहव्याप्तिरुपभोगे न स्यात् । परस्यैव संसारे नात्मनः कर्मफलसम्बन्धः । सन्तान-स्यापि निरू ( रु ) पाख्यतया न संसारः ।

**साधनं नत्व (तत्त्व) विज्ञानं चारित्रं समयस्थितिः ।** 10

§ ७१. आत्मेतरसम्बन्धवियोगकारणतत्त्वबुद्धेरस्ति कायाधिकरणस्य तदनुष्ठान-विशेषतो मोक्षः, तन्निसर्गादवि (धि) गमः, तद्विपक्षवृत्तेः संसार आत्मसुखदुःखतर्पणा-दिप्रवृत्तिनिवृत्त्योरकारणविशेषौषधवत् । अन्यतरवैकल्येन परस्याप्यपरिसमाप्तिः । साध्यसाधनयोरनवयवेन विज्ञानस्वभावव्याप्तौ प्रकृतविषयव्यापारविशेषापेक्षया साधनस्य त्रैविध्यम्, सकलातमपरिज्ञानेऽपि विरतविग्रहसम्बन्धस्य परत्वम् । 15

**सम्बन्धयोगतः स्थानप्रस्थाने तद्विशेषतः ॥६६॥**

§ ७२. चेतनस्यार्थान्तरसम्बन्धवैकल्ये न शरीरस्थितिः । संयोगपरिणामतः कार्यकारणवद् अनादिसम्बन्धविवर्त्ती सुवर्णपाषाणादिवद् विशेषोपपत्ते [ः] ज्ञानस्व-भावस्य मोहादिमूर्त्तानुप्रवेशे मदिरादिवत् । मन्त्रादेस्तादृशोपयोगाविरोधः । धर्मादेर-ज्ञानस्वभावे तदविशेषः । चेतनस्य हीनस्वाप ( स्थान ) प्रापणं बन्ध [ः] संस्कारवशात् 20 देशान्तरप्राप्तिः देवदत्तादिवत्, परापरकर्मप्रबन्धात् परवंसो (शो) त्पत्तिः वितटपात-( बीजपादप ) वत् । सत्यपि परस्यरंदे ( स्परं भेदे ) योग्यतालक्षणः सम्बन्धः । मूर्त्तानां च स्निग्धरूक्षताभावे तादृशो वृत्तेः । नायं प्रज्ञागुणः तत्प्रकर्षापकर्षनिर्ह्रासा-तिशयजातीयाभ्यासविवर्त्ती क्रोधादिकर्मोपादानयोग्यताम् आत्मनः सूचयेत् । युगप-द्भाविनोर्वासनानियमः । परिणामान्तरेऽपि तदन्वयेन अविकलतया युगपदुपलम्भ- 25 प्रसङ्गः । तदुद्भवाऽभिभवस्वभावप्रतिषेधे तिरोभावाऽसम्भवः । इतरस्यापि तदात्म-कत्वात् । चेतनोपतापहेतवः कर्मणो न विशिष्यन्ते । तदयं दोषप्रभवः सति हेतौ न कदाचिदुपरमंते ।

**आत्मनो दोषसम्बन्धम् आत्मज्ञः सन्निवर्त्तयेत् ।**

§ ७३. निसर्गतोऽनवरतव्यामोहसमुदयवशात् स्वरसतो वृत्तप्रसादवृत्तदोष- 30 प्रसरस्य प्रतीकारो न आत्मात्मीयप्रज्ञाप्रकर्षप्रतिपक्षः प्रथमवत् । ज्ञानदर्शनोपयोग-

लक्षणम् अन्तर्ज्योतिर्मयम् अनादिनिधननिर्भासमात्मीयतत्त्वम् अर्थान्तरानपेक्षं चैतन्यवत्, मोहादिसम्बन्धान्वयस्व (व्य) तिरेकानुविधायिनः तादृशोऽज्ञानादयः तिमिरादिवत् स्वहेतुप्रतिपक्षपाटवे निवर्त्तेरन्। आलोकादयो दोषसंश्लेषविश्लेषहेतवः अञ्ज [ञ्ज] नादिवत्, न्मा (मा) र्गाविगमाद् दूरेऽयोग्यानां परिनिवृत्तिः। साध्यसाधनमिथ्या-
5 सङ्कल्पाभिनिवेशो निसर्गतः पापीयान्, यथा आत्मज्ञस्वभावस्य व्यतिरेकिणी बुद्धिः अपरिणामिनोऽर्थोपलम्भेऽकर्तुः करणतया संविद्विषयं व्यवस्थापयन्ती स्वयमन्वयव्यतिरेकौ संसारमोक्षौ अनुया (मा) पयति। सर्वथा विशिष्टा गुणसम्बन्धविवेकतः पुरुषार्थसिद्धिरिति परस्परविरुद्धम्। तादृशो भावान्तराविशेषः। सत्त्वादिसामान्यगुणसम्बन्धेन चेतनानिवृत्तिरन्तःकरणसन्निधावदृष्टकल्पना अनवस्था, सामान्यविशेष-
10 समवायव्यपदेशे चेतनाव्यतिरेकेणात्मा मा भूदुपयोगलक्षणातिरेकतो अचेतनादिवत्। परस्परपरिहारस्थित (ति) लक्षणतया चेतनेतरात्मनोः चेतनेतरसमवायिविवेकतः समधिगमः परं निर्वाणम्।

§ ७४. स्वांशमात्रविषयेन (ण) निरंशपरमार्थेन सर्वथान्या(न्य)वेद्यविरोधे परदुःखमजानतः करुणैव तावन्न भवेत्। विभ्रमतो भावे विभ्रमो न स्यात्। दुःखविन-
15 श्वरस्य भावोपलम्भेऽपि सिद्धसाधनी [य] परतन्त्रो देवानांप्रियः। सन्तानाभावसाधने समानः प्रसङ्गः। प्रभवसादृश्यप्रत्यासत्तेः अन्यथाभावः स्वपूर्वापरस्वभावमतद्धेतुफलव्यावृत्तं मानसं तत्त्वं तत्परं विच्छिनत्ति स्वयमुपेक्षमाणः कृपात्यु (कृपालु) रिति कष्टमनात्मज्ञतापरिगतं तमः। तदीदृशे संज्ञान्तरविकल्पेऽपि स्वपरसन्तानभावनया क्वचिदुपकारापकारसङ्कल्पहेतवः स्नेहादयः प्रवर्त्तेरन्। भेददर्शने सङ्कल्पाभावकल्पनायां
20 संज्ञान्तरसमावेशे ममः समाधिः। आत्मवतां विशेषतः तत्स्वभावगुणदोषविवेकतो हिताहितप्राप्तिपरिवर्जनं यथा विपरीतचेतसां सकलदोषसन्ततयः कारणपरतन्त्रेऽपि कार्यजन्मनि तत्करणनियमवैधुर्य (र्ये) सङ्कीर्येरन्। निरभिप्रायवृत्तौ अनिवारणे वंशवत् आदौ त्रिलक्षणस्यान्तेऽप्यनन्ता जीवराशयः प्रदीपादेः अन्ते क्षयं (य) दर्शनेनार्थाभावसिद्धिः। एकत्र दृश्यादृश्यस्वभावप्रसिद्धे निर्णयेऽनिर्णयवत्, भावस्वभावोऽयं यत् कथञ्चिद्
25 भवित्येव (भवत्येव) मध्यवत् सदैवान्यथा न भवेत्पर्यवसाने परिणामिनः कारणपरम्पराभावप्रसङ्गः। स्वतौ (तो) विवर्त्तशक्तिविरहिणो बहिरङ्गे सुतरामसामर्थ्यम्। उपकार्येप [का] रकसन्निधानात् सन्निधानसाम्ये परस्परविवर्त्तग्रन्थीनां देशकालाद्यपेक्षिणां प्रभवनियमः। तन्निरपेक्षाणां संयोगविरोधः। प्रत्यासद्धि (त्ति) विप्रकर्षविकल्पप्रत्यस्तमयेन व्यवधानेऽपि प्रसङ्गोऽनवस्था च। तदयम् अर्थप्रवृत्तिनिमित्तप्रदेशादिसहचारी
30 विनश्वरविकल्पविषयः निवर्त्तते (निवर्त्तते) न प्रवर्त्तते इति दुस्तरं दौस्थ्यमापद्यते। तादृशः पुरुषपरिणामस्वभावेषु तदभावप्रसङ्गात्तदधिकारे जन्ममरणादिर्मा भूत्। विभ्रमे तद्विकल्पविभ्रमेण विभ्रमोऽपि न सिद्ध्येत्। परिणामे यथा कार्यकारणनानैकत्वं युक्तम्

उपलम्भव्यवस्थायाः सामग्रीभेदेऽपि एकत्र प्रत्यवमर्शे बालादिवद्, भावान्तरस्मरणाच्च। निरंशस्याऽनेकत्र वृत्तिविरोधः। आत्मवृत्तेरर्थान्तरसम्बन्धाभावे साकल्यवैकल्यतः यामः स्वयमंशे स्ववृत्तिरनवस्था च। वा (क) स्यचित् सकलपरिणामिनः कर्मावरणचित्रात्मनोऽधिष्ठानभेदे सकृत् सम्प्लवप्रसङ्गेन देवदत्तवत्। पुद्गलानाम् असङ्ख्येयं तत्त्वं शब्दादिभेदतः, परिणामादेरेककारणप्रत्यनीकनियमे भेदानामविरोधः 5 चैतन्येषु प्रसङ्गः, तदत्यये निरू (रु) पाख्यत्वं संविदान्न (दां त) दीक्षणव्याप्तेः।

§ ७५. सुखादिसंविद्विषयस्य तत्परिणामविज्ञानात्मनः परत्रावृत्तावचेतनज्ञानसङ्गम आत्मकार्यपरिसमाप्तिः। अज्ञानस्य वा सुखादित्वे शब्दादिव्यतिरेकिणोऽभावः। क्वचिद् भावनाविशेषे विशेषदृष्टौ तदेतत्र (तद) निमित्तमिति नियोगासिद्धौ चैतन्यपरितापवत् परापरभाविनियमभेदाभेदयोः कुतः प्रकृतिविकारव्यवस्था ? स्वयमवि- 10 कारिणो विकारकल्पनायाम् आत्मनोऽपि गुणान्तरस्य तथापरिणामे निमित्तमात्राविशेषेण समवायनियमो मा भूत्; समाचार्या (समवाया) विशेषतो द्रव्यगुणकर्मसामान्यविशेषनियमो वा। न खल्वारम्भकावयवान्योन्यावाप्तिर्जन द(?) तिरेकेण प्रभवप्रध्वंसो यतः पदार्थभेदः। सम्बन्धविशेषस्पर्शादिमतामनियतस्निग्धरूपाणां भावात्, येन सूक्ष्मकठिनादिविशेषाः स्थूलद्रव्यादिकमारभन्ते, तत्समस्थाने न तथा भवेयुरलर (लम) 15 र्थान्तरकल्पनया। तूलोपलादिस्पर्शवैश्वरूप्ये क्वचिद् विशेषः, जातिभेदे कथमानन्त्यं न स्यात्, भूतानामत्यन्तसम्बन्धगन्धादिरसङ्करे चित्रः समाधिः।

§ ७६. पार्थिवादिविशेषेषु पुद्गलः स्पर्शादिमान् खलस्नेहो घृ (धा) रणादिभिर्गुणपर्यायैः स्पर्शादिस्वभावान्वयैः अयं सुखदुःखादिविज्ञानोपयोगवद्व्यावृत्त्यनुगमात्मकः। तथाहि—नायं स्पर्शः संस्थानादिमान् नापि तत्स्वभावः स्पर्शादिमान् तद्व्यति- 20 रिक्तो निरुपाख्यः। परस्परविवेके स्वभावप्रतिबन्धो मा भूत्। तदुद्भूतवृत्तौ दृश्येतरस्वभाव अनुभूतविरोधे स्वभावस्य स्वभावपरिहारे अत्यन्तानिवृत्तिप्रसङ्गः। परापरपर्यायावाप्तिपरिहारस्थितिलक्षणोऽर्थः स्पर्शादिविशेषक्रमवर्त्ति तद्विद्गमा (ताद्विगमा) सम्भवे अस्त्यन्तरम् उत्पादविगमध्रौव्यवत् प्रगलेतरयोः सम्प्लवस्थानपरिणामविरोधेऽपि। न वै दु (दृ) ष्टाद् गरिष्ठमिष्टम्। तद्विशेषोपपत्तौ— 25

**अन्त [ः] ज्योतिः स्वतः सिद्धमनुमानानुरोधतः ॥६७॥**

§ ७७. स्वतः सिद्धं चै [त] न्यं भूतेभ्यः परम्। विरुद्धकर्मविशेषकल्पनायां सम्प्लवानुपपत्तितः तत्त्वव्यवस्थितेरन्यथाऽपरिसंख्यानम्। परस्परपरिणामस्थितौ समुदायं (ये) तत्स्वभावाभावो व्योमादिवत्। शरीरादेः पुंगल (पुद्गल) स्वभावानतिरेकः। तथा च स्कन्धवदनिवृत्तिः प्राणादीनां सामग्रीसाकल्येन वृत्तेरसक्रि (?) क्षयोपलक्षणादौ 30 प्रमाणान्तरं विरुद्धम्, तन्मात्रानुबन्धिनि तदयोगः। परिणामादेः तुल्यः पर्यनुयोगः।

तथा संसारस्थितेरेवानुमानात्मभूताविशेषेऽपि प्रज्ञादिगुणनियमवत् चरमागमात् प्रवृत्तौ प्रत्यक्षाद्यविरुद्धात् प्रवृत्तिरिति ।

सम्यग्ज्ञानाङ्कुशः सत्यः पुरुषार्थाभिधायकः ।
अहेतुरन्यहे (?) क्यार्थपरिनिष्ठितचेतसाम् ॥६८॥
5 अदृष्टदोषशङ्कायामन्यत्रापि प्रसज्यते ।
अहं ममाश्रवो बन्धः संवरो निर्जरा क्षयः ॥६९॥
कर्मणामिति संव्या (सत्कृत्य) प्रेक्षाकारी समीहते ।
कृपा स्वपरसन्तानस्थानसंहारकारणम् ॥ ७० ॥
अचेतः करुणात्यन्तमन्यदुःखमजानतः ।
10 कूटस्थस्य सतः साक्षाददृश्यानुभवात्मनः ॥७१॥
सुखादि विषयः शब्दाद्यविशेषोवि (षधि) योन्यतः ।
गुणयोगवियोगाभ्यां संसारपरिनिर्वृती ॥७२॥
सम्प्लवः सर्वभावानां शास्त्रं दृष्टेष्टबाधितम् ।

॥ [इति] प्रमाणसङ्ग्रहे सप्तमः प्रस्तावः ॥



## ८. अष्टमः प्रस्तावः ।

द्रव्यपर्यायसामान्यविधानप्रतिषेधतः ॥७३॥
सहक्रमविवक्षायां सप्तभङ्गी तदात्मनि ।

§ ७८. सामान्यविशेषात्मके वस्तुनि स्वपरभावानुगमव्यावृत्तिवत् परापरस्वभावानुगमपराव्वृत्तिप्रसङ्गेन तत्त्वमवकिरन् कथमविचार्यः ? तदाऽनानैकत्वं कारकज्ञापकव्यवस्था [प] कत्वम् । विभ्रमे विभ्रमः । स्वाभिलाप्यानभिलाप्यत्वम् अभिलाप्यानभिलाप्यबहुवत्त्वात् । प्रतिभासभेदेऽपि मतिश्रुतयोः अन्वयव्यतिरेकार्थविषयत्वं शब्दार्थग्रहणं प्रत्यभिज्ञानादेरात्मनो विशेषे प्रत्यक्षवत्तदभावः, अन्यथा सन्तानान्तरवत्तस्य इतरथा भावः । तदेकार्थविषयत्वं धर्मभेदेऽपि तदविशेषात् । स्वभावाभेदे जात्यन्तरं स्यात् । तत्र अर्थभेदाऽभेदौ सदसन्तौ व्यतिरेकेण निरामयत्वात् । वृत्तिविकल्पविरोधे सम्बन्धोपकाराद्यनवस्थादोषैः स एव सर्वथाऽखण्डिताकारस्य प्रत्यक्षवत् शब्दबुद्धावप्रतिभासने तदभेदाभावमवधारयन् वा तत्प्रत्यक्षप्रतिभासभेदनिदर्शनेन तद्विपयावि (धि) गमविकलविकल्पेन तत्प्रतिपत्तिविप्रतिषेधेन ध्रुवत्वापरिणामिनि

विविधधर्माध्यासविकल्पविषयताऽविरोधेन प्रमाणानुसारेण लोकोऽयं स्वयमेव विलोपयन्तं व्यवस्थापयेत् ।

§ ७९. स्वतः सतां सामान्यविशेषाणाम् असताञ्च द्रव्यगुणकर्मणां स्वभावभेदं प्रकल्पा (ल्प्य) प्रयोजनसामर्थ्यसम्बन्धिनियमव्यतिरेकेण परिणामिनः कथञ्चित् सदसदसन (दन) भिलापतद्योगविकल्पविधानतः प्रकृतिं क्रमयेत् । स्वभावान्तरग्रहत्यागतः 5 क्रमयौगपद्यविवक्षायामभिलापाऽनभिलापौ, तदुपाधिभेदेन जात्यन्तरस्य तथा प्रतिपादने सम्बन्धो ग्रहणनियमासम्भवः । सङ्ग्रहव्यवहारर्जुसूत्रार्थन [य] संश्रयात् सामान्येन तत्त्वप्रत्यवस्थितोऽभेदौकान्तप (भेदैकान्तप) रिग्रहः सर्वविशेषाणां सत्ताविशेषात्, सदेव प्रत्यक्षं सर्वतो व्यावृत्तस्य बुद्धावप्रतिभासने कालादिविशेषस्य विकल्पविषयत्वम् । नहि कालादयः प्रत्यक्षाः, तेषामविशेषे परापरभावासिद्धेः, उपाध्यन्तरकल्पनायाम् अनवस्था- 10 ऽप्रतीतिरित्यतिरेके नीलादयो न स्युः । एकत्रानेकधर्मानुपपत्तेः । समुदायस्य परस्परपरिग्रहाव्यवधानानुपपत्तिर्नार्थान्तरवृत्तेः, निर्व्यापारे चेतनादिविकल्पे संहताविकल्पावस्थायां सन्मात्रानिवृत्तेरिति कारकज्ञापकव्यवस्थाविलोपे क्षणिक वर्षि (?) वादः स्यात् । सदसत्प्राप्तित्यागेतरविकल्पविशेषेण तदतत्प्रवृत्तिसङ्करः । विभ्रमेतरविवेकस्य प्रमाणेतरभेदनिष्ठाता (ष्ठता) दृशः सकलतत्त्वप्रतिष्ठापने स्वपरभेदव्यवहारपरिग्रहः । स्वलक्षणम् 15 आत्मानं यदि परैर्मिश्रयति सर्वथा परत्वम् । अनेकधर्मसम्बन्धेऽप्येकत्वहानिरनानैकत्वं अतो [ऽ] न्वयो भावलक्षणं परिकल्पितपरार्थान्वयवत् । क्वचित् सामर्थ्यासिद्धिभेदेषु नैरन्तर्यादिव्यतिरेके [ऽ] निष्ठा कार्यस्य सूक्ष्मस्यादर्शने न कार्यदर्शनं स्थूलादिप्रतिपत्तिः ।

§ ८०. इमे नैरन्तर्येऽपि व्यावृत्तिस्वभावा भावाः शक्तिप्रतिभासादिभेदे, ते शुद्धाशुद्धद्रव्यपर्यायपरिग्रहविभागतोऽर्थनयाः । सर्वे सर्वेषामर्थरूपत्वे समयात् परतः स्मृतिः । 20 न वै शब्दमर्थं प्रतिपादयति । सत्यप्रतिपत्तेः स्वभावोपलम्भेऽपि समयस्मरणभावे भावात् तदनुस्मरणेऽपि लिङ्गवत् प्रतिबन्धासिद्धिः । स्मरणहेतुरर्थोऽपि लिप्यादिवत् वस्तुदर्शने नाम संस्काराभिव्यक्तेः समाने विज्ञातेतरस्वभावे निमित्तनैमित्तिकभावेऽप्यविचारे वा न कश्चिद्विशेषः । सङ्केतस्मरणकरणनियमाभावे अर्थोऽर्थम् अविनाभाविनं गमयेत् । सदसद्विषयविवेकिनो अर्थक्रियां प्रति स्मरणेऽप्यविशेषः । प्रयत्नतो 25 विशेषेषु समयावृत्तिरसमितविशेषाधिगमे अतिप्रसङ्ग इत्यवाच्यता शब्दपर्यायतः तत्त्वं सदृशापरदर्शने हि शब्दपर्यायोऽर्थः, स्वभावानन्वयात् श्रवणग्रहणयोग्यताव्यावृत्तिः, यदि नार्थपर्यायः तत्स्वभावनिवृत्तिः उपलम्भविषयस्य पूर्वापरकोट्योरसम्भवः, तत्तद्व्यान्तरकारकधर्मो यं यं नियमेन ताल्वादयः तादृशं सन्निधापयेयुः प्रदीपादिवत् । सर्वत्र सर्वस्य सर्वदा व्यक्तिः सन्निधानो ( ना ) विशेषेण प्रतिनियतवृत्तीनां प्रकाशनियमा- 30 भावः । सर्वत्रोपादानसम्भवेऽपि कारणानां प्रत्यर्थव्यापारभेदः । तदयमर्थः अनादिर्न

शब्दपर्यायः शावलेयादिवत् प्रकृतिभेदेऽपि देशकालादिभेदानुविधायिनां गवादिवि-
कल्पोपजननं समानवर्णभागानां परपरिहारस्थितिः। पदविभागवद् अनवस्थितानाम्
एकवस्तुभावसम्बन्धविवेकेऽपि वर्णपदवाक्यानुपूर्वीनियमवत् सतो न समुदायसमुदाय-
(यि) नियोगः। तथाहि–गोशब्दार्थयोरश्वादिव्यावृत्तेः गोबुद्धिजनकत्वं तुल्यम् वाक्या-
5 न्तरवत्, वाच्यवाचकव्यावृत्तावपि शावलेयादिभेदान्वये तदर्थाभिधानप्रत्ययानाम् अत-
द्व्यावृत्तितुल्यरूपं गवादिवत्। क्वचिदेकत्र ऐक्यव्यवहारासम्भवः परत्र कल्पनावृत्तेः।

नित्यः शब्दार्थसम्बन्धः तथा सङ्केतसम्भवः ॥७४॥

§ ८१. स्वतो योग्यताविधेरयोगः, प्रयत्नतोऽपि चन्द्रदेशकालगतिनियमवत्
सम्मोहविच्छेदः, प्रकरणादिवशात् नानार्थवाक्यानामेकार्थनियमः, सिद्धे तदर्थसम्बन्धे
10 समयव्यपदेशः, तदवचनोऽपि यथाभिप्रायगंत (गत) जल्पव्यवसायशृङ्गग्राहिकया तर्हि
सम्मोहनिवृत्तिः सम्बन्धाभिज्ञा [न] स्याभ्यासातिशयविवर्त्ते साधारणासाधरणविष [य]
योः सम्भवत्सङ्केतेतरयोः समये फलाभावः। स्वयमकृतसङ्केतार्थप्रतीतिः तत्कालभा-
विनोरन्वयः, तदयं स्व ( स्वा ) भाविको ज्ञानज्ञेयसम्बन्धवत् सामग्रीविशेषोपपत्तेः।

सम्बन्धान्तरतो नास्ति साध्यसाधनसंस्थितिः।

15 § ८२. सत्यपि शब्दार्थयोः कार्यकारणभावे अयोग्यतायां न तत्प्रतिपत्तिरर्था-
न्तरवत्, विप्रकृष्टार्थविवक्षाविशेषसम्बन्धासिद्धेः, अर्थज्ञानविवक्षाप्रयत्नवायूदीरणाकरण-
व्यापाराविशेषे व्योमादिविशेषसम्बन्धवत्। तदेते प्रत्यर्थनियताः प्रतिनियतवृत्तयः स्वयं
यत्र योग्याः तमर्थमवगमयेयुः, नर्ते सम्प्रदायात् ग्रहादिगतिनियमो रसवीर्यविपाका-
दिर्वा संवादयितुमशक्यो यतः तत्प्रतिबद्धजन्मनि विवक्षामेव प्रतिपादयेयुरिति।

20 शब्दाः शब्दान्तरं सङ्ख्याकालकारकलिङ्गतः ॥७५॥

§ ८३. पदवाक्यान्तरेषु वर्णपदसारूप्येऽपि भेदः तदर्थवत्। नहि सङ्ख्यासङ्ख्ये-
ययोरभेदो विप्रतिभासात्। क्वचिद् गुणगुणिनोरन्यतरदर्शनेऽपि तददृष्टेः द्विचन्द्रादिव-
देकत्वाऽनेकत्वयोः परस्परपरिहारेण गुणिनो विशेषणात्। कालस्य क्वचिदभेदकत्वे पूर्वा-
परस्वभावप्राप्तिपरिहारेणान्वयिनाऽपि निरुपाख्यत्वम्, कारकभेदभेदिनोऽभिधाना-
25 योगः। सकृदपि कार्यविशेषोपलक्षितार्थशक्तिभेदानां शक्तिमतोऽर्थान्तरत्वे अन्यतरवि-
लोपः। कारकभेदानुविधायित्वे कार्याणां वैश्वरूप्यमकारणं स्यात्, अन्यथा स्त्रीपुरुषा-
दिभेदिनोपयोगः (?)। क्वचिद् विशेषनिर्णयाभावे ब्राह्मणत्वादिवत् तदभिधा [ना] त्
तदभिधानयोग्यतालक्षणं सम्प्रदायाविच्छेदे समक्रियाविशेषेण शब्दप्राधान्यतो नया
वस्तुनो [ऽ] साधारणस्य विजातीयव्यवच्छेदनिबन्धनाः पर्याया न सङ्कीर्यन्ते। अभावा-
30 न्तराख्यातो भावान्तरासिद्धौ कृतकानित्यादिवत् व्यापारव्यतिरेकिणोऽभावाऽविशेषेण
तावता सर्वार्थपरिसमाप्तौ कारककल्पनाऽभिलापिनी निष्कलेषु भावेषु वेद्यवेदकनिर्भा-

सेन व्यापारयति द्रव्यपर्यायनयद्वयप्रविभागे प्रमाणप्रमेयभेदेषु परस्परं प्रतिक्षेपैकान्तपरिग्रहः। स्वहेतोरेव निर्वृत्तस्य कार्यतोऽनुपकारे कारणस्य पारतन्त्र्यानुपपत्तिः, अर्थ एव ज्ञानं गमयेत् सन्निधाने तथानिर्भासनात्। संवादनिरपेक्षस्य प्रामाण्यासिद्धेः।

**प्रत्यक्षं सर्वविज्ञानं स्वरूपस्य स्वतो गतेः।**

§ ८४. अर्थाधिगमस्य तादात्मा (त्म्य) मनात्मविदोऽन्यत्र प्रामाण्याविशेषात्। परस्यार्थविदः तुल्यः प्रसङ्गोऽनवस्था च। स्वविषयनिर्भासाविवेकेन क्वचिदस्पष्टं प्रमाणसामग्रीविशेषतः प्रमाणान्तरव्यवस्था मा भूत्। विषयव्यवधानेऽपि सन्निकर्षाऽविशेषः सुखादिवत्। तदतद्रूपज्ञानं तद्विषयतानुपपत्तेः सकलनिष्क [ल] स्वविकल्पितेतरस्वभावनियमः। साक्षात् सा (स्वा) कारमर्पयतः तत्प्रतिपक्षेऽतिप्रसङ्गः।

**परोक्षपरतन्त्राणां स्पष्टाकारविवेकतः ॥७६॥**

§ ८५ यथास्वं विभ्रमविवेकविकलं तदपरिस्फुटं प्रतिसंवेदनेऽपि भेदानामवग्रहादेः परतो निश्चयं क्वचिदवगृहीते संशयादेरभावः समीहितेऽप्यनधिगमे निर्णयस्य विगते वाऽवधारणाभावे न स्मृतेः इत्यकिञ्चित्कररेक (का) विपर्यासपराक्रमः। परिणामपाटवातिशये संवादशङ्केः सदा विभ्रमेण तथाभावस्यापि कुतश्चिदकस्माद्ग्राहिणामाकाङ्क्षाऽनिवृत्तिः।

**प्रक्रमार्थविशेषेण श्रुतौ भेद [:] परिस्फुटः।**

§ ८६. क्वचिद् यथाश्रुतमवगृह्णाति, पुनः समीहमानो निर्णीतिं स्मृतिबीजमाधत्ते वा स्वभावोपलम्भोपयोगसंस्कारविशेषः, संहृतविषयसाद्या हि समुपलक्षितविशेषसङ्ख्यानेऽपि शब्दः प्रत्ययः संशयादिवत्। अभिलापानपेक्षो मतिविकल्पः सन्निहितविषयावग्रहसमीहावायधारणासमानानुसरणसंकलनपरामर्शाभावे तन्नामविकल्पविकलतया वर्णपदवाक्यानुपूर्वीवत् वर्णावयवानुसरणविकल्पे तदाख्याकल्पनायामनिष्टानुषङ्गः। समक्षसजातीयसम्बन्धानुसरणचिन्ताप्रकर्षेण तद्विशेषाभिनिबोधः तदभिधानमपि सन्निवेशयेत्। साक्षादनुभवात्मनः स्मृत्यादेरभ्यासविशेषे पाटवोपपत्तेः। दूरदूरतरादिभेदेन स्वतोऽर्थं प्रति संयोगसमवायतदनुदयमनुभवस्वभावनिर्णये परापेक्षः कथमर्थं निष्ठापयेत्। सकलनियमग्रहेऽविकलसामग्रीजन्मनां सर्वथा विषयत्वं प्रतिबिम्बोदयवत् तथा परिणतेरन्यथा प्रतिभाससम्भवे बुद्धेरपरत्र न कश्चिद्विरोधः।

**आत्मज्ञानादिभेदानामानन्त्यं नयचक्रतः ॥७७॥**

§ ८७. द्रव्यपर्यायभेदे तद्भाव उत्पादविगमध्रौव्यविरहे वर्णव्यतिरेकवद्। उभयकल्पनायामुभयदोषः, अनुभयवद् अन्योन्यविधिप्रतिषेधलक्षणानुगमे प्रमाणप्रमेयव्यवहारनिवृत्तिः अनवस्था। सर्वथाऽवक्तव्यकल्पनायां सर्वदोषप्रसङ्गः सर्वथा वक्त-

व्यवत् । जात्यन्तरकल्पनायां च तद्विधिप्रतिषेधात्मकत्वम्, तदतदुभयानुभयविकल्पेन प्रत्येकमपि चक्रकम्, सर्वनयाभासप्रतिपादख्यातिसंख्येयत्वेऽपि वर्णानुपूर्वीभेदानां तद्विशेषवस्तुविकल्पानन्त्यम् ।

अन्योन्यनिरपेक्षाणामप्रमाणप्रमेयता ।

5 §८८. सकलकलाकलापमया सत्ता परस्परविधिप्रतिषेधपरमार्था सूक्ष्मस्थूलसंस्थानादिभेदमूर्त्तिवत् प्रमाणप्रमेयैकान्तप्रभेदपरिहारेण परस्परपरिग्रहपरिणामसिद्धिरिति ।

द्रव्यपर्याययोर्भेदमेकान्तेन प्रपञ्चयन् ॥७८॥
नैगमः सप्तधा शास्ति हि भावानां व्यवस्थितिम् ।

सर्वमेकं सतो [ऽ] भेदादिभिर्मिथ्यार्थसङ्ग्रहः ॥७९॥
10 स प्रत्यस्तमिताशेषद्रव्यपर्यायभेदतः ।

आत्मादिभेदमाश्रित्य व्यवहारं प्रतिक्षिपेत् ॥८०॥
पर्यायाद् व्यतिरेकाणामन्वयप्रतिपत्तितः ।

अक्रमं स च भेदानां ऋजुसूत्रो विधारयन् ॥८१॥
कार्यकारणसन्तानसमुदायविकल्पतः ।

15 शब्दो लिङ्गादिभेदेन वस्तुभेदं समुद्दिशन् ॥८२॥
अभिरूढस्तु पर्यायैरित्थम्भूतः क्रिता ( या ) श्रयः ।

द्रव्यपर्यायसामान्यविशेषप्रविकल्पतः ॥८३॥
नयद्वयविभागेन नैगमादिरनेकधा ।

मतिश्रुतादौ भेदानां स्वपरप्रतिवेदिनाम् ॥८४॥
20 कल्पना चार्थसम्बन्धेनान्वेति नयलक्षणम् ।

प्रमाणनयनिक्षेपैरात्मादिप्रविभागतः ॥८५॥
सम्प्रेक्षे नितरा [रां] सिद्धं तत्त्वज्ञानमनन्तरम् ।

॥ इति प्रमाणसङ्ग्रहे अष्टमः प्रस्तावः ॥



## ९. नवमः प्रस्तावः ।

**ज्ञानं प्रमाणमात्मादेरुपायो न्यास इष्यते ॥८६॥**
**नयो ज्ञातुरभिप्रायो युक्तितोऽर्थपरिग्रहः ।**

§ ८६. मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्, तदेव प्रमाणं न शब्दादिः अन्यत्रोपचारात् । प्रमाणमेव हि ज्ञान (नं) मत्यज्ञानादेरनधिगतेः । चैतन्येऽपि तल्ल- 5 क्षणविशेषे बालादिवत् ज्ञानवान् न विसंवादयेत् । ज्ञानं प्रमाणं भवत्येव, व्यपेक्षातः तद्विधिकरणादिपरापेक्ष (क्षं) परोक्षम् । आत्मनियतं प्रत्यक्षम् । परिणामविशेषाविरोधे दोषावरणक्षयोपशमोदयवृत्ते [:] त्रसं (स) स्थावरादिगुणप्रकर्षाप्रकर्षेऽपि स्य (?) स्यादिव- शादात्मस्वभावाऽव्यतिरेकेण हिताहितप्राप्तिपरिहारोपयोगसामर्थ्यविरहेऽपि गर्भाण्ड- मूर्च्छितादिव [त्] स्वतो जीवतीति वृत्तेऽपि नार्द्रकाप्यादौ प्राणादिपरिणामविशेषेऽपि 10 चैतन्यविलक्षणतया मूर्त्तिमतः कायादिप्रवृत्तश्रोतसः कर्मणो वा सकलश्रुतभावनासं- वरणविगलितनिखिलक्लेशविजृम्भितकेवलज्ञानाधिगमफलस्य प्रागपि तत्त्वज्ञानात् प्रत्यक्षादिः उपायः । स्वयमनिक्षिप्तविषयः कथञ्चिद् वितर्कयन्तो निदर्शनाद्य- भावेऽपि क्षयोपशमविशेषापेक्षया मार्गप्रतिपत्तिनिक्षिप्तेतरवस्तुस्वभावेऽपि तद्विषयवि- ज्ञानवत् । तदुपायाऽविशेषेऽपि अनुपयोगादिवत् प्रत्यासत्तिविप्रकर्षतारतम्यम् इष्यते । 15 साक्षादुपायानधिगमेऽपि तत्प्रतिपत्त्युपायतया तत्त्वं स्वविषये सर्वस्य गुणदोषविचारेण अतिप्रसङ्गनिवृत्तिः । नयः कपिलादेरभ्युपगमः, प्रमेयधर्मतया विरुद्धाव्यभिचारिणं स्वभावप्रतिबन्धपरिच्छेदेन तदतिरेकव्यवच्छेदः तत्त्वाधिगमः प्रतिपत्र (त्र) भिप्रायः तर्हि वस्तुमात्रानिरोधे किं वै सन्दिग्धादिपरिग्रहः साकल्येनेष्यते ? समानो हि तेषामर्था- श्रयः तत्प्रतिषेधेन युक्तितोऽर्थपरिग्रहः सर्वथैकान्तव्यतिक्रमः श्र ( क्र ) मभावनया 20 चिन्तामयबुद्धिः आत्मेतरत्वमनुसरति ।

**प्रामाण्यं यदि शास्त्रगम्यमथ न प्रागर्थसंवादनात्,**
**सङ्ख्यालक्षणगोचरार्थकथनं किं चेतसां कारणम् ।**
**आ ज्ञातं सकला [गमा] र्थविषया (य) ज्ञानाविरोधं बुधाः,**
**प्रेक्षन्ते तदुदीरितार्थगहने सम्मोहविच्छित्तये ॥८७½॥छ॥** 25

॥ इति प्रमाणसङ्ग्रहं नाम प्रकरणं समाप्तम् ॥छ॥



श्रीमद्भट्टाकलङ्कस्य पातु पुण्या सरस्वती ।
अनेकान्तमरुन्मार्गे चन्द्रलेखायितं यया ॥

-शुभचन्द्रः

# लघीयस्त्रयस्य

## टि प्प णा नि



**अकलङ्कं जिनं नत्वा तात्पर्यैतिह्यतोलनैः ।**
**न्यायोऽयमाकलङ्को वै विशदीक्रियते मया ॥**

**पृ० १. पं० ६. 'सन्तानेषु'**—सन्तानशब्दोऽयं बौद्धैः अपरामृष्टभेदेषु कार्यकारणभूतेषु पूर्वोत्तरक्षणेषु सम्प्रयुज्यते । स च सन्तानो न पारमार्थिकः कश्चित् मालाङ्गभूतमौक्तिकेषु सूत्रवत्, अपि तु "सन्तानः समुदायश्च पङ्क्तिसेनादिवन्मृषा । सन्तानो नाम न 5 कश्चिदेकः परमार्थसन् सम्भवति । किं तर्हि ? कार्यकारणभावप्रवृत्तक्षणपरम्पराप्रवाहरूप एवायं ततो व्यतिरिक्तस्यानुपलम्भात् । तस्मादेतेषामेव क्षणानामेकपदेन प्रतिपादनाय सङ्केतः कृतो बुद्धैः व्यवहारार्थं 'सन्तानः' इति ।" [बोधिचर्यावि० प० पृ० ३३४ । शिक्षासमु० पृ० ३५९ । तत्त्वसं० पृ० ५२३] इत्यादिवचनात् व्यवहारार्थं क्रियमाणः सङ्केतरूप एवायम् । अयञ्च तत्त्वान्यत्वादिविकल्पैरवाच्य एव अवस्तुत्वात् "तत्त्वान्यत्वप्रकाराभ्यामवाच्यमथ वर्ण्यते" इति 10 तत्त्वसङ्ग्रहकारवचनात् [पृ० ५१०] ।

**पृ० १. पं० ८. 'सत्त्वार्थं व्यवतिष्ठते करुणया'**—सम्प्राप्तबोधेरपि बुद्धस्य न सद्यः निर्वाणमपि तु बुद्धत्वसंवर्त्तककर्मवशात्ते सत्त्वार्थं करुणया तिष्ठन्ति । "तिष्ठन्त्येव पराधीना येषां तु महती कृपा ।" [प्रमाणवा० २।१९८] "अकल्पकल्पासङ्ख्येयभावनापरिवर्द्धिताः । तिष्ठन्त्येव पराधीना येषां तु महती कृपा ॥" [अभिसमयालङ्कारालो० पृ० १३४] इत्यादि वचनात् । 15

यथाहि—दर्शनविशुद्ध्यादिभिः भावनाविशेषैः जैनतीर्थकराः पुराकृतसंसारिजीवोद्धरणाध्यवसायसमुपार्जिततीर्थंकरनामकर्मोदयं यावत् तिष्ठन्ति, देशनया च सन्तर्पयन्ति भव्यजीवान् तथैव—"अनेन पुण्येन तु सर्वदर्शितामवाप्य निर्जित्य च दोषविद्विषः । जरारुजामृत्युमहोर्मिसङ्कुलात् समुद्धरेयं भवसागराज्जगत् ॥" [अभिसमयालङ्कारालो० पृ० १३२] "अनेन चाहं कुशलेन कर्मणा भवेय बुद्धो न चिरेण लोके । देशेय धर्मं जगतो हिताय मोचेय सत्त्वान् 20 बहुदुःखपीडितान् ॥" [अद्वयवज्रसङ्ग्रह पृ० ९] "उत्पादयामि वरबोधिचित्तं निमन्त्रयामि बहुसर्वसत्त्वान् । इष्टां चरिष्ये वरबोधिचारिकां बुद्धो भवेयं जगते हिताय ॥" [अद्वयवज्रसङ्ग्रह पृ० ५] "अतीर्णान् तारयिष्यामि अमुक्तान् मोचयाम्यहम् । अनाथान्नाथयिष्यामि स्थापयिष्यामि निर्वृतौ ॥" [बुद्धवेद पृ० ८२] इत्यादिभिः जगदुद्धरणभावनाविशेषैः बुद्धा अपि तादृशं संस्कारविशेषं समुपार्जयन्ति, येन सम्यक्सम्बोधिपरिणता अपि अनन्तकल्पं करु- 25 णया तिष्ठन्ति देशनया च सन्तारयन्ति भवनिदाघपरिपीडितान् प्राणिनः ।

**पृ० १. पं० १२. 'प्रत्यक्षं विशदज्ञानं'**—समग्रेयं कारिका 'तदुक्तमकलङ्कदेवैः' इति कृत्वा प्रमाणपरीक्षायाम् (पृ० ६९) अष्टसहस्र्यां‌च (पृ० १३४) समुद्धृता । "प्रत्यक्षं विशदं

ज्ञानं प्रमाणं ज्ञानमित्यपि। अकलङ्कवचो..." [ पत्रपरी० पृ० ५ ] "प्रत्यक्षं विशदं ज्ञानं मुख्यसंव्यवहारतः" [ न्यायवि० वि० पृ० ४८A. ]

प्रत्यक्षस्य विशदज्ञानात्मकत्वेन लक्षणस्यानुसरणं तु निम्नग्रन्थेषु दृश्यते-प्रमाणसं० पृ० ९७। सिद्धिवि० टी० पृ० ७१ A. ९६ B.। तत्त्वार्थश्लो० पृ० १८१। प्रमाणप० पृ० ६७।
5 परीक्षामु० २।१। जैनतर्कवा० पृ० ९३। प्रमाणनि० पृ० १४। प्रमाणनय० २।२। प्रमाणमी० १।१३। जैनतर्कभा० पृ० २।

तुलना-"साक्षात्कारित्वमेव प्रत्यक्षार्थः।" [ प्रमाणवार्त्तिकालं० लि० पृ० ४१०, ४३९। मु० पृ० १३० ] "मुख्यसंव्यवहारेण संवादि विशदं मतम्। ज्ञानमध्यक्षमन्यद्धि परोक्षमिति सङ्ग्रहः॥" [ सन्मति० टी० पृ० ५९५ ] षड्द० बृह० पृ० ८५ A.

10 **पृ० १. पं० १२. 'मुख्यसंव्यवहारतः'**-आगमिकज्ञानचर्चायाम् इन्द्रियानिन्द्रियजस्य प्रत्यक्षस्य मतिज्ञानान्तर्गतत्वात् परोक्षत्वं सुस्पष्टम्। आर्यरक्षिताचार्यैः (अनु० १४४) नन्दीसूत्रकारैश्च (नन्दिसू० ३) इन्द्रियप्रत्यक्ष-नोइन्द्रियप्रत्यक्षरूपेणापि इन्द्रियानिन्द्रियजमतिज्ञानस्य निर्देशः कृतः। अतश्च आगमिकपरम्परायामेव इन्द्रियानिन्द्रियजमतिज्ञानस्य प्रत्यक्ष-परोक्षेतिविरुद्धरूपतया निर्देशात् सम्प्राप्तो विरोधः। स च जिनभद्रगणिक्षमाश्रमणैः विशेषा-
15 वश्यकभाष्ये (गा० ९५) "इंदियमणोभवं जं तं संववहारपच्चक्खं।" इति इन्द्रियानिन्द्रियजमतिज्ञानं संव्यवहारप्रत्यक्षतया स्वीकृत्य परिहृतः।

नागार्जुनप्रभृतिबौद्धाचार्यैः माध्यमिकमतानुसारिभिः "द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना। लोकसंवृतिसत्यं च सत्यं च परमार्थतः॥" [ माध्यमिकका० पृ० ४०२ ] इत्यादिवचोभिः ज्ञानज्ञेयादिभेदोपदेशेन शून्यतायां समायातस्य विरोधस्य परिहारः तदुपदेशानां
20 लोकसंवृतिसत्यत्वमुररीकृत्य विधीयते। एवमेव धर्मकीर्त्तिना "प्रामाण्यं व्यवहारेण" [ प्रमाणवा० २।५ ] प्रज्ञाकरगुप्तेन च "तत्र पारमार्थिकप्रमाणलक्षणमेतत् पूर्वं तु सांव्यवहारिकस्य" [ प्रमाणवार्तिकालं० लि० पृ० ७६ ] इति व्यवहार-सांव्यवहारिकादिभिरेव शब्दैः संवेदनाद्वैते भेदविरोधः समाधीयते। संव्यवहारशब्दोऽयं माध्यमिककारिकायामपि ( पृ० ४८९ ) प्रयुक्तः। वादन्यायटीकायां (पृ० १४) तत्त्वसंग्रहपंजिकायाञ्च ( पृ० ७८४ ) सुस्पष्टमुद्धृतम् यत्
25 "सांव्यवहारिकस्येदं प्रमाणस्य लक्षणं यदुत प्रमाणमविसंवादिज्ञानमिति।" इति संव्यवहारशब्दस्य जैनबौद्धदर्शनसाधारणत्वं संसूच्यते। जैनागमे व्यवहारनयस्यापि एतदर्थकत्वमेव बोध्यम्।

मुख्यसंव्यवहारतया प्रत्यक्षस्य द्विधा विभागः निम्नग्रन्थेषु द्रष्टव्यः-प्रमाणप० पृ० ६८। परीक्षामु० २।५। प्रमाणनय० २।४। प्रमाणमी० १।१।१५, २०। प्रमाणनि० पृ० २३।
30 न्यायदी० पृ० ९। जैनतर्कभा० पृ० २।

**पृ० १. पं० १२. 'परोक्षं शेष'**-तुलना- प्रमाणप० पृ० ६९। परीक्षामु० ३।१। सन्मति० टी० पृ० ५९५। प्रमाणनय० ३।१। प्रमाणमी० १।२।१। जैनतर्कभा० पृ० ८।

**पृ० १. पं० १३. 'प्रमाणे इति'**-"तत्प्रमाणे" [ तत्त्वार्थसू० १।१० ] इति सूत्रार्थं समन्वेत्रा ग्रन्थकृता लघीयस्त्रयवत् न्यायविनिश्चये (का० ४६९) प्रमाणसङ्ग्रहे च (का० २)
35 इदमेवोक्तमिति।

**पृ० १. पं० १४. 'सन्निकर्षादे'**-तुलना-"ज्ञानं प्रमाणं नाज्ञानमिन्द्रियार्थसन्नि-

कर्षादि" [ प्रमाणवा० मनोरथ० पृ० ३ ] "न वै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नं तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेः ।" [ प्रमाणनय० १।४ ]

**पृ० २. पं० ३. 'तन्नाज्ञानस्य'**–तुलना–"तन्नाज्ञानं प्रमाणमन्यत्रोपचारात् ।" [ प्रमेयक० पृ० ७ B. ]

**पृ० २. पं० ४. 'प्रत्यक्षत्वम्'**–तुलना–"तस्मात् इदं स्पष्टं व्यवसायात्मकं स्वार्थसन्निधानान्वयव्यतिरेकानुविधायि प्रतिसंख्यानिरोध्यविसंवादकं प्रत्यक्षं प्रमाणं युक्तम् ।" [ सिद्धिवि० पृ० ९६ A. ] 5

**पृ० २. पं० ६. 'अनुमानाद्यतिरेकेण'**–तुलना–'अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम्" [ प्रमाणनय० २।३ ] जैनतर्कभा० पृ० २। "प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनम् वैशद्यम् ।" [ परीक्षामु० २।४ ] न्यायवि० वि० पृ० ४२ B. "वैशद्यमिदन्त्वेनावभासनम्" [ जैनतर्कवा० वृ० पृ० ९५ ] प्रमाणमी० १।१।१४। "एतदेव स्पष्टत्वं यत् सर्वाकारप्रतिभासः" [ प्रमाणवार्तिकालं लि० पृ० ३०६ ] 10

समुद्धृतेयम्–स्याद्वादरत्ना० पृ० ३१६। शास्त्रवा० टी० पृ० ३१०B.

**पृ० २. पं० ८. 'तत्र सांव्यवहारिकम्'**–तुलना–परीक्षामु० २।६। प्रमाणनय० २।५। जैनतर्कभा० पृ० २। 15

**पृ० २. पं० ९. 'तदस्ति सुनिश्चिता'**–तुलना–"अस्ति सर्वज्ञः सुनिश्चितासंभवद्बाधकप्रमाणत्वात् सुखादिवत्, शास्त्रप्रामाण्यात् ।" [ सिद्धिवि० पृ० ४२१ B. ] अष्टश०, अष्टसह० पृ० ४४। आप्तप० पृ० ५६। तत्त्वार्थश्लो० पृ० १८५। प्रमाणनि० पृ० २९। षड्द० बृह० पृ० ५३। प्रमाणमी० पृ० १४।

**पृ० २. पं० ९ 'यावज्ज्ञेयव्यापि'**–तुलना–"ज्ञानं नो चेन्निरुपममं विशदं सर्वगतं स्वतः। लोकान् वेद कुतः···सर्वज्ञविकलानिति ।।" [ सिद्धिवि० पृ० ४२३ ] "सर्वज्ञाभावसंवित्तेरन्यथानुपपत्तितः। पुरुषातिशयः सिद्धः ।" [ सिद्धिवि० पृ० ४२८ ] प्रमाणमी० पृ० १४ पं० १६–१७। 20

**पृ० २. पं० ११. 'सत्त्वपुरुषत्ववक्तृत्वादेः'**–कुमारिलेन सर्वज्ञनिराकरणाय उक्तम् यत्–"प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च। सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ।।" ( मी० श्लो० पृ० ८५ ) तत्त्वसंग्रहपंजिकायाम् ( पृ० ८८१ ) "अयं च वक्तृत्वाख्यो हेतुः 'यस्य ज्ञेयप्रमेयत्ववस्तुसत्त्वादिलक्षणः' इत्यत्र आदिशब्देन आक्षिप्त एवेति··'तदत्रादिपदाक्षिप्ते वक्तृत्वे योऽभिमन्यते।' इत्युक्तत्वात् अनुमीयते यत् मीमांसाश्लोकव्याख्यातारः 'प्रमेयत्वादि' इत्यत्र आदिपदेन वक्तृत्वादिकान् हेतून् समुच्चिन्वन्ति। तानेव वक्तृत्वादीन् हेतून् ग्रन्थकारः प्रतिवन्द्या सर्वज्ञाभावज्ञानस्य अशक्यत्वसाधने प्रयुनक्ति। 25 30

तुलना–नयचक्रवृ० पृ० १२३। "··उक्तयादेर्दोषसंक्षयो नेत्येके व्यतिरेकोऽस्य सन्दिग्धो व्यभिचार्यतः ।।" [ प्रमाणवा० १।१४४ ] सिद्धिवि० पृ० ४२९।

**पृ० २. पं० १३. 'अत्रानुपलम्भ'**–तुलना–प्रमाणमी० पृ० १४।

**पृ० २. पं० १४. 'साधकबाधकप्रमाणा'**–'साधकबाधकप्रमाणाभावात् सन्देहो जायते' इति विचारस्य तुलना–"साधकबाधकप्रमाणाभावमात्रं चात्र सन्देहेन लक्ष्यते ।" 35

[प्रमाणवार्तिकालं० लि० पृ० १२८] "सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिः विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्थयैकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम्।" [न्यायवा० ता० टी० पृ० २४७] "न हि साधकबाधकप्रमाणाभावमवधूय समानधर्मादिदर्शनादेवासौ।" [न्यायकुसु० स्त० २, पृ०८] "यत्पुनरुक्तं धर्मकीर्तिना-साधकबाधकप्रमाणाभावात्तर्हि सन्देहोऽस्तु इति तत्राह-" [सिद्धिवि० टी० पृ० ४३१A.] "साधकबाधकप्रमाणयोर्निर्णयात् भावाभावयोरविप्रतिपत्तिरनिर्णयादारेका स्यात्।" [अष्टश० अष्टसह० पृ० ४९] प्रमाणनय० १।१२। प्रमाणमी० पृ० ५ पं० ९। "साधकबाधकप्रमाणाभावात् सर्वज्ञे संशयोऽस्तु इत्ययुक्तम्...।" [अष्टसह० पृ० ४९] प्रमेयरत्नमा० ३।२९।

**पृ० २. पं० १६. 'अक्षार्थयोगे'**-तुलना-"अक्षार्थयोगजाद्वस्तुमात्रग्रहणलक्षणात्। जातं यद्वस्तुभेदस्य ग्रहणं तदवग्रहः॥" [तत्त्वार्थश्लो० पृ० २१९] "अक्षार्थयोगे दर्शनानन्तरमर्थग्रहणमवग्रहः।" [प्रमाणमी० १।१।२७] "अक्षार्थयोगे इत्यादि व्याचक्षाणैः भाष्यकारैरेव" [न्यायवि० वि० पृ० ३२ A.]

अवग्रहादीनां चतुर्णां लक्षणानि निर्युक्ति-भाष्ययोः इत्थं द्रष्टव्यानि-" अत्थाणं उग्गहणं अवग्गहं तह वियालणं ईहं। ववसायं च अवायं धरणं पुण धारणं वेंति॥" [आव० नि० गा० १७९] "सामण्णत्थावग्गहणमुग्गहो भेयमग्गणमहेहा। तस्सावगमोऽवाओ अविच्चुई धारणा तस्स॥" [विशेषा० गा० १८०]

**पृ० २. पं० २१. 'विषयविषयि'**-तुलना-"तत्र अव्यक्तं यथास्वमिन्द्रियैः विषयाणामालोचनावधारणमवग्रहः।" [तत्त्वार्थाधि० भा० १।१५] "विषयविषयिसन्निपातसमयानन्तरमाद्यग्रहणमवग्रहः। विषयविषयिसन्निपाते सति दर्शनं भवति, तदनन्तरमर्थस्य ग्रहणमवग्रहः।" [सर्वार्थसि० १।१५] राजवा० १।१५। धवलाटी० सत्प्ररू०। प्रमाणप० पृ० ६८। सन्मति० टी० पृ० ५५२। प्रमाणनय० २।७। न्यायदी० पृ० १०।

इदमेव अवग्रहलक्षणं समुद्धृतं न्यायविनिश्चयविवरणे (पृ० ३२ A.)

**पृ० २. पं० २१. 'विषयस्तावत्'**-तुलना-"विषयस्य तावत् द्रव्यपर्यायात्मनोऽर्थस्य विषयिणश्च निर्वृत्त्युपकरणलक्षणस्य द्रव्येन्द्रियस्य लब्ध्युपयोगस्वभावस्य च भावेन्द्रियस्य विशिष्टपुद्गलपरिणतिरूपस्य अर्थग्रहणयोग्यतास्वभावस्य च यथाक्रमं सन्निपातः योग्यदेशावस्थानं तदनन्तरोद्भूतं सत्तामात्रदर्शनस्वभावं दर्शनमुत्तरपरिणामं स्वविषयव्यवस्थापनविकल्परूपं प्रतिपद्यमानमवग्रहः।" [सन्मति० टी० पृ० ५५३] षड्द० बृह० पृ० ८४ A. प्रमाणमी० पृ० २१।

**पृ० २. पं० २२. 'द्रव्येन्द्रियं'**-तुलना-" निर्वृत्त्युपकरणे द्रव्येन्द्रियम्।" [तत्त्वार्थसू० २।१७] प्रमाणमी० १।१।२२।

**पृ० २. पं० २२. 'लब्ध्युपयोगौ'**-तुलना-"लब्ध्युपयोगौ भावेन्द्रियम्।" [तत्त्वार्थसू० २।१८।] प्रमाणमी० १।१।२३।

**पृ० २. पं० २३. 'अर्थग्रहणशक्ति'**-तुलना-"लम्भनं लब्धिः। का पुनरसौ? ज्ञानावरणक्षयोपशमविशेषः।" [सर्वार्थसि० २।१८] राजवा० २।१८। तत्त्वार्थसा० पृ० १११। प्रमाणमी० पृ० १८। "स्वार्थसंविद्योग्यतैव च लब्धिः।" [तत्त्वार्थश्लो० २।१८] "आवरणक्षयोपशमप्राप्तिरूपा अर्थग्रहणशक्तिर्लब्धिः।" [स्या० रत्ना० पृ० ३४४] जैनतर्कभा० पृ० १।

**पृ० २. पं० २३. 'उपयोगः पुनः'**–तुलना–"उपयोगः प्रणिधानम् ।" [ तत्त्वार्थाधि० भा० १।१९ ] "तन्निमित्त आत्मनः परिणाम उपयोगः ।" [सर्वार्थसि० २।१८] राजवा० २।१८ । तत्त्वार्थश्लो० २।१८ । तत्त्वार्थसा० पृ० १११ । प्रमाणमी० पृ० १८ । जैनतर्कभा० पृ० १ । "उपयोगस्तु रूपादिग्रहणव्यापारः ।" [ स्या० रत्ना० पृ० ३४४ ]

**पृ० २. पं० २५. 'पुनरवगृहीत'**–"अवगृहीतेऽर्थे विषयार्थैकदेशाच्छेषानुगमनं निश्चयविशेषजिज्ञासा चेष्टा ईहा ।" [ तत्त्वार्थाधि० भा० १।१५ ] "अवग्रहगृहीतेऽर्थे तद्विशेषाकाङ्क्षणमीहा ।" [ सर्वार्थसि० १।१५] राजवा० १।१५ । धवला टी० सत्प्ररू० । तत्त्वार्थश्लो० पृ० २२० । प्रमाणप० पृ० ६८ । सन्मति० टी० पृ० ५५३ । प्रमाणनय० २।८ । षड्द० बृह० पृ० ८४A. प्रमाणमी० १।१।२७ । न्यायदी० पृ० ११ । जैनतर्कभा० पृ० ५ ।

**पृ० २. पं० २६. 'तथेहितविशेष'**–"अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाध्यवसायापनोदोपायः ।" [ तत्त्वार्थाधि० भा० १।१५ ] "विशेषनिर्ज्ञानाद्याथात्म्यावगमनमवायः ।" [ सर्वार्थसि० १।१५ ] राजवा० १।१५ । धवलाटी० सत्प्ररू० । तत्त्वार्थश्लो० पृ० २२० । प्रमाणप० पृ० ६८ । सन्मति०टी० पृ० ५५३ । प्रमाणनय० २।९ । षड्द० बृह० पृ० ८४A. प्रमाणमी० १।१।२८। न्यायदी० पृ० ११ । जैनतर्कभा० पृ० ५ ।

**पृ० २. पं० २६. 'कथञ्चिदभेदेऽपि'**–तुलना–सन्मति० टी० पृ० ५५३ । प्रमाणमी० पृ० २२ । षड्द० बृह० पृ०८४ A. "कथञ्चिदभेदेपि परिणामविशेषादेषां व्यपदेशभेदः ।" [ प्रमाणनय० २।१२ ]

**पृ० २. पं० २८. 'धारणा'**–"धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च धारणा प्रतिपत्तिः अवधारणमवस्थानं निश्चयोऽवगमः अवबोधः इत्यनर्थान्तरम् ।" [ तत्त्वार्थाधि० भा० १।१५ ] "अर्थैतस्य कालान्तरेऽविस्मरणकारणं धारणा" [ सर्वार्थसि० १।१५ ] राजवा० १।१५ । धवलाटी० सत्प्ररू० । प्रमाणप० पृ० ६८ । सन्मति टी० पृ० ५५३ । प्रमाणनय० २।१० । प्रमाणमी० १।१।२९ । षड्द० बृह० पृ० ८४ A. न्यायदी० पृ० ११ । जैनतर्कभा० पृ० ५ । "महोदये च कालान्तराविस्मरणकारणं हि धारणाभिधानं ज्ञानम्''' अनन्तवीर्योऽपि तथा निर्णीतस्य कालान्तरे तथैव स्मरणहेतुः संस्कारो धारणा इति ।" [ स्या० रत्ना० पृ० ३४९ ]

**पृ० ३. पं० १. 'ईहाधारणयोरपि'**–तुलना–" अज्ञानात्मकतायां तु संस्कारस्येह तस्य वा । ज्ञानोपादानता न स्याद्रूपादेरिव सास्ति च ।।' [ तत्त्वार्थश्लो० पृ० २२१ ] विशेषा० गा० १८२ । प्रमाणमी० पृ० २१ पं० २५, पृ० २२ पं० ५, पृ० ३० पं० २३ ।

**पृ० ३. पं० ५. 'बह्वाद्यवग्रहा'**–तुलना–"बहुबहुविधक्षिप्रानिसृतानुक्तध्रुवाणां सेतराणाम्" [तत्त्वार्थसू० १।१६] "अवग्रहादयश्चत्वारो मतिज्ञानविभागा एषां बह्वादीनामर्थानां सेतराणां भवन्त्येकशः ।" [ तत्त्वार्थाधि० भा० १।१६ ] धवलाटी० सत्प्ररू० ।

**पृ० ३. पं० ६. 'पूर्वपूर्वप्रमाणत्वं'**–तुलना–"पूर्वपूर्वं प्रमाणमुत्तरोत्तरं फलमिति क्रमः ।" [प्रमाणवार्तिकालं० लि० पृ० ४] "तथा पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलमिति" [ न्यायबि० टी० टि० पृ० ४० ] "साम्प्रतं पूर्वंपूर्वं प्रमाणं स्यात् फलं स्यादुत्तरोत्तरम् इत्यभिसमीक्ष्य'''" [ सिद्धिवि० टी० पृ० १८४A. ] "केचिदाहुः– पूर्वं ज्ञानं प्रमाणमुत्तरं ज्ञानं प्रमाणफलमिति ।" [ तर्कभा० मो० पृ० ११ ] सन्मति० टी० पृ० ५५३ पं० ६। षड्द० बृह० पृ०

८४ A. "अवग्रहादीनां क्रमोपजनधर्माणां पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलम् ।" [ प्रमाणमी० १।१।३९ ]

पृ० ३. पं० ७. **'परमार्थैकसंवित्ते'**–अत्रायं पूर्वपक्षः–संवेदनाद्वैतवादिनः खलु निरंशं संविदद्वयं मन्यमानाः कल्पिते संवेद्याकारे–सारूप्ये प्रमाणव्यवस्थां संवेदकाकारे–
5 अधिगतिस्वरूपे फलव्यवस्थाञ्चोररीकुर्वन्ति। तथा चोक्तम्–"स्वसंवित्तिः फलं चात्र तद्रूपादर्थनिश्चयः। विषयाकार एवास्य प्रमाणं तेन मीयते ।।" [ प्रमाणसमु० १।१० ] "अर्थसारूप्यमस्य प्रमाणम्। तद्वशादर्थप्रतीतिसिद्धेरिति ।" [ न्यायबि० १।१९, २० ] "विषयाधिगतिश्चात्र प्रमाणफलमिष्यते। स्ववित्तिर्वा प्रमाणं सारूप्यं योग्यतापि वा ।।" [ तत्त्वसं० पृ०३५८]

पृ० ३. पं० ७. **'क्षणभङ्गादेरपि'**–तत्रोत्तरम्–यतः निरंशसंवेदनं वस्तु तत एव
10 तन्निष्ठक्षणिकत्वस्यापि स्वरूपवत् प्रत्यक्षविषयतैव स्यात् इति। ततश्च यथा प्रत्यक्षगृहीतक्षणिकत्वग्राहिणः अनुमानस्य प्रामाण्यं स्वीकुर्वन्ति बौद्धाः तथैव प्रत्यक्षगृहीतनीलाद्यर्थग्राहिणः संवृत्यपरनाम्नो विकल्पस्यापि प्रामाण्यं स्वीकुर्युः। न च तेषां मते विकल्पस्य प्रमाणता "गृहीतग्रहणान्नेष्टं सांवृतम्–दर्शनोत्तरकालं सांवृतं विकल्पज्ञानं प्रमाणं नेष्टं दर्शनगृहीतस्यैव ग्रहणात् तेनैव च प्रापयितुं शक्यत्वात् सांवृतमकिञ्चित्करमेव ।" [ प्रमाणवा० मनोरथ० २।५ ]
15 इत्यभिधानात्।

पृ० ३. पं० ११. **'अर्थक्रियार्थी हि'**–तुलना–"अर्थक्रियार्थी हि सर्वः प्रेक्षावान् प्रमाणमप्रमाणं वाऽन्वेषते ।" [ हेतुबि० लि० प्र० परि० ] तत्त्वसं० पं० पृ० ७७८।

पृ० ३ पं० ११. **'रूपादिक्षणक्षयादि'**–अत्रायं भावः–सौगतानामिदमभिमतं यत् निर्विकल्पकप्रत्यक्षेण सर्वात्मना वस्तुनः स्वलक्षणस्य ग्रहणं भवति। "तस्मात् दृष्टस्य
20 भावस्य दृष्ट एवाखिलो गुणः ।" [प्रमाणवा० १।४६] इति वचनात्। तत्र यद्यपि नीलं वस्तु सर्वात्मना प्रत्यक्षेण गृहीतं तथापि यस्मिन्नंशे विकल्पोत्पादकता निर्विकल्पकस्य तस्मिन्नेव अंशे प्रामाण्यम् अथ च प्रवृत्तिजनकत्वम्। तथा चोक्तम्–"प्रत्यक्षेण गृहीतेऽपि विशेषेंऽशविवर्जिते। यद्विशेषावसायोऽस्ति प्रत्ययः सः प्रतीयते ।।" [ प्रमाणवा०१।५९ ] "अविकल्पमपि ज्ञानं विकल्पोत्पत्तिशक्तिमत्। निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः ।। १३०६ ।।
25 प्रत्यक्षमुत्पन्नमपि यत्रांशेऽवसायं जनयति स एवांशो व्यवहारयोग्यो गृहीत इत्यभिधीयते। यत्र तु भ्रान्तिनिमित्तवशात् समारोपप्रवृत्तेर्न व्यवसायं जनयितुमीशं स व्यवहारायोग्यत्वाद् गृहीतोऽप्यगृहीतप्रख्य इति तत्र अनुमानस्य प्रवृत्तसमारोपव्यवच्छेदाय प्रवर्त्तमानस्य प्रामाण्यं भवति, न पुनः प्रत्यक्षानन्तरभाविविकल्पस्य तस्य प्रवृत्तसमारोपव्यवच्छेदाभावात् ।" [ तत्त्वसं० पं० पृ० ३९० ] अतः नीलनिर्विकल्पकं नीलांशे व्यवसायं जनयत् तस्मिन्नेवांशे
30 प्रमाणम्, न पुनः क्षणक्षयाद्यंशे तत्र व्यवसायजनकत्वाभावात् इति पूर्वपक्षतात्पर्यम्।

उत्तरपक्षस्यायं भावः–यदा हि नीलनिर्विकल्पके नीलांशस्य क्षणक्षयाद्यंशस्य च स्फुटः प्रतिभासः संजातः तदा किं कारणं यत् निर्विकल्पके खण्डशः–नीलांशे प्रामाण्यं न क्षणक्षयांशे। यदि नीलविकल्पवशात् नीलांशे प्रामाण्यं तदा तदेव विकल्पज्ञानं मुख्यरूपतया फलं स्वीकर्त्तव्यम्। यदि च निर्विकल्पकात् विकल्पः संजायते तदा कुतो न अखंडशः–नीलां-
35 शवत् क्षणक्षयाद्यंशेऽपि विकल्पोत्पत्तिः इति ?

पृ० ३. पं० १७. **'तथैकत्वम्'**–तुलना–"क्रमोपलब्धिनियमात् स्यादभेदः स्वसंविदाम्। सुखदुःखादिभेदेऽपि सहवीक्ष्यानियामवत् ।।" [ सिद्धिवि० पृ० ३५९ ]

**पृ० ३. पं० १८. 'प्रमाणफलयोः'**–"इत्युक्तं लघीयस्त्रये प्रमाणफलयोः क्रमभावेऽपि तादात्म्यं प्रत्येयम् ।" [ सिद्धिवि० टी० पृ० ९९ B. ]

इति प्रमाणप्रवेशे प्रथमः परिच्छेदः ॥



**पृ० ३. पं० २३. 'तद्द्रव्यपर्याया'**–तुलना–"तत्त्वं त्वनेकान्तमशेषरूपम्" [युक्त्यनुशा० श्लो० ४७] "अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम्" [न्यायाव० श्लो० २९] 5 परीक्षामु० ४।१ । प्रमाणनय० ५।१ । प्रमाणमी० १।१।३० । "द्रव्यपर्यायात्मार्थः इत्यकलङ्कदेवैरभिधानात्" [ तत्त्वार्थश्लो० पृ० ४२४ ]

**पृ० ३. पं० २४. 'स्वलक्षणं सामान्यलक्षणं वा'**–"तत्र यदर्थक्रियासमर्थं तदेव वस्तु स्वलक्षणमिति । सामान्यलक्षणं च ततो विपरीतम् ।" [ प्रमाणसमु० टी० पृ० ६ ] "यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः तत्स्वलक्षणम् । तदेव परमार्थसत् ।" 10 [न्यायबि० १।१३, १४] "स्वमसाधारणं लक्षणं तत्त्वं स्वलक्षणम् ।" [न्यायबि० टी० पृ० २२] "अर्थक्रियासमर्थं यत्तदत्र परमार्थसत् । अन्यत्संवृतिसत् प्रोक्तं ते स्वसामान्यलक्षणे ॥" [ प्रमाणवा० ३।३ ] "अन्यत् सामान्यलक्षणम् । सोऽनुमानस्य विषयः ।" [ न्यायबि० १।१६, १७ ] "···सामान्येन लक्षणं सामान्यलक्षणम्, साधारणं रूपमित्यर्थः ।" [ न्यायबि० टी० पृ० २४ ] "यदाह–न हि स्वसामान्यलक्षणाभ्यामपरं प्रमेयमस्ति, स्वलक्षणविषयं प्रत्यक्षं 15 सामान्यविषयमनुमानमिति । यदा साक्षाज्ज्ञानजननं प्रति शक्तत्वेन प्रतीयते तदाऽसौ स्वेन रूपेण लक्ष्यमाणत्वात् स्वलक्षणम् । यदा तु पारम्पर्येण शक्तता तस्यैव प्रतीयते तदा सामान्यरूपेण लक्षणमिति सामान्यलक्षणम् ।" [प्रमाणवार्तिकालं० लि० पृ०२७३]

तुलना–"न हि बहिरन्तर्वा स्वलक्षणं सामान्यलक्षणं वा तथैवोपलभामहे यथैकान्तवादिभिराम्नायते ।" [ अष्टश०, अष्टसह० पृ० १७५ ] 20

**पृ० ४. पं० ३. 'अर्थक्रिया'**–सौगतैः नित्यपक्षस्य असत्त्वसिद्ध्यर्थं 'क्रमयौगपद्याभ्यामर्थक्रियाकारित्वाभावात्' इति हेतुः प्रयुज्यते । तथाहि–"यदि न सर्वं सत् कृतकं वा प्रतिक्षणविनाशि स्यादक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाऽयोगात् अर्थक्रियासामर्थ्यलक्षणमतो निवृत्तमित्यसदेव स्यात् ।" [वादन्याय पृ०७] "क्रमयौगपद्याभ्यामित्यादि–नैव प्रत्यक्षतः कार्यविरहाद्वा शक्तिविरहोऽक्षणिकत्वे उच्यते किन्तु तद्व्यापकविरहात्; तथाहि–क्रमयौग- 25 पद्याभ्यां कार्यक्रिया व्याप्ता प्रकारान्तराभावात् । ततः कार्यक्रियाशक्तिव्यापकयोः तयोरक्षणिकत्वे विरोधान्निवृत्तेः तद्व्याप्तायाः क्रियाशक्तेरपि निवृत्तिः इति सर्वशक्तिविरहलक्षणमसत्त्वमक्षणिकत्वे व्यापकानुपलब्धिराकर्षति विरुद्धयोरेकत्रायोगात् । ततो निवृत्तं सत्त्वं क्षणिकेष्वेव अवतिष्ठमानं तदात्मतामनुभवति इति यत् सत् तत् क्षणिकमेव ।" [हेतुबि० टी० लि० पृ० १४२ B. ] 'क्रमेण युगपच्चापि यस्मादर्थक्रियाकृतः । न भवन्ति स्थिरा भावाः निःस- 30 त्त्वास्ते ततो मताः ॥" [ तत्त्वसं० पृ०१४३ ] क्षणभंगसि० पृ० २० । इत्यादि ।

नित्यवस्तुवादिभिः अनेनैव हेतुना क्षणिकेऽर्थक्रियाऽभावः प्रतिवन्द्या प्रसाध्यते । तथाहि–"क्षणिकस्यापि भावस्य सत्त्वं नास्त्येव सोऽपि हि । क्रमेण युगपद्वापि न कार्यकरणे क्षमः ॥" [न्यायमं० पृ० ४५३] न्यायवा० ता० टी० पृ० ५५४ । विधिवि० न्यायकणि० पृ० १३० ।

तत्त्वसंग्रहे 'क्षणिकेष्वपि इत्यादिना भदन्तयोगसेनमतमाशंकते' इत्युक्त्वा 'क्षणिकोऽपि 35

भावः क्रमेण युगपद्वा न अर्थक्रियां कर्त्तुं क्षमः' इति मतं पूर्वपक्षीकृतम् । तथाहि-"क्षणिकेष्वपि भावेषु ननु चार्थक्रिया कथम् ।...क्रमेण युगपच्चापि यतस्तेऽर्थक्रियाकृतः । न भवन्ति ततस्तेषां व्यर्थः क्षणिकताश्रयः ॥" [ तत्त्वसं० पृ० १५३ ]

जैनैः तेनैव हेतुना सर्वथा क्षणिके नित्ये च अर्थक्रियाकारित्वाभावं प्रसाध्य कथञ्चि-
5 न्नित्यानित्यात्मन्यर्थे अर्थक्रियाकारित्वं संसाध्यते । द्रष्टव्यम्-शास्त्रवा० श्लो० ४३७। अष्टसह० पृ०२०२ । प्रमेयक० पृ० १४७ A. न्यायकुमु० पृ० ३७९ ।

समुद्धृतेयम्-न्यायवि० वि० पृ० ५२७ A. प्रमाणमी० पृ० १४।

**पृ० ४. पं० ५. 'अर्थक्रियासमर्थं'**-"अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः"[न्यायवि० १।१५ ] प्रमाणवा० ३।३।

10 **पृ० ४. पं० ६. 'स्वभूतिमात्रम्'**-"तथा-क्षणिकाः सर्वसंस्काराः स्थिराणां कुतः क्रिया । भूतिर्यैषां क्रिया सैव कारकं सैव चोच्यते ॥" [ बोधिचर्या० पं० पृ० ३७६ ]

**पृ० ४. पं० ७. 'विषयाकारस्यैव'**-पूर्वपक्षः-"अत्रापि फले विषयाकारतैव प्रमाणम् । यदाह आचार्यः-नन्वव्यतिरेकाद् ग्राहकाकारोपि कस्मान्न प्रमाणम् ? अत्रोच्यते-तदार्थाभासतैवास्य प्रमाणं न तु सन्नपि । ग्राहकात्माऽपरार्थत्वाद्बाह्येष्वर्थेष्वपेक्ष्यते ॥"
15 [ प्रमाणवार्तिकालं० पृ० ७० ]

इति प्रमाणप्रवेशे द्वितीयः परिच्छेदः ॥



**पृ० ४. पं० २३. 'ज्ञानमाद्यं'**-अस्यां कारिकायां ग्रन्थकारः मतिस्मृतिसंज्ञेत्यादि सूत्रे [ तत्त्वार्थसू० १। १३ ] अनर्थान्तरत्वेनोक्तानां मत्यादीनाम् अवस्थाविशेषापेक्षया मतित्वं श्रुतत्वञ्च निरूपयति ।

20 अत्र व्याख्याभेदः-प्रभाचन्द्राः "किं यत् नामयोजनात् जायतेऽविशदं ज्ञानं तदेव श्रुतमुतान्यदपि ? इत्याह-प्राङ्नामयोजनात् । नाम्नः अभिधानस्य योजनात् पूर्वमुपजायते यदस्पष्टं ज्ञानं तच्छ्रुतम् नामयोजनाजनितार्थास्पष्टज्ञानसाधर्म्यात् इत्यभिप्रायः । 'चिन्ता च' इत्यत्र चशब्दो भिन्नप्रक्रमः 'शब्दानुयोजनात्' इत्यस्यानन्तरं द्रष्टव्यः । तेन न केवलं नामयोजनात् पूर्वं यदस्पष्टं ज्ञानमुपजायते तदेव श्रुतं किन्तु शब्दानुयोजनाच्च यदुपजायते तदपि
25 श्रुतमिति संगृहीतं भवति ।" [ न्यायकुमु० लि० पृ० २२२ B. ] इत्यादिसन्दर्भेण स्मृत्यादिज्ञानान्युभयथा शब्दयोजनात् प्राक् अनन्तरञ्च श्रुतेऽन्तर्भावयन्ति । कारिकायामायातस्य आद्यशब्दस्य कारणार्थकताञ्च सूचयन्ति ।

विद्यानन्दास्तु-शब्दयोजनात् प्राक् मतिज्ञानादाद्यादाभिनिबोधिकपर्यन्तज्ञानानां मतित्वं शब्दानुयोजनाच्च तेषामेव श्रुतत्वं स्वीकुर्वन्ति । तथाहि-"अत्र अकलंकदेवाः प्राहुः-ज्ञानमाद्यं
30 स्मृतिः संज्ञा.....तत्रेदं विचार्यते-मतिज्ञानादाद्यादाभिनिबोधिकपर्यान्ताच्छेषं श्रुतं शब्दानुयोजनादेवेत्यवधारणम्, श्रुतमेव शब्दानुयोजनादिति वा ? ( पृ० २३९ ) इत्युक्ता मतिः प्राङ्नामयोजनात् । शब्दानुयोजनादेव श्रुतमेवं न न बाध्यते" [ तत्त्वार्थश्लो० पृ० २४१ ]

सन्मतिटीकाकारास्तु विद्यानन्दाभिमतव्याख्यानमेव प्रतीयन्ति; तथाहि-"अत्र च यत् शब्दसंयोजनात् प्राक् स्मृत्यादिकमविसंवादिव्यवहारनिर्वर्तनक्षमं प्रवर्तते तन्मतिः, शब्दसंयोज-
35 नात् प्रादुर्भूतं तु सर्वं श्रुतमिति विभागः ।" [सन्मति० टी० पृ०५५३] षड्द० बृह० पृ०८४ B.

**पृ० ५. पं० १. 'अविसंवादस्मृतेः'**–तुलना–"धारणारूपा च मतिः अविसंवादस्वरूपस्मृतिफलस्य हेतुत्वात् प्रमाणम् ।" [सन्मति० टी० पृ० ५५३] षड्द० बृह० पृ० ८४ A.

**पृ० ५. पं० २. 'प्राक्शब्द'**–तुलना–"मतिस्मृत्यादयः शब्दयोजनमन्तरेण न भवन्तीत्येकान्तो न, तदेकान्ते पुनः न क्वचित् स्युः तन्नामस्मृतेरयोगात् अनवस्थानादेः ।" [सिद्धिवि० पृ० १०० A.] "प्राक्शब्दयोजनात् मतिज्ञानमेतत् शेषमनेकप्रभेदं शब्दयोजनादुपजायमानमविशदं ज्ञानं श्रुतम् इति केचित् ।" [सन्मति० टी० पृ० ५५३] षड्द० बृह० पृ० ८४ A. 5

**पृ० ५. पं० १०. 'नहि प्रत्यक्षं'**–तुलना–"नहि कस्यचित् साकल्येन व्याप्तिज्ञानं प्रत्यक्षं क्वचित् कदाचिद्भवितुमर्हति सन्निहितविषयबलोत्पत्तेरविचारकत्वात् ।" [सिद्धिवि० पृ० १५६] अष्टश०, अष्टसह० पृ० ११९। "यथाहुः–न हीदमियतो व्यापारान् कर्तुं समर्थं सन्निहितविषयबलेनोत्पत्तेरविचारकत्वात् ।" [शां० भा० भामती पृ० ७६६] न्यायवा० ता० टी० पृ० १३७। 10

**पृ० ५. पं० ११. 'तन्नाप्रत्यक्षम्'**–उद्धृतमिदम्–प्रमाणसं० पृ० १०१।

**पृ० ५. पं० १२. 'प्रमाणान्तरत्वात्'**–तुलना–"सन्निकृष्टविप्रकृष्टयोः साकल्येनेदन्तया नेदन्तया वा व्यवस्थापयितुकामस्य तर्कः परं शरणम् ।" [सिद्धिवि० पृ० २९३ A.]

**पृ० ५. पं० १६. 'तादात्म्यतदुत्पत्ती'**–बौद्धा हि तादात्म्यतदुत्पत्तिभ्यामेव अविनाभावनियमं वर्णयन्ति; तथाहि–"स च प्रतिबन्धः साध्येर्थे लिंगस्य वस्तुतस्तादात्म्यात्साध्यादर्थादुत्पत्तेश्च ।" [न्यायबि० पृ० ४१] "कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमः···।" [प्रमाणवा० १।३२] 15

**पृ० ५. पं० २०. 'चन्द्रादेः'**–तुलना–"चन्द्रादौ जलचन्द्रादि सोऽपि तत्र तथाविधः । छायादिपादपादौ च सोऽपि तत्र कदाचन ॥" [तत्त्वार्थश्लो० पृ० २०१]

**पृ० ५. पं० २३. 'भविष्यत्प्रतिपद्येत'**–तुलना–"कृतिकोदयमालक्ष्य रोहिण्यासत्तिक्लृप्तिवत् ।" [मी० श्लो० पृ० ३५१] प्रश० व्यो० पृ० ५७१। "प्रतिबन्धपरिसंख्यायाम् उदेष्यति शकटं कृतिकोदयादिति किं प्रमाणम्?" [सिद्धिवि० पृ० ३१७ B.] प्रमाणप० पृ० ७१। परीक्षामु० ३।६३। प्रमाणनय० ३।८०। प्रमाणमी० पृ० ४१। जैनतर्कभा० पृ० १६। 20

**पृ० ६. पं० ५. 'अदृश्यानुपल'**–"विप्रकृष्टविषयानुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा संशयहेतुः प्रमाणनिवृत्तावप्यर्थाभावाऽसिद्धेः ।" [न्यायबि० पृ० ५९] वादन्याय पृ० १८। "अनुपलब्धिलक्षणप्राप्तानुपलब्धेः संशयहेतुतया अगमकत्वादिति भावः ।" [वादन्यायटी० पृ० १९] 25

तुलना–अष्टश०, अष्टसह० पृ० ५२।

**पृ० ६. पं० २०. 'प्रत्यक्षानुपलम्भ'**–"प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः ।" [हेतुबि० टी० लि० पृ० ७३] 30

**पृ० ६. पं० २८. 'सर्वविज्ञानानां'**–अत्रायं पूर्वपक्षः–"सर्वचित्तचैत्तानामात्मसंवेदनम् । चित्तमर्थमात्रग्राहि । चैत्ता विशेषावस्थाग्राहिणः सुखादयः ।······नास्ति सा काचिच्चित्तावस्था यस्यामात्मनः संवेदनं प्रत्यक्षं न स्यात् ।" [न्यायबि० पृ० १९]

**पृ० ७. पं० ६. 'उपमानं'**–पूर्वपक्षः–"प्रसिद्धार्थसाधर्म्यात् साध्यसाधनमुपमानम् ।" [न्यायसू० १।१।६] 35

तुलना–"साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते।" [ न्यायकुसु० ३।९ ] "सादृश्यं चेत् प्रमेयं स्यात् वैलक्षण्यं न किं तथा।" [ जैनतर्कवा० पृ० ७६ ]

समुद्धृतेयम्—स्या० रत्ना० पृ० ४९८। रत्नाकराव० ३।४। प्रमेयरत्नमा० ३।५। प्रमाणमी० पृ० ३५।

5 **पृ० ७. पं० २३. 'इदमल्पं'**–तुलना–"एकविषाणी खड्गः सप्तपर्णो विषमच्छदः इत्याहितसंस्काराणां पुनस्तत्प्रत्यक्षदर्शिनामभिज्ञानं किन्नाम प्रमाणं स्यात्। तथा स्त्र्यादिलक्षणश्रवणात् तथादर्शिनः समभिज्ञानम्, संख्यादिप्रतिपत्तिश्च पूर्वापरनिरीक्षणात्, पश्यतां च नामयोजना उपमानवत् सर्वं प्रमाणान्तरम्।" [ सिद्धिवि० पृ० १५० B. ] परीक्षामु० ३।५-१०। प्रमाणनय० ३।५, ६। प्रमाणमी० १।२।४।

10 उद्धृतेयम्—स्या० रत्ना० पृ० ४९८। प्रमेयरत्नमा० ३।५। प्रमाणमी० पृ० ३५।

**पृ० ७. पं० २६. 'अर्थापत्तिः'**–"अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना। यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना।" [ शाबरभा० १।१।५ ] मी० श्लो० अर्था० श्लो० १।

**पृ० ८. पं० १. 'परोक्षेऽन्तर्भावात्'**–तुलना–"अनुमानोपमानागमार्थापत्तिसंभवा-15 भावान्यपि च प्रमाणानीति केचित् मन्यन्ते तत्कथमेतदिति ? अत्रोच्यते–सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानि इन्द्रियार्थसन्निकर्षनिमित्तत्वात्।" [ तत्त्वार्थाधि० भा० १।१२ ] "उपमानार्थापत्त्यादीनामत्रैवान्तर्भावात्..." [ सर्वार्थसि० १।११ ] "अर्थापत्त्यादेरनुमानव्यतिरेकेऽपि परोक्षेऽन्तर्भावात्।" [अष्टश०, अष्टसह० पृ० २८१]

इति प्रमाणप्रवेशे तृतीयः परिच्छेदः ॥



20 **पृ० ८. पं० ६. 'यद्यथैवाविसंवादि'**–तुलना–"यथा यत्र विशदं तथा तत्र प्रत्यक्षम्। यथा यत्राविसंवादः तथा तत्र प्रमाणता। (पृ० ६५ B.) तथा च सर्वं स्वभावे परभावे वा कथञ्चिदेव प्रमाणं न सर्वथा।" [ सिद्धिवि० पृ० ८६ A. ] "यथा यत्राविसंवादः तथा तत्र प्रमाणता।" [तत्त्वार्थश्लो० पृ० १७०] सिद्धिवि० टी० पृ० ६९ B. "यथा यत्राविसंवादस्तथा तत्र प्रमाणतेत्यकलंकदेवैरप्युक्तत्वात्।" [अष्टसह० पृ० १६३] "यद्यथैवाविसंवादि प्रमाणं तत्तथा 25 मतम्। विसंवाद्यप्रमाणं च तदध्यक्षपरोक्षयोः।।" [ सन्मति० टी० पृ० ५९५ ]

**पृ० ८. पं० १०. 'तिमिराद्युपप्लव'**–तुलना–"येनाकारेण तत्त्वपरिच्छेदः तदपेक्षया प्रामाण्यमिति। तेन प्रत्यक्षतदाभासयोरपि प्रायशः संकीर्णप्रामाण्येतरस्थितिरुन्नेतव्या, प्रसिद्धानुपहतेन्द्रियदृष्टेरपि चन्द्रार्कादिषु देशप्रत्यासत्त्याद्यभूताकारावभासनात्, तथोपहताक्षादेरपि संख्यादिविसंवादेऽपि चन्द्रादिस्वभावतत्त्वोपलम्भात्। तत्प्रकर्षापेक्षया व्यपदेशव्यवस्था गन्ध-30 द्रव्यादिवत्।" [ अष्टश०, अष्टसह० पृ० २७७ ] "अनुपप्लुतदृष्टीनां चन्द्रादिपरिवेदनम्। तत्संख्यादिषु संवादि न प्रत्यासन्नतादिषु।।" [तत्त्वार्थश्लो० पृ० १७०] "तिमिराद्युपप्लवज्ञानं चन्द्रादावविसंवादकत्वात् प्रमाणं तत्संख्यादौ तदेव विसंवादकत्वादप्रमाणं प्रमाणेतरव्यवस्थायास्तल्लक्षणत्वात्। यतो ज्ञानं यदप्यनुकरोति तत्र न प्रमाणमेव समारोपव्यवच्छेदापेक्षत्वात्। अन्यथा दृष्टे प्रमाणान्तरवृत्तिर्न स्यात् कृतस्य करणायोगात् तदेकान्तहानेः कथञ्चित्करण-

निष्टेः, तदस्य विसंवादोऽप्यवस्तुनिर्भासात् चन्द्रादिवस्तुनिर्भासादविसंवादोऽपीत्येकस्यैव ज्ञानस्य यत्राविसंवादः तत्र प्रमाणता इतरत्र तदाभासतेति ।" [ सन्मति० टी० पृ० ५९५ ]

पृ० ८. पं० १८. 'सर्वतः संहृत्य'–धर्मकीर्तिना उक्तं यत्–शान्तचेतस्कतया चक्षुषा यत् रूपदर्शनं भवति तन्निर्विकल्पकम्। तस्मिंश्च रूपस्वलक्षणं क्षणिकपरमाण्वात्मकं प्रतिभाति। तथाहि–"संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना। स्थितोऽपि चक्षुषा रूपमीक्षते साऽक्षजा मतिः ॥" [प्रमाणवा० ३।१२४ ] ग्रन्थकृता तत्प्रतिविहितम्–यत् तदवस्थायामपि सविकल्पकमेव ज्ञानं स्थिरस्थूलाद्यर्थग्राह्यनुभूयते। 5

तुलना–"संहृत्य सर्वतश्चित्तं स्तिमितेनान्तरात्मना। स्थितोऽपि चक्षुषा रूपं स्वं च स्पष्टं व्यवस्यति ॥" [ तत्त्वार्थश्लो० पृ० १८६ ]

पृ० ८. पं० १९. 'न पुनरसाधारणैकान्तम्'–तुलना–"नहि जातुचिदसहायमाकारं पश्यामो यथा व्यावर्ण्यते तथैवानिर्णयात्। नानावयवरूपाद्यात्मनो घटादेः बहिः सम्प्रतिपत्तेः न परमाणुसंचयरूपस्य ।" [ सिद्धिवि० पृ०३६ B. ] 10

पृ० ८. पं० २०. 'प्रतिसंहार'–"प्रतिसंहारः पुनर्विकल्पप्रवृत्तिः" [ न्यायकुमु० लि० पृ० २७० A. ]

पृ० ९. पं० १. 'प्रतिसंविदितो'–तुलना–"नहि संवित्तेः बहुबहुविधप्रभृत्याकृतयः स्वयमसंविदिता एव उदयन्ते अस्तयन्ते वा यतः सत्योऽपि अनुपलक्षिताः स्युः कल्पनावत् ।" [ सिद्धिवि० टी० पृ० ९८ B. ] 15

पृ० ९. पं० ३. 'सदृशापरापरो'–"तां पुनरनित्यतां पश्यन्नपि मन्दबुद्धिः नाध्यवस्यति, सत्तोपलम्भेन सर्वदा तद्भावशंकाविप्रलब्धः सदृशापरोत्पत्तिविप्रलब्धो वा···।" [ प्रमाणवार्तिकालं० लि० पृ० २३७ ] 20

पृ० ९. पं० २१. 'अभ्रान्त'–अभ्रान्तं विशेषणं बौद्धापेक्षया "कल्पनापोढमभ्रान्तं प्रत्यक्षम् ।" [ न्यायबि० १।४ ] इत्यभिधानात्। अव्यभिचारीति विशेषणं नैयायिकापेक्षया ज्ञेयम् "इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानं प्रत्यक्षम् ।" [ न्यायसू० १।१।४ ] इत्युक्तत्वात्।

पृ० ९. पं० २३. 'नहि दृष्टेऽनुपप'–तुलना–"स्वभावेऽध्यक्षतः सिद्धे परैः पर्यनुयुज्यते। तत्रोत्तरमिदं वाच्यं न दृष्टेऽनुपपन्नता ॥" [ प्रमाणवार्तिकालं० लि० पृ० ६८ ] 25

पृ० ९. पं० २४. 'वक्त्रभिप्रायेऽपि'–तुलना–"विवक्षाप्रभवं वाक्यं स्वार्थे न प्रतिबध्यते, यतः कथं तत्सूचितेन लिंगेन तत्त्वव्यवस्थितिः। वक्त्रभिप्रायमात्रं वाक्यं सूचयन्तीति अविशेषेणाक्षिपन् न पारम्पर्येणापि तत्त्वं प्रतिपद्येत। नच वक्त्रभिप्रायमेकान्तेन सूचयन्ति श्रुतिदुष्टादेः अन्यत एव प्रसिद्धेः ।" [ सिद्धिवि० पृ०.२६४ ] 30

पृ० ९. पं० २९. 'सत्येतरव्यवस्था का'–तुलना–"वाक्यानामविशेषेण वक्त्रभिप्रेतवाचिनाम्। सत्यानृतव्यवस्था न तत्त्वमिथ्यार्थदर्शनात् ॥ मिथ्यादर्शनज्ञानात् मिथ्यार्थत्वं गिरां मतम् ।" [ सिद्धिवि० पृ० ५०२ ]

पृ० १०. पं० ३. 'वक्तुरभिप्रेतं'–"वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते। प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥ वक्तुर्व्यापारो विवक्षा तस्य विषयो योऽर्थः समारोपितबहीरूपो ज्ञानाकारः प्रकाशते बुद्धौ विवक्षात्मिकायां तत्र शब्दस्य प्रामाण्यं लिङ्गत्वम् 35

शब्दादुच्चरिताद्विवक्षितार्थप्रतिभासी विकल्पोऽनुमीयत इत्यर्थः ।" [प्रमाणवा० मनोरथ० पृ० ४] "यद्यथा वाचकत्वेन वक्तृभिर्विनियम्यते । अनपेक्षितबाह्यार्थं तत्तथा वाचकं मतम् ।।" [ प्रमाणवा० १।६७ ] "परमार्थैकतानत्वे शब्दानामनिबन्धना । न स्यात्प्रवृत्तिरर्थेषु समयान्तरभेदिषु ।। अतीताजातयोर्वापि न च स्यादनृतार्थता । वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता ।।"
5 [ प्रमाणवा० १।२०९-१० ] "विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा । तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिद्ध्यति ।।" [ प्रमाणवा० २।१६ ] "यथोक्तम्-वक्तुरभिप्रायं सूचयेयुः शब्दाः ।" [ तर्कभा० मो० पृ० ४ ]

इति प्रमाणप्रवेशः प्रथमः ।।



**पृ० १०, पं० २३. 'भेदाभेदात्मके'**–"तथा चाहाकलङ्कः-भेदाभेदा··यतोऽपेक्षा-
10 नपेक्षाभ्यां···" [ आव० नि० मलय० पृ० ३७० B. ] गुरुतत्त्ववि० पृ० १६ B.

**पृ० १०, पं० २४. 'अपेक्षाऽनपेक्षा'**–"निरपेक्षत्वं प्रत्यनीकधर्मस्य निराकृतिः सापेक्षत्वमुपेक्षा ।" [ अष्टश०, अष्टसह० पृ० २९० ]

**पृ० १, पं० २४. 'नयदुर्नयाः'**–"निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेऽर्थकृत् ।" [आप्तमी० श्लो०१०८] "तम्हा सव्वे वि णया मिच्छादिट्ठी सपक्खपडिबद्धा । अण्णोण्णणि-
15 स्सिआ उण हवंति सम्मत्तसब्भावा ।।" [ सन्मति० १।२१ ] "नयाः सापेक्षा दुर्नया निरपेक्षा लोकतोऽपि सिद्धाः" [ सिद्धिवि० पृ० ५३७ B. ] "तथा चोक्तम्-अर्थस्यानेकरूपस्य धीः प्रमाणं तदंशधीः । नयो धर्मान्तरापेक्षी दुर्नयस्तन्निराकृतिः ।।" [अष्टश०, अष्टसह० पृ० २९०] "धर्मान्तरादानोपेक्षाहानिलक्षणत्वात् प्रमाणनयदुर्नयानां प्रकारान्तरासंभवाच्च, प्रमाणात्तद-तत्स्वभावप्रतिपत्तेः तत्प्रतिपत्तेः तदन्यनिराकृतेश्च ।" [ अष्टश०, अष्टसह० पृ० २९० ] "सदेव
20 सत् स्यात्सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः ।" [ अन्ययोगव्य० श्लो० २८ ]

**पृ० १०, पं० २५. 'उत्पादव्यय'**–"उप्पन्ने वा विगए वा धुवे वा" [ स्थानांग० स्था० १० ] "सद्दव्वं वा" [ व्या० प्र० श० ८ उ० ९ सत्पदद्वार ] "सद्द्रव्यलक्षणम्, उत्पादव्ययध्रौव्ययुक्तं सत्" [तत्त्वार्थसू० ५।२९,३०] "दव्वं पज्जयविउयं दव्वविउत्ता य पज्जवा णत्थि । उप्पायट्ठिइभंगा हंदि दवियलक्खणं एयं ।।" [ सन्मति० गा० १।१२ ] "नोत्पादस्थितिभंगाना-
25 मभावे स्यान्मतित्रयम् ।" [ मी० श्लो० पृ० ६१९ ] "उत्पादस्थितिभंगानां स्वभावादनुबन्धिता । तद्धेतूनामसामर्थ्यात् अतस्तत्त्वं त्रयात्मकम् ।। " [ सिद्धिवि० पृ०१६७ ]

**पृ० १०, पं० २५. 'द्रव्यपर्याया'**–"द्रव्यं हि नित्यमाकृतिरनित्या । कथं ज्ञायेत ? एवं हि दृश्यते लोके मृत् कयाचिद् आकृत्या युक्तः पिण्डो भवति । पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते । घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते । तथा सुवर्णं कयाचिदाकृत्या युक्तः पिण्डो
30 भवति । पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते । रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते । कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते पुनरावृत्तः सुवर्णपिण्डः पुनरपरया आकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः । आकृतिरन्या चान्या च भवति द्रव्यं पुनस्तदेव । आकृत्युपमर्देन द्रव्यमेवावशिष्यते ।" [ पात० महाभा० १।१।१] योगभा० ३।१३।

**पृ० १०, पं० २६ 'नयो'**–"नयाः कारकाः साधका निर्वर्तका निर्भासका उप-
35 लम्भका व्यञ्जका इत्यनर्थान्तरम् । जीवादीन् पदार्थान् नयन्ति प्राप्नुवन्ति कारयन्ति साधयन्ति निर्वर्तयन्ति निर्भासयन्ति उपलम्भयन्ति व्यञ्जयन्तीति नयाः ।" [ तत्वार्थाधि० भा० १।३५] "सधर्मणैव साध्यस्य साधर्म्यादविरोधतः । स्याद्वादप्रविभक्तार्थविशेषव्यञ्जको नयः ।।"

[आप्तमी० श्लो० १०६] "वस्तुन्यनेकान्तात्मनि अविरोधेन हेत्वर्पणात् साध्यविशेषस्य याथात्म्यप्रापणप्रवणप्रयोगो नयः।" [सर्वार्थसि० १।३३] "ज्ञातॄणामभिसन्धयः खलु नयास्ते द्रव्यपर्यायतः···नयो ज्ञातुर्मतं मतः।" [सिद्धिवि० पृ० ५१७ A. ५१८ A.] "प्रमाणप्रकाशितार्थविशेषप्ररूपको नयः।" [राजवा१०।३३] "नयन्ते अर्थान् प्रापयन्ति गमयन्तीति नयाः, वस्तुनोऽनेकात्मकस्य अन्यतमैकात्मैकान्तपरिग्रहात्मका इति।" [नयचक्रवृ०पृ०५२६A.] "यथोक्तम्- 5
द्रव्यस्यानेकात्मनोऽन्यतमैकात्मावधारणम् एकदेशनयनान्नयाः।" [नयचक्रवृ० पृ० ६ B.] "एगेण वत्थुणोऽणेगधम्मुणो जमवधारणेणेव। नयणं धम्मेण तत्रो होई नत्रो सत्तहा सो य॥" [विशेषा० गा० २६७६] "नयन्तीति नयाः, अनेकधर्मात्मकं वस्तु एकधर्मेण नित्यमेवेदमनित्यमेवेति वा निरूपयन्ति।" [तत्त्वार्थहरि० १।६] तत्त्वार्थसिद्ध० १।६। "उक्तं हि-णयदि त्ति णयो भणिओ बहूहिं गुणपज्जएहिं जं दव्वं। परिणामखेत्तकालंतरेसु अविणट्ठसब्भावं॥ 10
······प्रमाणपरिगृहीतार्थैकदेशवस्त्वध्यवसायो नयः।" [धवलाटी० सत्प्ररू०] "स्वार्थैकदेशनिर्णीतिलक्षणो हि नयः स्मृतः।" (पृ० ११८) "नीयते गम्यते येन श्रुतार्थांशो नयो हि सः।" [तत्वार्थश्लो० पृ० २६८] नयविव० श्लो० ४। "अनिराकृतप्रतिपक्षो वस्त्वंशग्राही ज्ञातुरभिप्रायो नयः।" [प्रमेयक० पृ० २०५ A.] "जं णाणीण वियप्पं सुयभेयं वत्थुयंससंगहणं। त इह णयं पउत्तं णाणी पुण तेहिं णाणेहिं॥" [नयचक्र गा० २] "वस्तुनोऽनन्तधर्मस्य प्रमाणं 15
(ण) व्यञ्जितात्मनः। एकदेशस्य नेता यः स नयोऽनेकधा स्मृतः॥" [तत्वार्थसार पृ० १०६] "तद्द्वारायातः पुनरनेकधर्मनिष्ठार्थसमर्थनप्रवणः परामर्शः शेषधर्मस्वीकारतिरस्कारपरिहारद्वारेण वर्त्तमानो नयः।" [न्यायावता० टी० पृ० ८२] "नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशः तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविशेषो नयः।" [प्रमाणनय० ७।१] स्या० मं० पृ० ३१०। "प्रमाणपरिच्छिन्नस्यानन्तधर्मात्मकस्य वस्तुनः एकदेशग्राहिणः तदित- 20
रांशाप्रतिक्षेपिणः अध्यवसायविशेषा नयाः।" [जैनतर्कभा० पृ० २१] "प्रकृतवस्त्वंशग्राही तदितरांशाप्रतिक्षेपी अध्यवसायविशेषो नयः।" [नयरहस्य पृ० ७९] नयप्रदीप पृ० ९७ B.

मलयगिर्याचार्यमतेन सर्वेऽपि नयाः मिथ्या एव; तथाहि-"अनेकधर्मात्मकं वस्त्ववधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण प्रतिपाद्यस्य बुद्धिं नीयते प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नयः। ······इह हि यो नयो नयान्तरसापेक्षतया स्यात्पदलाञ्छितं 25
वस्तु प्रतिपद्यते स परमार्थतः परिपूर्णं वस्तु गृह्णाति इति प्रमाण एवान्तर्भवति, यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेण अवधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स नयः वस्त्वेकदेशपरिग्राहकत्वात्, ···स च नियमान्मिथ्यादृष्टिरेव।" [आव० नि० मलय० पृ० ३६९ A.]

**पृ० १०. पं० २६. 'स द्रव्यार्थिकः'**-"तच्च सच्चतुर्विधम्, तद्यथा द्रव्यास्तिकं मातृकापदास्तिकम् उत्पन्नास्तिकम् पर्यायास्तिकमिति।" [तत्त्वार्थाधि० भा० ५।३१] "इत्थं द्रव्यास्तिकं 30
मातृकापदास्तिकं च द्रव्यनयः। उत्पन्नास्तिकं पर्यायास्तिकं च पर्यायनयः।" [तत्त्वार्थहरि० ५।३१] तत्त्वार्थसिद्ध० ५।३१। "दव्वट्ठिओ य पज्जवणओ य सेसा वियप्पासिं।" [सन्मति० १।३] "नयो द्विविधः द्रव्यार्थिकः पर्यायार्थिकश्च।" [सर्वार्थसि० १।६] "द्वौ मूलभेदौ द्रव्यास्तिकः, पर्यायास्तिक इति। अथवा···द्रव्यार्थिकः······पर्यायार्थिकः।" [राजवा० १।३३] "तत्र मूलनयौ द्रव्यपर्यायार्थगोचरौ। मिथ्यात्वं निरपेक्षत्वे सम्यक्त्वं तद्विपर्यये।" [सिद्धिवि० 35
पृ० ५२१ A.] "तेषां वा शेषशासनाराणां द्रव्यार्थपर्यायार्थनयौ द्वौ समासतो मूलभेदौ तत्प्रभेदा संग्रहादयः।" [नयचक्रवृ० पृ० ५२६ A.] "दव्वट्ठियस्स दव्वं वत्थुं पज्जवनयस्स पज्जाओ।" [विशेषा० गा० ४३३१] धवलाटी० सत्प्ररू०। प्रमाणनय० ७।५।

**पृ० ११. पं० १. 'द्रवति'**–"तुलना-दवियदि गच्छदि ताइं ताइं सब्भावपज्जयाइं जं। दवियं तं भण्णंते अणण्णभूदं तु सत्तादो।" [ पंचास्ति० गा० ९ ] "यथास्वं पर्यायैर्द्रूयन्ते द्रवन्ति वा तानि द्रव्याणि।" [सर्वार्थसि० ५.२] "द्रवति द्रोष्यति दुद्रवैति (अदुद्रवत्) द्रुः द्रोर्विकारोऽवयवो वा द्रव्यम्।" [ नयचक्रवृ० पृ० ९ B. ] "द्रोर्विकारो द्रव्यम्, द्रोरवयवो वा द्रव्यम्, द्रव्यं च भव्ये भवतीति भव्यम् द्रव्यम्, द्रवतीति द्रव्यम् द्रूयते वा, द्रवणात् गुणानां गुणसन्द्रावो द्रव्यम्।" [नयचक्रवृ० पृ० ४४१ B.] "दविए दुयए दोरवयवो विगारो गुणाण संदावो। दव्वं भव्वं भावस्स भूअभावं च जं जोग्गं।" [ विशेषा० गा० २८ ] "अथवा यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्वं न विहन्यते तद् द्रव्यम्। किं पुनस्तत्त्वम्? तद्भावस्तत्त्वम्। तद्यथा आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति आमलकं बदरमित्येव भवति। अन्वर्थं खल्वपि निर्वचनं गुणसन्द्रावो द्रव्यमिति।" [पात० महाभा० ५।१।११९]

**पृ० ११. पं० १. 'द्रव्यार्थिक'**–"द्रव्यमर्थः प्रयोजनमस्येत्यसौ द्रव्यार्थिकः।" [ सर्वार्थसि० १।६ ] "पज्जवणिस्सामण्णं वयणं दव्वट्ठियस्स अत्थित्ति। अवसेसो वयणविही पज्जवभयणा सपडिवक्खो॥" [सन्मति० गा० १।७] "द्रव्येणार्थः द्रव्यार्थः, द्रव्यमर्थो यस्येति वा, अथवा द्रव्यार्थिकः द्रव्यमेवार्थो यस्य सोऽयं द्रव्यार्थः।" [ नयचक्र वृ० पृ० ४ B. ] धवलाटी० सत्प्ररू०।

**पृ० ११. पं० १०. 'संग्रह'**–"संगहिय पिंडिअत्थं संगहवयणं समासओ बिंति।" [ अनुयोग० ४ द्वा० ] आव० नि० गा० ७५६। विशेषा० गा० २६९९। "अर्थानां सर्वैकदेशसंग्रहणं संग्रहः।" "आह च-यत्संगृहीतवचनं सामान्ये देशतोऽथ च विशेषे। तत्संग्रहनयनियतं ज्ञानं विद्यान्नयविधिज्ञः॥" [ तत्त्वार्थाधि० भा० १।३५ ] तत्त्वार्थहरि०, तत्त्वार्थसिद्ध० १।३५। "स्वजात्यविरोधेनैकध्यमुपनीय पर्यायानाक्रान्तभेदानविशेषेण समस्तग्रहणात् संग्रहः।" [ सर्वार्थसि० १।३३ ] राजवा० १।३३। "विधिव्यतिरिक्तप्रतिषेधानुपलम्भाद्विधिमात्रमेव तत्त्वमित्यध्यवसायः समनस्य ( मस्तस्य ) ग्रहणात् संग्रहः। द्रव्यव्यतिरिक्तपर्यायानुपलम्भाद् द्रव्यमेव तत्त्वमित्यध्यवसायो वा संग्रहः।" [ धवलाटी० सत्प्ररू० ] "शुद्धं द्रव्यमभिप्रैति सन्मात्रं संग्रहः परः। स चाशेषविशेषेषु सदौदासीन्यभागिह॥" [ तत्त्वार्थश्लो० पृ० ७० ] नयविव० श्लो० ६७ प्रमेयक० पृ० २०५B. "शुद्धं द्रव्यं समाश्रित्य संग्रहस्तदशुद्धितः।" [सन्मति० टी० पृ० २७२।] नयचक्र गा० ३४। तत्वार्थसार पृ० १०७। प्रमाणनय० ७।१३। स्या० मं० पृ० ३११। जैनतर्कभा० पृ० २२।

**पृ० ११. पं० १२. 'सर्वमेकं'**–तुलना–"यथा सर्वमेकं सदविशेषात्।" [तत्त्वार्थाधि० भा० १।३५] "अहव महासामन्नं संगहियं पिंडियत्थमियरं ति। सव्वविसेसानन्नं सामन्नं सव्वहा भणियं॥" [ विशेषा० गा० २७०१ ] "विश्वमेकं सदविशेषात् इति यथा।" [ प्रमाणनय० ७।१६ ]

**पृ० १२. पं० ७. 'न च क्षणिकानाम्'**–तुलना–"कार्यकारणता नास्ति बहिरन्तः सन्ततिः कुतः। निरन्वयात् कुतस्तेषां सारूप्यमितरार्थवत्॥ सति क्षणिके कारणे यदि कार्यं स्यात् क्षणिकमक्रमं जगत् निःसन्तानि स्यात्। तस्मिन्नसति भवतः कुतः पुनः कारणानन्तरोत्पत्तिनियमः? सदेव कारणं स्वसत्ताकालमेव कार्यं प्रसह्य जनयेत्। स्वरसत एव कार्योत्पत्तिकालनियमे स्वतन्त्रस्य कुत एव कार्यत्वम्। नैरन्तर्यमात्रात् प्रभवनियमे सर्वत्र सर्वेषामविशेषे कुतः प्रभवनियमः। द्रव्यस्य प्रभवनियमे न किञ्चिदतिप्रसज्यते स्वहेतोः परप्रत्ययतायाम्।" [ सिद्धिवि० पृ० ३६३-६४ ]

**पृ० १२. पं० ८. 'यस्मिन् सत्येव'**–तुलना–"किं रूपः पुनरसौ कार्यकारणभावः अनुपलम्भसहायप्रत्यक्षनिबन्धनः ? इत्याह–तद्भावे भावः तदभावेऽभावश्चेति।" [ हेतुबि० टी० लि० पृ० ६९ ]

**पृ० १२. पं० १४. 'कार्योत्पत्ति'**–तुलना–"कार्योत्पत्तिर्विरुध्येत न वै कारणसत्तया। यस्मिन् सत्येव यद्भावः तत्तस्य कार्यमितरत् कारणम् इति क्षणिकत्वे न संभवत्येव सहोत्पत्ति- 5 प्रसङ्गात् कुतः सन्तानवृत्तिः।" [सिद्धिवि० पृ० १६०, ३२६ ]

**पृ० १३. पं० ५. 'ब्रह्मवादस्तदाभासः'**–"निराकृतविशेषस्तु सत्ताद्वैतपरायणः। तदाभासः समाख्यातः सद्भिर्दृष्टेष्टबाधनात् ॥" [ तत्त्वार्थश्लो० पृ० २७० ] नयविव० श्लो० ६८। प्रमेयक० पृ० २०५ B. न्यायावता०टी० पृ०८५। प्रमाणनय० ७।१५–२१। जैनतर्कभा० पृ० २४।

**पृ० १३. पं० ११. 'नैगमः'**–"णेगेहि माणेहिं मिणइत्ति णेगमस्स य निरुत्ती। 10 सेसाणं पि नयाणं लक्खणमिणमो सुणह वोच्छं ॥" [ अनुयोग० ४ द्वा० ] आव० नि० गा० ७५५। विशेषा० गा० २६८२। "निगमेषु येऽभिहिताः शब्दास्तेषामर्थः शब्दार्थपरिज्ञानं च देशसमग्राही नैगमः।...आहच–नैगमशब्दार्थानामेकानेकार्थनयगमापेक्षः। देशसमग्राही व्यवहारी नैगमो ज्ञेयः ॥" [ तत्त्वार्थाधि० भा० १।३५ ] तत्त्वार्थहरि०, तत्त्वार्थसिद्ध० १।३५। "अभिनिर्वृत्तार्थसंकल्पमात्रग्राही नैगमः।" [ सर्वार्थसि० १।३३ ] राजवा० १।३३। "यदस्ति न 15 तद्द्वयमतिलङ्घ्य वर्त्तत इति नैकं गमो नयः संग्रहासंग्रहस्वरूपद्रव्यार्थिको नैगम इति यावत्।" [धवलाटी० सत्प्ररू०] "तत्र संकल्पमात्रस्य ग्राहको नैगमो नयः। यद्वा नैकं गमो योऽत्र स सतां नैगमो मतः। धर्मयोः धर्मिणोर्वापि विवक्षा धर्मधर्मिणोः ॥" पर्यायनैगमादि-भेदेन नवविधो नैगमः। [ तत्त्वार्थश्लो० पृ० २६९ ] नयविव० श्लो० ३३–३७। प्रमेयक० पृ० २०५ A. सन्मति० टी० पृ० ३१०। नयचक्र गा० ३३। तत्त्वार्थसार पृ० १०७। "धर्मयोः धर्मिणोः 20 धर्मधर्मिणोश्च प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकं गमो नैगमः।" [ प्रमाणनय ७।७ ] स्या० मं० पृ० ३११। जैनतर्कभा० पृ० २१।

**पृ० १३. पं० ११. 'नैगमाभास'**–"जं सामन्नविसेसे परोप्परं वत्थुओ य सो भिन्ने। मन्नइ अच्चन्तमओ मिच्छद्दिट्ठी कणादोव्व ॥" [ विशेषा० गा० २६९० ] "तयोरत्यन्त-भेदोक्तिरन्योऽन्यं स्वाश्रयादपि। ज्ञेयो व्यंजनपर्यायनैगमाभो विरोधतः ॥" [ तत्त्वार्थश्लो० पृ० 25 २७० ] नयविव० श्लो० ६३। प्रमेयक० पृ० २०५ A. न्यायावता० टी० पृ० ८२। प्रमाणनय० ७।११। जैनतर्कभा० पृ० २४।

**पृ० १३. पं० १५. 'वृत्तिविरोधात्'**–तुलना–"वृत्तिश्च कृत्स्नांशविकल्पतो न...।" [ युक्त्यनुशा० श्लो० ५५ ] "एकस्यानेकवृत्तिर्न भागाभावाद्बहूनि वा। भागित्वाद्वास्य नैकत्वं दोषो वृत्तेरनार्हते ॥" [ आप्तमी० श्लो० ६२ ] अष्टश०, अष्टसह० पृ० २१४। "तस्य तेषु 30 सर्वात्मनाऽन्यथा वा वृत्त्ययोगो बाधकं प्रमाणम्......।" [ वादन्यायटी० पृ० ३० ] "यद्वा सर्वात्मना वृत्तावनेकत्वं प्रसज्यते। एकदेशेन चानिष्टा नैको वा न क्वचिच्च सः ॥" [ तत्त्वसं० पृ० २०३ ] "यदि सर्वेषु कायोऽयमेकदेशेन वर्त्तते। अंशा अंशेषु वर्त्तन्ते स च कुत्र स्वयं स्थितः ॥ सर्वात्मना चेत् सर्वत्र स्थितः कायः करादिषु। कायास्तावन्त एव स्युर्यावन्तस्ते करादयः ॥" [ बोधिचर्याव० पृ० ४९५ ] 35

**पृ० १३. पं० १९. 'स्वतोऽर्थाः'**–"सत्ताजोगादसओ सओ व सत्तं हवेज्ज दव्वस्स। असओ न खपुप्फस्स व सओ व किं सत्तया कज्जं ॥" [ विशेषा० गा० २६९४ ]

उद्धृतेयं कारिका-सूत्रकृतांगशी० पृ० २२७ A. ।

**पृ० १४. पं० ९. 'गुणानां परमं'**–कारिकेयं निम्नग्रन्थेषु समुद्धृताऽस्ति–"तथा च शास्त्रानुशासनम्–गुणानां···।" [योगभा० ४।१३] "षष्ठितन्त्रशास्त्रस्यानुशिष्टिः–गुणानां···" [योगभा० तत्त्ववै० ४।१३] योग० भास्वती, पात० रह० ४।१३। "भगवान् वार्षगण्यः–गुणानां··।" 5 [शां० भा० भामती पृ० ३५२] नयचक्रवृ० पृ० ४३ A. तत्त्वोपप्लव० पृ० ८० । "गुणानां सुमहद्रूपम्···" [प्रमाणवार्तिकालं परि० ४ पृ० ३३] अष्टसह० पृ० १४४ । सिद्धिवि० टी० पृ० ७४B.

**पृ० १४. पं० ११. 'समवायेन'**–"पटस्तन्तुष्विवेत्यादिशब्दाश्चेमे स्वयंकृताः । शृङ्गं गवीति लोके स्यात् शृङ्गे गौरित्यलौकिकम् ॥" [ प्रमाणवा० १।३५० ] "वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिका मतिः । शिलाख्यपरिशिष्टांगनैरन्तर्योपलम्भनात् ॥ तौ पुनस्ता-10 स्विति ज्ञानं लोकातिक्रान्तमुच्यते ।" [ तत्त्वसं० पृ० २६७ ]

**पृ० १४. पं० १७. 'नयः'**–"वच्चइ विणिच्छिअत्थं ववहारो सव्वदव्वेसु ।" [अनुयोग० ४ द्वा०] आव० नि० गा० ७५६ । विशेषा० गा० २७०८ । "लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः···आह च-लोकोपचारनियतं व्यवहारं विस्तृतं विद्यात् ।" [ तत्त्वार्थाधि० भा० १।३५ ] तत्त्वार्थहरि०, तत्त्वार्थसिद्ध० १।३५ । "संग्रहनयाक्षिप्तानामर्थानां 15 विधिपूर्वकमवहरणं व्यवहारः।" [सर्वार्थसि० १।३३] राजवा० १।३३ । धवलाटी० सत्प्ररू० । तत्त्वार्थश्लो० पृ० २७१ । नयविव० श्लो० ७४ । प्रमेयक० पृ० २०५ B. सन्मति० टी० पृ० ३१०। नयचक्र गा० ३५ । तत्त्वार्थसार पृ० १०७ । प्रमाणनय० ७।२३। स्या० मं० पृ० ३११ । जैनतर्कभा० पृ० २२ ।

**पृ० १४. पं० १७. 'दुर्नयः'**–"कल्पनारोपितद्रव्यपर्यायप्रविभागभाक् । प्रमाण-20 बाधितोऽन्यस्तु तदाभासोऽवसीयताम् ॥" [तत्त्वार्थश्लो० पृ० २७१] नयविव० श्लो० ७६। प्रमेयक० पृ० २०५ B. न्यायावता० टी० पृ० ८६ । प्रमाणनय० ७।२५, २६ । जैनतर्कभा० पृ० २४ ।

**पृ० १४. पं० २८ 'ऋजुसूत्र'**–"पच्चुप्पन्नग्गाही उज्जुसुओ णयविही मुणेअव्वो।" [अनुयोग० ४ द्वा०] आव० नि० गा० ७५७। विशेषा० गा० २७१८। "सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः······। आह च-साम्प्रतविषयग्राहकमृजुसूत्रनयं समासतो विद्यात् ।" 25 [तत्त्वार्थाधि० भा० १।३५] तत्त्वार्थहरि०, तत्त्वार्थसिद्ध० १।३५। "ऋजुं प्रगुणं सूत्रयति तन्त्रयत इति ऋजुसूत्रः।" [सर्वार्थसि० १।३३] "सूत्रपातवद् ऋजुसूत्रः।" [राजवा० १।३३] "ऋजुं प्रगुणं सूत्रयति नयत इति ऋजुसूत्रः। सूत्रपातवद् ऋजुसूत्र इति।" नयचक्रवृ० पृ० ३५४B.] धवलाटी० सत्प्ररू० । "ऋजुसूत्रं क्षणध्वंसि वस्तुसत्सूत्रयेदृजु । प्राधान्येन गुणीभावाद् द्रव्यस्यानर्पणात् सतः ॥" [ तत्त्वार्थश्लो० पृ० २७१ ] नयविव० श्लो० ७७ । प्रमेयक० पृ० २०५B. 30 सन्मति० टी० पृ० ३११ । नयचक्रगा० ३८ । तत्त्वार्थसार पृ० १०७ । प्रमाणनय० ७।२८। स्या० मं० पृ० ३१२ । जैनतर्कभा० पृ० २२ ।

**पृ० १५. पं० ४. 'दुर्नयः'**–"निराकरोति यद् द्रव्यं बहिरन्तश्च सर्वदा। स तदाभोऽभिमन्तव्यः प्रतीतरेपलापतः ॥" [तत्त्वार्थ श्लो० पृ० २७१] नयविव० श्लो०७८। प्रमेयक० पृ० २०६A. न्यायावता० टी० पृ० ८८ । प्रमाणनय० ७।३०,३१ । जैनतर्कभा० पृ० २४ ।

35 **पृ० १५. पं० ७. 'शब्दः'**–"इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो ।" [अनुयोग० ४ द्वा०] आव० नि० गा० ७५७ । विशेषा० गा० २७१८ । "यथार्थाभिधानं शब्दः··· आह च-विद्याद्यथार्थशब्दं विशेषितपदं तु शब्दनयम् ।" [तत्त्वार्थाधि० भा० १।३५] तत्त्वार्थहरि०,

तत्त्वार्थसिद्ध० १।३५। "लिंगसंख्यासाधनादिव्यभिचारनिवृत्तिपरः शब्दः।" [सर्वार्थसि० १।३३]
राजवा० १।३३। "शब्दप्रष्ठतोऽर्थग्रहणप्रवणः शब्दनयः, लिङ्गसंख्याकालकारकपुरुषोपग्रहव्य-
भिचारनिवृत्तिपरत्वात्।" [धवलाटी० सत्प्ररू०] "कालादिभेदतोऽर्थस्य भेदं यः प्रतिपादयेत्।
सोऽत्र शब्दनयः शब्दप्रधानत्वादुदाहृतः॥" [तत्त्वार्थश्लो० पृ० २७२] नयविव० श्लो० ८४।
प्रमेयक० पृ० २०६ A. सन्मति० टी० पृ० ३१२। नयचक्र गा० ४०। तत्त्वार्थसार पृ० १०७। 5
प्रमाणनय० ७।३२,३३। स्या० मं० पृ० ३१३। जैनतर्कभा० पृ० २२।

**पृ० १५. पं० ८. 'अभिरूढ'**–"वत्थूओ संकमणं होइ अवत्थू नए समभिरूढे।"
[अनुयोग० ४ द्वा०] आव० नि० गा० ७५८। "सत्स्वर्थेष्वसङ्क्रमः समभिरूढः।" [तत्त्वार्थाधि०
भा० १।३५] तत्त्वार्थहरि०, तत्त्वार्थसिद्ध० १।३५। "जं जं सण्णं भासइ तं तं चिय समभिरोहए
जम्हा। सण्णंतरत्थविमुहो तओ तओ समभिरूढोत्ति॥" [विशेषा० गा० २७२७] "नानार्थ- 10
समभिरोहणात् समभिरूढः।...अथवा यो यत्राभिरूढः स तत्र समेत्याभिमुख्येनारोहणात्
समभिरूढः।" [सर्वार्थसिद्ध० १।३३] राजवा० १।३३। धवलाटी० सत्प्ररू०। "समभिरूढः एवं
मत्त्वैकीभावेन आभिमुख्येन एक एव रूपादिरर्थ एवेति या या संज्ञा नानां (?) समभिरूढः।"
[नयचक्रवृ० पृ० ४८३ A.] "पर्यायशब्दभेदेन भिन्नार्थस्याधिरोहणात्। नयः समभिरूढः स्यात्
पूर्ववच्चास्य निश्चयः॥" [तत्त्वार्थश्लो० पृ० २७३] नयविव० श्लो० ९२। प्रमेयक० पृ० २०६ A. 15
सन्मति० टी० पृ० ३१३। नयचक्र गा० ४१। तत्त्वार्थसार पृ० १०७। प्रमाणनय० ७।३६। स्या० मं०
पृ० ३१४। जैनतर्कभा० पृ० २२।

**पृ० १५. पं० ८. 'इत्थम्भूतः'**–"वंजण अत्थ तदुभयं एवंभूओ विसेसेई।"
[अनुयोग० ४ द्वा०] आव० नि० गा० ७५८। "व्यञ्जनार्थयोरेवम्भूतः।" [तत्त्वार्थाधि० भा०
१।३५] तत्त्वार्थ हरि०, तत्त्वार्थसिद्ध० १।३५। "येनात्मना भूतस्तेनैवाध्यवसाययति इत्येवम्भूतः। 20
अथवा येनात्मना येन ज्ञानेन भूतः परिणतः तेनैवाध्यवसाययति।" [सर्वार्थसि० १।३३]
राजवा० १।३३। "वंजणमत्थेणत्थं च वंजणेणोभयं विसेसेइ। जह घटसद्दं चेष्टावया तहा
तं पि तेणेव॥" [विशेषा० गा० २७४३] "एवं भेदे भवनादेवम्भूतः। न पदानां समासोऽस्ति
भिन्नकालवर्तिनां भिन्नार्थवर्तिनां चैकत्वविरोधात्। न परस्परव्यपेक्षाप्यस्ति वर्णार्थसंख्याका-
लादिभिर्भिन्नानां पदानां भिन्नपदापेक्षाऽयोगात्। ततो न वाक्यमप्यस्तीति सिद्धम्। ततः 25
पदमेकार्थस्यैव वाचकमित्यध्यवसाय एवम्भूतनयः।" [धवलाटी० सत्प्ररू०] "तत्क्रिया-
परिणामोऽर्थस्तथैवेति विनिश्चयात्। एवम्भूतेन नीयेत क्रियान्तरपराङ्मुखः॥" [तत्त्वार्थ-
श्लो० पृ० २७४] नयविव० श्लो० ९४। प्रमेयक० पृ० २०६ B. सन्मति० टी० पृ० ३१४। नयचक्रगा०
४३। तत्त्वार्थसार पृ० १०७। प्रमाणनय० ७।४०। स्या० मं० पृ० ३१५। जैनतर्कभा० पृ० २३।

**पृ० १५. पं० ९. 'कालभेदात्तावत्'**–तुलना–प्रमाणनय० ७।३३। जैनतर्क- 30
भा० पृ० २२।

**पृ० १६. पं० ५. 'तदुत्पत्तिसारूप्य'**–तुलना–"तत्सारूप्यतदुत्पत्ती यदि संवेद्य-
लक्षणम्। संवेद्यं स्यात्समानार्थं विज्ञानं समनन्तरम्॥" [प्रमाणवा० ३।३२३] प्रमाणनय० ४।४७।

**पृ० १६. पं० १८. 'स्त्यायत्यस्यां'**–"संस्त्यानप्रसवौ लिंगमास्थेयौ स्वकृतान्ततः।
...अधिकरणसाधना लोके स्त्री स्त्यायत्यस्यां गर्भ इति। कर्तृसाधनश्च पुमान् सूते पुमानिति। 35
...'संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयविवक्षायां नपुंसकमिति।" [पात०
महा० ४।१।३]

इति प्रमाणनयप्रवेशः॥



**पृ० १७. पं० ३. 'दुर्नय'**–"एवं शब्दादयोऽपि सर्वथा शब्दाव्यतिरेकमर्थं समर्थयन्तो दुर्नयाः।" [न्यायावता० टी० पृ० ९०।] "तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः।" [प्रमाणनय० ७।३४] जैनतर्कभा० पृ० २४। "पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणः तदाभासः।" [प्रमाणनय० ७।३८] जैनतर्कभा० पृ० २४। "क्रियानाविष्टं वस्तु शब्दवाच्यतया 5 प्रतिक्षिपंस्तु तदाभासः।" [प्रमाणनय० ७।४२] जैनतर्कभा० पृ० २४।

**पृ० १८. पं० ८. 'ज्ञानं प्रमाण'**–तुलना–प्रमाणसं० पृ० १२७। "उक्तञ्च–ज्ञानं प्रमाणमित्याहुरुपायो···" [धवलाटी० सत्प्ररू०]

**पृ० १८. पं० २७. 'तिमिराशुभ्रमण'**–"तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रमं ज्ञानं प्रत्यक्षम्। तिमिरमक्ष्णोर्विप्लवः, इन्द्रियगतमिदं विभ्रमकारणम्। आशुभ्रमण- 10 मलातादेः, मन्दं हि भ्राम्यमाणेऽलातादौ न चक्रभ्रान्तिरुत्पद्यते तदर्थमाशुग्रहणेन विशेष्यते भ्रमणम्। एतच्च विषयगतं विभ्रमकारणम्। नावा गमनं नौयानम्। गच्छन्त्यां नावि स्थितस्य गच्छद्वृक्षादिभ्रान्तिरुत्पद्यते इति यानग्रहणम्। एतच्च बाह्याश्रयस्थितं विभ्रमकारणम्। संक्षोभो वातपित्तश्लेष्मणाम्। वातादिषु हि क्षोभं गतेषु ज्वलितस्तम्भादिभ्रान्तिरुत्पद्यते। एतच्चाध्यात्मगतं विभ्रमकारणम्।" [न्यायवि० टी० पृ० १६]

15 **पृ० १९. पं० १. 'इन्द्रियमनसी'**–"इन्द्रियमनसी विज्ञानकारणमिति वचनात्।" [न्यायवि० वि० पृ० ३२ A.] "तस्मादिन्द्रियमनसी विज्ञानस्य कारणं नार्थोऽपीत्यकलंकैरपि··" [तत्त्वार्थ श्लो० पृ० ३३०]

**पृ० १९. पं० ११. 'आलोकोऽपि'**–तुलना–"नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत्। तदन्वयव्यतिरेकानुविधानाभावाच्च केशोण्डुकज्ञानवन्नक्तञ्चरज्ञानवच्च।" [परीक्षामु० 20 २।६, ७] प्रमाणमी० १।१।२५।

**पृ० १९. पं० १६. 'तमो निरोधि'**–"उद्धृतेयम्–सिद्धिवि० टी० पृ० १८७ B. "तमोनिरोधे वीक्षन्ते तमसा नावृतं परम्। घटादिकम्···" [सन्मति० टी० पृ० ५४४]

**पृ० १९. पं० २४. 'मलविद्धमणि'**–उद्धृतेयम्–सिद्धिवि० टी० १९३ A. आव० नि० मलय० पृ० १७। इष्टोपदेशटी० पृ० ३०। कर्मग्रंथटी० पृ० ८।

25 तुलना–"मलावृतमणेर्व्यक्तिर्यथाऽनेकविधेक्ष्यते। कर्मावृतात्मनस्तद्वद्योग्यता विविधा न किम्॥" [तत्त्वार्थश्लो० पृ० १९१]

**पृ० २०. पं० ६. 'न तज्जन्म'**–पूर्वपक्षः–"तस्माच्चक्षुश्च रूपञ्च प्रतीत्योदेति नेत्रधीः (३।१९०) भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः। हेतुत्वमेव युक्तिज्ञाः ज्ञानाकारार्पणक्षमम्॥ कार्यं ह्यनेकहेतुत्वेप्यनुकुर्वदुदेति यत्। तत्तेनाप्यत्र तद्रूपं गृहीतमिति 30 चोच्यते॥ (३।२४७–४८) अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम्।···तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता।" [प्रमाणवा० ३।३०५]

तुलना–"तत्पुनः तज्जन्मसारूप्यादिलक्षणं समानार्थनानैकसन्तानेषु संभवात् व्यभिचरति, तदध्यवसायहेतुत्वं च। तथा चार्थग्रहणे न कश्चिद्व्याघातः। अनागतस्य सम्प्रत्यभावेऽपि विषयतोपपत्तेः प्रत्यक्षस्यापि अविसंवादः।" [सिद्धिवि० पृ० ५६६–६८]

35 **पृ० २. पं० १६. 'स्वहेतुजनितो'**–उद्धृतेयम्–"स्वहेतुजनितोऽप्यर्थः स्वयं ग्राह्यो

यथा मतः। तथा ज्ञानं स्वहेतूत्थं स्वयं तद्ग्राहकं मतम् ॥" [ सिद्धिवि० टी० पृ० १० B. ] न्यायवि० वि० पृ० ३३ A.

**पृ० २१. पं० १४. 'उपयोगौ'**–"तदुक्तम्–उपयोगौ श्रुतस्य द्वौ प्रमाणनयभेदतः।" [ सिद्धिवि० टी० पृ० ४ A. ]

**पृ० २१. पं० १६ 'स्याद्वादः'**–"स च तिङन्तप्रतिरूपको निपातः। तस्याने- 5
कान्तविधिविचारादिषु बहुष्वर्थेषु संभवत्सु इह विवक्षावशादनेकान्तार्थो गृह्यते।" [ राजवा० पृ० १८१ ] "निर्दिश्यमानधर्मव्यतिरिक्ताशेषधर्मान्तरसंसूचकेन स्याता युक्तो वादोऽभिप्रेतधर्म-वचनं स्याद्वादः।" [ न्यायावता० टी० पृ० ९३ ]

**पृ० २१. पं० १७. 'ज्ञानदर्शन'**–तुलना–"स्यात्पदप्रयोगात्तु ये ज्ञानदर्शनसुखा-
दिरूपा असाधारणा ये चामूर्त्तत्वासंख्यातप्रदेशसूक्ष्मत्वलक्षणा धर्मा धर्माधर्मगगनास्तिकाय- 10
पुद्गलैः साधारणाः येऽपि च सत्त्वप्रमेयत्वधर्मित्वगुणित्वादयः सर्वपदार्थैः साधारणास्तेऽपि च प्रतीयन्ते।" [ आव० नि० मलय० पृ०१७० A. ]

**पृ० २१. पं० २०-२१. 'साकल्य···वैकल्य'**–सकलादेश–विकलादेशयोः स्वरूपे प्रायः ऐकमत्येऽपि केचिदकलंकाद्याचार्याः सर्वानपि भंगान् एकधर्ममुखेन अशेषधर्मात्मकवस्तु-
प्रतिपादनकाले सकलादेशरूपान् एकधर्मप्रधानतया अन्यधर्मांश्च गौणतयाऽभिधानसमये 15
विकलादेशात्मकान् स्वीकुर्वन्ति। केचिच्च सिद्धसेनगणिप्रभृतयः सदसदवक्तव्यरूपं भंगत्रयम् सकलादेशत्वेन शिष्टांश्च चतुरो भंगान् विकलादेशरूपेण मन्यन्ते। तथा च तेषां ग्रन्थाः—

"तथा चोक्तम्–सकलादेशः प्रमाणाधीनो विकलादेशो नयाधीन इति।" [ सर्वार्थसि० १।६ ] "तत्र यदा यौगपद्यं तदा सकलादेशः।" एकगुणमुखेनाशेषवस्तुरूपसंग्रहात् सकलादेशः।"
···तत्रादेशवशात् सप्तभंगी प्रतिपदम्। ···यदा तु क्रमं तदा विकलादेशः (पृ० १८०) निरंश- 20
स्यापि गुणभेदादंशकल्पना विकलादेशः।···तत्रापि तथा सप्तभंगी।" [ राजवा० पृ० १८१ ] नयचक्रवृ० पृ० ३४८ B. "सकलादेशो हि यौगपद्येनाशेषधर्मात्मकं वस्तु कालादिभिरभेदवृत्त्या प्रतिपादयति अभेदोपचारेण वा, तस्य प्रमाणाधीनत्वात्। विकलादेशस्तु क्रमेण भेदोपचारेण भेदप्राधान्येन वा।" [ तत्त्वार्थश्लो० पृ० १३६ ] प्रमेयक० पृ० २०७ A. सप्तभंगि० पृ० ३२।
प्रमाणनय० ४।४४, ४५। जैनतर्कभा० पृ० २०। 25

"इयं सप्तभंगी प्रतिभंगं सकलादेशस्वभावा विकलादेशस्वभावा च।" [ प्रमाणनय० ४। ४३ ] जैनतर्कभा० पृ० २०। गुरुतत्त्ववि० पृ० १५ A. शास्त्रवा० टी० पृ० २५४ A. "यदा मध्य-स्थभावेनार्थित्ववशात् किंचिद्धर्मं प्रतिपादयिषवः शेषधर्मस्वीकरणनिराकरणविमुखया धिया वाचं प्रयुञ्जते तदा तत्त्वचिन्तका अपि लौकिकवत् सम्मुग्धाकारतयाचक्षते–यदुत जीवोऽस्ति
कर्त्ता प्रमाता भोक्तेत्यादि, अतः सम्पूर्णवस्तुप्रतिपादनाभावात् विकलादेशोऽभिधीयते नयमतेन 30
संभवद्धर्माणां दर्शनमात्रमित्यर्थः।·· यदा तु प्रमाणव्यापारमविकलं परामृश्य प्रतिपादयितु-मभिप्रयन्ति तदाङ्गीकृतगुणप्रधानभावा अशेषधर्मसूचककथञ्चित्पर्यायस्याच्छब्दभूषितया साव-धारणया वाचा दर्शयन्ति 'स्यादस्त्येव जीवः' इत्यादिकया, अतोऽयं स्याच्छब्दसंसूचिताभ्य-
न्तरीभूतानन्तधर्मकस्य साक्षादुपन्यस्तजीवशब्दक्रियाभ्यां प्रधानीकृतात्मभावस्यावधारणव्य-
वच्छिन्नतदसंभवस्य वस्तुनः सन्दर्शकत्वात् सकलादेश इत्युच्यते। प्रमाणप्रतिपन्नसम्पूर्णार्थ- 35
कथनमिति यावत्। तदुक्तम्–सा ज्ञेयविशेषगतिर्नयप्रमाणात्मिका भवेत्तत्र। सकलग्राहि तु मानं विकलग्राही नयो ज्ञेयः॥" [ न्यायावता० टी० पृ० ९२ ]

"एवमेते त्रयः सकलादेशा भाष्येणैव विभाविताः संग्रहव्यवहारानुसारिण आत्मद्रव्ये। सम्प्रति विकलादेशाश्चत्वारः पर्यायनयाश्रया वक्तव्यास्तत्प्रतिपादनार्थमाह भाष्यकारः–देशादेशेन विकल्पयितव्यमिति······विवक्षाधत्ता च वचसः सकलादेशता विकलादेशता च द्रष्टव्या। द्रव्यार्थजात्यभेदात् तु सर्वद्रव्यार्थभेदानैवैकं द्रव्यार्थं मन्यते, यदा पर्यायजात्यभेदांश्चैकं पर्यायार्थं सर्वपर्यायभेदान् प्रतिपद्यते, तदा त्वविवक्षितस्वजातिभेदत्वात् सकलं वस्तु एकद्रव्यार्थाभिन्नम् एकपर्यायार्थभेदोपचरितं तद्विशेषैकाभेदोपचरितं वा तन्मात्रमेकमद्वितीयांशं ब्रुवन् सकलादेशः स्यान्नित्य इत्यादिस्त्रिविधोऽपि नित्यत्वानित्यत्वयुगपद्भावैकत्वरूपैकार्थाभिधायी। यदा तु द्रव्यपर्यायसामान्याभ्यां तद्विशेषाभ्यां वा वस्तुन एकत्वं तदतदात्मकं समुच्चयाश्रयं चतुर्थविकल्पे स्वांशयुगपद्वृत्तं क्रमवृत्तं च पञ्चमषष्ठसप्तमेपूच्यते तथाविवक्षावशात् तदा तु तथा प्रतिपादयन् विकलादेशः।" [ तत्त्वार्थभा० टी० पृ० ४१६ ]

"तत्र विवक्षाकृतप्रधानभावसदाद्येकधर्मात्मकस्यापेक्षितापराशेषधर्मक्रोडीकृतस्य वाक्यार्थस्य स्यात्कारपदलाञ्छितवाक्यात् प्रतीतेः स्यादस्ति घटः स्यान्नास्ति घटः स्यादवक्तव्यो घटः इत्येते त्रयो भङ्गा सकलादेशाः।·· विवक्षाविरचितद्वित्रिधर्मानुरक्तस्य स्यात्कारपदसंसूचितसकलधर्मस्वभावस्य धर्मिणो वाक्यार्थरूपस्य प्रतिपत्तेः चत्वारो वक्ष्यमाणका विकलादेशाः–स्यादस्ति च नास्ति घट इति प्रथमो विकलादेशः, स्यादस्ति चावक्तव्यश्च घट इति द्वितीयः, स्यान्नास्ति चावक्तव्यश्च घट इति तृतीयः, स्यादस्ति च नास्ति चावक्तव्यश्च घट इति चतुर्थः।" [सन्मति० टी० पृ० ४४६ ]

उ० यशोविजयैः यद्यपि शास्त्रवा० टी०-जैनतर्कभा०-गुरुतत्वविनिश्चयादौ सर्वेषु भंगेषु सकलादेशविकलादेशोभयरूपता सिद्धान्तीकृता। तथापि तैः अष्टसहस्रीविवरणे 'आद्याः त्रयो भंगाः सकलादेशाः शिष्टाश्च चत्वारो विकलादेशाः' इत्यपि कृतान्तीकृतम्। तथाहि–"··· किन्त्वाद्यभङ्गद्वयघटकनिजपररूपयोः शृंगग्राहिकया व्यवस्थापन एव नयभेदो मतभेदो वोपयुज्यते, तृतीयभंगस्त्ववक्तव्यत्वलक्षणः ताभ्यां युगपदादिष्टाभ्यां तद्भेदादनेकभेद इत्येते त्रयो निरवयवद्रव्यविषयत्वात् सकलादेशरूपाः, सदसत्त्व-सदवक्तव्यादयश्चत्वारस्तु चरमाः सावयवद्रव्यविषयत्वाद्विकलादेशरूपाः, देशभेदं विनैकत्र तु क्रमेणापि सदसत्त्वविवक्षा सम्प्रदायविरुद्धत्वात् नोदेतीति न निरवयवद्रव्यविषयत्वमेषामित्यस्मदभिमतोक्तमेव युक्तमिति मन्तव्यम्।" [ अष्टसह० विव० पृ० २०८ B. ] शास्त्रवार्त्ताटीकायाम् अयमेव सिद्धान्तः 'केचित्तु' इति कृत्वा निर्दिष्टः। तथाहि–"केचित्तु–अनन्तधर्मात्मकवस्तुप्रतिपादकत्वाविशेषेऽपि आद्यास्त्रय एव भंगा निरवयवप्रतिपत्तिद्वारा सकलादेशाः अग्रिमास्तु चत्वारः सावयवप्रतिपत्तिद्वारा विकलादेशाः इति प्रतिपन्नवन्तः।" [शास्त्रवा० टी० पृ० २५४ B. ]

**पृ० २१. पं० २५. 'स्याज्जीव एव'**–मलयगिर्याचार्याः स्यात्पदप्रयोगं प्रमाणवाक्ये एव उररीकुर्वन्ति। एतन्मतानुसारेण सर्वेषां नयानां मिथ्यारूपत्वात्। अतस्तैः 'स्यात्पदलाञ्छितो नयः सम्यग्' इत्यकलङ्कमतस्य समालोचना कृता। समन्तभद्र-सिद्धसेनदिवाकरादिभिः उपज्ञातम् अकलंकमतं हेमचन्द्रादयः समर्थयन्ति। ( द्रष्टव्यम्–टिप्पणं पृ० १४२ पं० १३ )

मलयगिरिकृता समालोचना इत्थम्–"नयचिन्तायामपि च ते दिगम्बराः स्यात्पदप्रयोगमिच्छन्ति तथा चाकलङ्क एव प्राह–'नयोऽपि तथैव सम्यगेकान्तविषयः स्यात्' इति। अत्र टीकाकारेण व्याख्या कृता–नयोऽपि नयप्रतिपादकमपि वाक्यं न केवलं प्रमाणवाक्यमित्यपिशब्दार्थः, तथैव स्यात्पदप्रयोगप्रकारेणैव सम्यगेकान्तविषयः स्यात्, यथा स्यादस्त्येव जीव इति। स्यात्पदप्रयोगाभावे तु मिथ्यैकान्तगोचरतया दुर्नय एव स्यादिति। तदेतदयुक्तम्–

प्रमाणनयविभागाभावप्रसक्तेः; तथाहि–'स्याज्जीव एव' इति किल प्रमाणवाक्यम् 'स्यादस्त्येव जीवः' इति नयवाक्यम् । एतच्च द्वयमपि लघीयस्त्रय्यलङ्कारे साक्षादकलङ्केनोदाहृतम्, अत्र चोभयत्राप्यविशेषः, तथाहि–स्याज्जीव एवेत्यत्र जीवशब्देन प्राणधारणनिबन्धना जीवशब्द-वाच्यताप्रतिपत्तिः, अस्तीत्यनेनोद्भूताकारशब्दप्रयोगादजीवशब्दवाच्यतानिषेधः, स्याच्छब्द-प्रयोगतोऽसाधारणसाधारणधर्माक्षेपः । 'स्यादस्त्येव जीवः' इत्यत्र जीवशब्देन जीवशब्द- 5 वाच्यताप्रतिपत्तिः, अस्तीत्यनेनोद्भूतविवक्षितास्तित्वावगतिः, एवकारप्रयोगात्तु यदाशंकितं सकलेऽपि जगति जीवस्य नास्तित्वं तद्व्यवच्छेदः, स्यात्पदप्रयोगात् साधारणासाधारणप्रति-पत्तिरित्युभयत्राप्यविशेष एव ।" [ आव० नि० मलय० पृ० ३७१ A. ]

उ० यशोविजयैः सर्वमेतत् मलयगिरिमतं पूर्वपक्षीकृत्य इत्थं समाहितम्–"अत्रेदमव-धेयम्–यो नाम नयो नयान्तरापेक्षस्तस्य प्रमाणान्तर्भावे व्यवहारनयः प्रमाणं स्यात्, तस्य तपः- 10 संयमप्रवचनग्राहकत्वेन संयमग्राहिनिश्चयविषयकत्वेन तत्सापेक्षत्वात् । शब्दनयानाञ्च निक्षेपच-तुष्टयाभ्युपगन्तॄणां भावाभ्युपगन्तृशब्दनयविषयविषयकत्वेन तत्सापेक्षत्वात्प्रमाणत्वापत्तिः । नयान्तरवाक्यसंयोगेन सापेक्षत्वे च ग्राह्ये स्यात्पदप्रयोगेण सप्रतिपक्षनयद्वयविषयावच्छेदकस्यैव लाभात् तेनानन्तधर्मात्मकत्वापरामर्शः । न चेदेवं तदानेकान्ते सम्यगेकान्तप्रवेशानुपपत्तिः, अव-च्छेदकभेदं विना सप्रतिपक्षविषयसमावेशस्य दुर्वचत्वात् । इष्यते चायम्, यदाह महामतिः– 15 'भयणा वि हु भइयव्वा जह भयणा भसइ सव्वदव्वाइं । एवं भयणानियमो वि होइ समयाविरा-हणया ।।' ( सन्मति० गा० ३।२७ ) इति । समन्तभद्रोऽप्याह–'अनेकान्तोऽप्यनेकान्तः प्रमाणन-यसाधनः । अनेकान्तः प्रमाणात्ते तदेकान्तोऽर्पितान्नयात् ।।' ( बृहत्स्वय० श्लो० १०३) इति । पारमर्षेऽपि–'इमा णं भंते रयणप्पभा पुढवी किं सासया असासया ? गोयमा ! सिय सासया सिय असासया । से केणट्ठेणं भंते ! एवं वुच्चइ । गोयमा ! दव्वट्ठयाए सासया पज्जवट्ठयाए 20 असासया ।' ( भगवतीसू० ) इति प्रदेशे स्यात्पदमवच्छेदकभेदप्रदर्शकतयैव विवृतम्, अत एव स्यादित्यव्ययमनेकान्तद्योतकमेव तान्त्रिकैरुच्यते, सम्यगेकान्तसाधकस्यानेकान्ताक्षेपकत्वात्, न त्वनन्तधर्मपरामर्शकम्, अतो न स्यात्पदप्रयोगमात्राधीनमादेशसाकल्यं येन प्रमाणनयवाक्य-योर्भेदो न स्यात्, किन्तु स्वार्थोपस्थित्यनन्तरमशेषधर्माभेदोपस्थापकविधेयपदवृत्त्यधीनम्, सा च विवक्षाधीनेत्यादेशसाकल्यमपि तथेति नयप्रमाणवाक्ययोरित्थं भेद एव। मलयगिरिपादवचनं 25 तु अप्रतिपक्षधर्माभिधानस्थलेऽवच्छेदकभेदाभिधानानुपयुक्तेन स्यात्पदेन साक्षादनन्तधर्मात्मक-त्वाभिधानात्तत्र प्रमाणनयभेदानभ्युपगन्तृदुर्विदग्धदिगम्बरनिराकरणाभिप्रायेण योजनीयम् ।" [गुरुतत्त्ववि० पृ० १७ B.]

**पृ० २२. पं० १. 'अप्रयुक्तोऽपि'**–"विधौ निषेधेऽन्यत्रापि···" [आव०नि० मलय० पृ० ३६९ B. ] गुरुतत्त्ववि० पृ० १६ A. 30

तुलना–"सोऽप्रयुक्तोऽपि वा तज्ज्ञैः सर्वत्रार्थात् प्रतीयते । यथैवकारोऽयोगादिव्यवच्छे-दप्रयोजनः ।।" [ तत्त्वार्थश्लो० पृ० १३७ ] स्या० रत्ना० पृ० ७१८ । रत्नाकरावता० पृ० ६१ । सप्तभंगि० पृ० ३१ । स्या० मं० पृ० २७९ । नयप्रदीप पृ० ९६ A.

**पृ० २२. पं० ३. 'क्वचित् स्यात्कार'**–तुलना–"अत्रान्यत्रापि इति··· अनुवादा-तिदेशादिवाक्येषु···।" [ आव० नि० मलय० पृ० ३६९ B. ] 35

**पृ० २२. पं० १९. 'लोको हि अर्थाप्त्यनाप्तिषु'**–तुलना– "बुद्धिशब्दप्रमाणत्वं बाह्यार्थे सति नासति । सत्यानृतव्यवस्थैवं युज्यतेऽर्थाप्त्यनाप्तिषु ।।" [आप्तमी० का० ८७ ]

**पृ० २२. पं० २४. 'नयाः सप्त'**–"सत्त मूलणया पण्णत्ता तं जहा–णेगमे, संगहे,

ववहारे, उज्जुसूए, सद्दे, समभिरूढे, एवंभूए।" [स्थाना० ७।१९] अनुयोग० १३६। "नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूताः नयाः।" [तत्त्वार्थसू० १।३३] "नेगमसंग्रहववहारुज्जुसुए होई बोधव्वे। सद्दे य समभिरूढे एवंभूए य मूलनया।।" [आव० नि० गा० ७५४] "नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः। आद्यशब्दौ द्वित्रिभेदौ।" [तत्त्वार्थाधि० १।३४,३५]

5 सिद्धसेनदिवाकरास्तु षड् नयान् स्वीकुर्वन्ति, तन्मतानुसारेण नैगमस्य संग्रहव्यवहारयोरन्तर्भावात्। ( सन्मति० १।४,५ )

**पृ० २३. पं० ९. 'व्यतिरेकः'**–तुलना–"अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहिषादिवत्।" [ परीक्षामु० ४।९ ]

**पृ० २३. पं० १६. 'ततस्तीर्थंकर'**–तुलना–"तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी। दव्वट्ठिओ य पज्जवणओ य सेसा वियप्पासिं।।" [ सन्मति० गा० १।३ ]

10

**पृ० २३. पं० १८. 'न नैगमस्य प्रमाणता'**–तुलना–तत्त्वार्थश्लो० पृ० २६९।

**पृ० २४. पं० ६. 'व्यवहारानु'**–"व्यवहारानुकूल्येन···" [तत्त्वार्थश्लो०पृ०२७१]

तुलना–"प्रामाण्यं व्यवहारेण···।" [ प्रमाणवा० ३।५ ]

**पृ० २४. पं० २३. 'चत्वारोऽर्थ'**–तुलना–"चत्वारोऽर्थाश्रयाः शेषास्त्रयं शब्दतः।"

15 [सिद्धिवि० पृ० ५१७ B.] राजवा० पृ० १८६। "अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता। सद्दप्पहाणमत्थोवसज्जणं सेसया विंति।।" [विशेषा० गा० २७५३] प्रमाणनय० ७।४४,४५। जैनतर्कभा० पृ० २३। नयप्रदीप पृ० १०४ B. "तत्रर्जुसूत्रपर्यन्ताश्चत्वारोऽर्थनया मताः। त्रयः शब्दनयाः शेषाः शब्दवाच्यार्थगोचराः।।" [नयविव० पृ० २६२]

उद्धृतमिदम्"···जीवाद्यर्थविनिश्चयात्।" [आव० नि० मलय० पृ० ३८१B.] सूत्रकृतांग

20 टी० पृ० ३२६A.

**पृ० २५. पं० २९. 'न्यासः'**–"विस्तरेण लक्षणतो विधानतश्चाधिगमार्थं न्यासो निक्षेपः।" [तत्त्वार्थाधि० भा० १।५] "णिच्छए णिण्णए खिवदि त्ति णिक्खेवो। सो वि छव्विहो णामट्ठवणादव्वखेत्तभावमंगलमिदि।" [ धवलाटी० सत्प्ररू० ]

**पृ० २५. पं० २९. 'चतुर्धा'**–"जत्थ य जं जाणेज्जा निक्खेवं निक्खिवे निरवसेसं।

25 जत्थवि अ न जाणेज्जा चउक्कगं निक्खिवे तत्थ।। आवस्सयं चउव्विहं पण्णत्तं। तं जहा– नामावस्सयं ठवणावस्सयं दव्वावस्सयं भावावस्सयं।" [ अनु० सू० ८] "नामस्थापनाद्रव्यभावतस्तन्न्यासः।" [ तत्त्वार्थसू० १।५ ]

मूलाचारे षडावश्यकाधिकारे (गा० १७) सामायिकस्य निक्षेपः नामस्थापनाद्रव्यक्षेत्रकालभावैः षड्विध उक्तः। आवश्यकनिर्युक्तौ (गा० १२९) नामस्थापनाद्रव्यक्षेत्रकालव-

30 चनभावविकल्पात् सप्तविधो निक्षेपः प्ररूपितः।

**पृ० २६. पं० १. 'नाम'**–"नाम संज्ञाकर्म इत्यनर्थान्तरम्।" [ तत्त्वार्थाधि० भा० १।५ ] "अतद्गुणे वस्तुनि संव्यवहारार्थं पुरुषाकारान्नियुज्यमानं संज्ञाकर्म नाम।" [ सर्वार्थसि० १।५ ] राजवा० पृ० २०। तत्त्वार्थश्लो० पृ० ९८। "पज्जायाणभिधेयं ठिअमण्णत्थे तयत्थनिरवेक्खं। जाइच्छिअं च नामं जावदव्वं च पाएणं।।" [ विशेषा० गा० २५] जैनतर्कभा०

35 पृ० २५। "अत्ताभिप्पायकया सन्ना चेयणमचेयणे वा वि। ठवणादी निरविक्खा केवल सन्ना उ नामिंदो।।" [ बृहत्कल्पभा० गा० ११ ] "तत्थ णाममंगलं णामणिमित्तंतरणिरवेक्खा मंगलसण्णा। तत्थ णिमित्तं चउव्विहं जाइ दव्व गुण किरिया चेदि।" [ धवलाटी० सत्प्ररू० ]

**पृ० २६. पं० २. 'स्थापना'**—"यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स्थापनाजीवः देवताप्रतिकृतिवद् इन्द्रो रुद्रः स्कन्दो विष्णुरिति ।" [ तत्त्वार्थाधि० भा० १।५ ] "काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु सोऽयमिति स्थाप्यमाना स्थापना ।" [सर्वार्थसि० १।५ ] राजवा० पृ० २० । "जं पुण तयत्थसुन्नं तयभिप्पाएण तारिसागारं । कीरइ व निरागारं इत्तरमियरं व सा ठवणा ॥" [ विशेषा० गा० २६ ] "सब्भावमसब्भावे ठवणा पुण इंदके- उमाईया। इत्तरमणित्तरा या ठवणा नामं तु आवकहं ॥" [बृहत्कल्पभा० गा० १३] 'सद्भाव- स्थापनया नियमः, असद्भावेन वाऽतद्रूपेति स्थूणेन्द्रवत् ।" [ नयचक्रवृ० पृ० ३८१ A. ] जैनतर्कभा० पृ० २५ । "अहिदणामस्स अण्णस्स सोयमिदिट्ठवणं ठवणा णाम । सा दुविहा- सब्भावासब्भावट्ठवणा चेदि । तत्थ आगारवंतए वत्थुम्मि सब्भावट्ठवणा । तव्विवरीया असब्भावट्ठवणा ।" [धवलाटी० सत्प्ररू०] "वस्तुनः कृतसंज्ञस्य प्रतिष्ठा स्थापना मता । सद्भा- वेतरभेदेन द्विधा तत्त्वाविरोधतः ॥" [ तत्त्वार्थश्लो० पृ० १११ ]

**पृ० २६. पं० ३. 'द्रव्य'**—"द्रव्यजीव इति गुणपर्यायवियुक्तः प्रज्ञास्थापितोऽनादि- पारिणामिकभावयुक्तो जीव उच्यते ।" [ तत्त्वार्थाधि० भा० १।५ ] "गुणैः द्रोष्यते गुणान् द्रोष्यतीति वा द्रव्यम् ।" [ सर्वार्थसि० १।५ ] "अनागतपरिणामविशेषं प्रति गृहीताभिमुख्यं द्रव्यम् । अतद्भवं वा ।" [ राजवा० पृ० २० ] धवलाटी० सत्प्ररू० । तत्त्वार्थश्लो० पृ० १११ । "दव्वे पुण तल्लद्धी जस्सातीता भविस्सते वा वि । जो वावि अणुवजुत्तो इंदस्स गुणे परिकहेइ ॥" [ बृहत्कल्पभा० गा० १४] विशेषा० गा० २८। जैनतर्कभा० पृ० २५। "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥" [ आव० नि० मलय० पृ० ६ B. ]

**पृ० २६. पं० ३. 'भावनिक्षेपः'**—"वर्तमानतत्पर्यायोपलक्षितं द्रव्यं भावः ।" [ सर्वार्थसि० १।५ ] राजवा० पृ० २१। धवलाटी० सत्प्ररू० । तत्त्वार्थश्लो० पृ० ११३। "जो पुण जहत्थजुत्तो सुद्धनयाणं तु एस भाविंदो। इंदस्स वि अहिगारं वियाणमाणो तदुवउत्तो ॥" [ बृहत्कल्पभा० गा० १५ ] "भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रा- दिवदिहेन्दनादिक्रियानुभवात् ॥" [ आव० नि० मलय० पृ० ९ A. ]

**पृ० २६. पं० ४. 'अप्रस्तुतार्था'**—तुलना—"स किमर्थः ? अप्रकृतनिराकरणाय प्रकृतनिरूपणाय च ।" [ सर्वार्थसि० १।५ ] तत्त्वार्थश्लो० पृ० ९८ । "अथ किमिति निक्षेपः क्रियते ? इति चेदुच्यते—त्रिविधाः श्रोतारः अव्युत्पन्नः, अवगताशेषविवक्षितपदार्थः, एकदेश- तोऽवगतविवक्षितपदार्थ इति । तत्र प्रथमोऽव्युत्पन्नत्वान्नाध्यवस्यतीति विवक्षितपदस्यार्थम् । द्वितीयः संशेते कोऽर्थोऽस्य पदस्याधिकृत इति, प्रकृतार्थादन्यमर्थमादाय विपर्यस्यति वा । द्वितीयवत्तृतीयोऽपि संशेते विपर्यस्यति वा । तत्र यद्यव्युत्पन्नः पर्यायार्थिको भवेन्निक्षेपः; अव्युत्प- न्नव्युत्पादनमुखेन अप्रकृतनिराकरणाय । अथ द्रव्यार्थिकः; तद्द्वारेण प्रकृतप्ररूपणायाशे- षनिक्षेपा उच्यन्ते, व्यतिरेकधर्मनिर्णयमन्तरेण विधिनिर्णयानुपपत्तेः । द्वितीयतृतीययोः संशयविनाशायाशेषनिक्षेपकथनम् । तयोरेव विपर्यस्यतोः प्रकृतार्थावधारणार्थं निक्षेपः क्रियते । उक्तं हि—अवगयणिवारट्ठं पयदस्स परूवणाणिमित्तं च। संसयविणासणट्ठं तच्चत्थवधारणट्ठं च ॥" [ धवलाटी० सत्प्ररू० ] उद्धृतमिदं वाक्यम्—जैनतर्कभा० पृ० २५ ।

**पृ० २६. पं० ५. 'निर्देशादिभिः'**—"निद्देसे पुरिसे कारण कहिं केसु कालं कइविहं ।" [अनु० सू० १५१] "निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ।" [तत्त्वार्थसू० १।७] "किं केण कस्स कत्थ वि केवचिरं कदिविधो य भावो य। छहिं अणिओगद्दारें···" [मूलाचार ८।१५]

**पृ० २६. पं० ५. 'सदादिभिः'**-"से किं ते अणुगमे? नवविहे पण्णत्ते तं जहा- संतपयपरूवणया, दव्वपमाणं च, खित्त, फुसणा य, कालो य, अंतरं, भाग, भाव, अप्पाबहुं चेव।" [अनु० सू० ८०] "सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च।" [तत्त्वार्थसू० १।८]

**पृ० २६. पं० ६. 'जीवस्थान'**-"सुहुमा बादरकाया ते खलु पज्जत्तया अपज्जत्ता।
5 एइंदिया दु जीवा जिणेहिं कहिया चदुवियप्पा॥ पज्जत्तापज्जत्ता वि होंति विगलिंदिया दु छब्भेया। पज्जत्तापज्जत्ता सण्णि असण्णी य सेसा दु॥" [मूलाचारपर्या० गा० १५२-१५३] जीवकांड गा० ७२। कर्मग्र० ४।२।

**पृ० २६. पं० ६. 'गुणस्थान'**-"मिच्छादिट्ठी सासादणो य मिस्सो असंजदो चेव। देसविरदो पमत्तो अपमत्तो तह य णायव्वो॥ एत्तो अपुव्वकरणो अणियट्टी सुहुमसंपराओ य।
10 उवसंतखीणमोहो सजोगकेवलिजिणो अजोगी य॥" [मूलाचारपर्या० गा० १५४-१५५] जीकाण्ड गा० ९-१०। कर्मग्रं० २।२।

**पृ० २६. पं० ६. 'मार्गणास्थान'**-"गइ इंदिये च काये जोगे वेदे कसायणाणे य। संजम दंसण लेस्सा भविया सम्मत्त सण्णि आहारे॥" [मूलाचारपर्या० गा० १५६] जीवकाण्ड गा० १४१। कर्मग्र० ४।९।

15 **पृ० २६. पं० १०. 'नहि गुणादिविनाशात्'**-तुलना-"आत्मलाभं विदुर्मोक्षं जीवस्यान्तर्मलक्षयात्। नाभावं नाप्यचैतन्यं न चैतन्यमनर्थकम्॥" [सिद्धिवि० पृ० ३८४]

**पृ० २६. पं० १०. 'जडः'**-नैयायिकाः जडरूपत्वमात्मनो मुक्तौ स्वीकुर्वन्ति। तथाहि-"नवानामात्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते सन्तानत्वात्, यो यः सन्तानः स सोऽत्यन्तमुच्छिद्यमानो दृष्टो यथा प्रदीपसन्तानः।" [प्रश० व्यो० पृ० २० क] "तदेवं
20 नवानामात्मगुणानां निर्मूलच्छेदोऽपवर्ग इति यदुच्यते तदेवेदमुक्तं भवति तदत्यन्तवियोगोऽपवर्ग इति।" [न्यायमं० पृ० ५०८]

**पृ० २६. पं० १० 'शून्यः'**-"बौद्धाः शून्यात्मकत्वमपि मुक्तौ मन्यन्ते। तथाहि- "इह हि भगवता उषितब्रह्मचर्याणां तथागतशासनप्रतिपन्नानां धर्मानुधर्मप्रतिपत्तियुक्तानां पुद्गलानां द्विविधं निर्वाणमुपवर्णितं सोपधिशेषम्, निरुपधिशेषं च। तत्र निरवशेषस्याविद्या-
25 रागादिकस्य क्लेशगणस्य प्रहाणात् सोपधिशेषं निर्वाणमिष्यते। तत्रोपधीयतेऽस्मिन्नात्मस्नेह इत्युपधिः। उपधिशब्देन आत्मप्रज्ञप्तिनिमित्ताः पञ्चोपादानस्कन्धा उच्यन्ते। शिष्यत इति शेषः। उपधिरेव शेष उपधिशेषः। सह उपधिशेषेण वर्त्तते इति सोपधिशेषम्। किं तन्निर्वाणम्। तच्च स्कन्धमात्रकमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्येण, तत्सोपधिशेषं निर्वाणम्। यत्र तु निर्वाणे स्कन्धमात्रकमपि नास्त
30 तन्निरुपधिशेषं निर्वाणम्। निर्गत उपधिशेषोऽस्मिन्निति कृत्वा। निहताशेषचौरगणस्य ग्राममात्रस्यापि विनाशसाधर्म्येण।" [माध्यमिकवृ० पृ० ५१९]

**पृ० २६. पं० ११. 'तदभोक्ता'**-सांख्या हि विरते प्रकृतिसंयोगे मुक्त्यवस्थायां पुरुषमभोक्तारं साक्षिणमामनन्ति। तथाहि-"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥ तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम्।
35 प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः॥" [सांख्यका० ६१,६५]

## इति लघीयस्त्रयस्य टिप्पणानि।

# न्यायविनिश्चयस्य

## ॥ टिप्पणानि ॥



**पृ० २६. पं० ३. 'प्रसिद्धाशेष'**–तुलना–"प्रबुद्धाशेषतत्त्वार्थबोध···" [आप्तप० का० १] पत्रपरी० का० १।

**पृ० २६. पं० ६. 'बालानां हितकामिनाम्'**–तुलना–प्रमाणवा० १।२। श्लोकोऽयं नयविवरणे (कारि० ११९) मूलरूपेण उपलभ्यते।

**पृ० २६. पं० १४. 'प्रत्यक्षलक्षणं'**–'आकलंकावबोधने' इति कृत्वा समग्रेयं 5 कारिका तत्त्वार्थश्लोकवार्त्तिके (पृ० १८४) विद्यते। 'तदुक्तं भगवद्भिरकलङ्कदेवैर्न्यायविनिश्चये' इति कृत्वा पूर्वार्द्धं न्यायदीपिकायाम् (पृ० ८) उद्धृतम्।

**पृ० २६. पं० १५. 'द्रव्यपर्यायसामान्य'**–"तुलना–द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः।" [जैनतर्कवा० पृ० १०१]

**पृ० २६. पं० १५. 'सामान्यविशेष'**–तुलना–"···सामान्यविशेषात्मनोऽर्थस्य 10 ···" (पृ० २७) "सामान्यविशेषसमुदायोऽत्र द्रव्यम्।" [योगसू० व्यासभा० पृ० ३६६] 'सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका। जायते द्वयात्मकत्वेन विना सा च न सिद्ध्यति॥ ··तेन नात्यन्तभेदोऽपि स्यात् सामान्यविशेषयोः॥" [मी० श्लो० पृ० ५४६–४८] "सर्वेष्वपि वस्तुषु इयमपि गौरियमपि गौः अयमपि वृक्षोऽयमपि इति व्यावृत्तानुवृत्ताकारं प्रत्यक्षं देशकालावस्थान्तरेष्वविपर्यस्तमुदीयमानं सर्वमेव तर्काभासं विजित्य द्वयाकारं वस्तु व्यवस्थापयत् 15 नान्येन शक्यते बाधितुम्।" [शास्त्रदी० पृ० ३८७]

**पृ० ३०. पं० ७. 'एकत्र निर्णये'**–पूर्वार्द्धं प्रमाणसंग्रहे (का० ८) उपलभ्यते।

**पृ० ३०. पं० १०. 'अभिलापतद्दंशानाम्'**–अस्यां कारिकायां बौद्धाभिमतस्य 'अभिलापवत्त्वं विकल्पस्य लक्षणम्' इति मतस्य खण्डनं कृतम्। तन्मतञ्चेत्थम्– "अथ कल्पना च कीदृशी चेदाह–नामजात्यादियोजना। यदृच्छाशब्देषु नाम्ना विशिष्टोऽर्थ उच्यते 20 डित्थ इति। जातिशब्देषु जात्या गौरयमिति। गुणशब्देषु गुणेन शुक्ल इति। क्रियाशब्देषु क्रियया पाचक इति। द्रव्यशब्देषु द्रव्येण दण्डी विषाणीति।" [प्रमाणसमु० टी० पृ० १२] "अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना···" [न्यायबि० पृ० १३] "···अभिलापिनी प्रतीतिः कल्पना···। शब्दार्थघटनायोग्या वृक्ष इत्यादिरूपतः। या वाचामप्रयोगेऽपि साभिलापेव जायते॥" [तत्त्वसं० पृ० ३६६] 25

अष्टसहस्र्याम् अस्य सोद्धरणं व्याख्यानमित्थम्–"नाम्नो नामान्तरेण विनापि स्मृतौ केवलार्थव्यवसायः किन्न स्यात्? स्वाभिधानविशेषापेक्षा एवार्था निश्चयैर्व्यवसीयन्ते इत्येका-

न्तस्य त्यागात्, नाम्नः स्वलक्षणस्यापि स्वाभिधानविशेषानपेक्षस्यैव व्यवसायवचनात्। तदवचने वा न कश्चिद्व्यवसायः स्यात्, नामतदंशानामव्यवसाये नामार्थव्यवसायायोगात्। दर्शनेनाव्यवसायात्मना दृष्टस्याप्यदृष्टकल्पत्वात् सकलप्रमाणाभावः प्रत्यक्षस्याभावेऽनुमानोत्थानाभावात्। तत एव सकलप्रमेयापायः, प्रमाणापाये प्रमेयव्यवस्थानुपपत्तेः इत्यप्रमाणप्रमेयत्वम-
5 शेषस्यावश्यमनुषज्येत। तदुक्तं न्यायविनिश्चये-अभिलाप··· इति। 'अभिलापविवेकतः' इति अभिलापरहितत्वादिति व्याख्यानात्। प्रथमपक्षोपक्षिप्तदोषपरिजिहीर्षया तन्नामान्तरपरिकल्पनायामनवस्था। नामतदंशानामपि नामान्तरस्मृतौ हि व्यवसाये नामान्तरतदंशानामपि व्यवसायः स्वनामान्तरस्मृतौ सत्यामित्यनवस्था स्यात्। तथा च तदेवाप्रमाणप्रमेयत्वमवश्यमनुषज्येत। अत्रापि इयमेव कारिका योज्या 'अभिलापविवेकतः' इति अभिलापविनिश्चयात्
10 इति व्याख्यानात्।" [ अष्टसह० पृ० १२० ] तत्त्वार्थश्लो० पृ० २४०।

**पृ० ३०. पं० १८. 'आत्मनाऽनेकरूपेण'**-"तदुक्तं न्यायविनिश्चये-आत्मनाऽनेकरूपेण इत्यादि।" [ सिद्धिवि० टी० पृ० ५६ B. ५१२ A. ]

**पृ० ३१. पं० ३. 'परोक्षज्ञानविषय'**-अत्र हि परोक्षज्ञानवादिनो मीमांसकस्य खण्डनम्। तन्मतञ्चेत्थम्-"न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते, ज्ञाते तु अनुमानादवगच्छति···
15 तस्मादप्रत्यक्षा बुद्धिः···।" न चार्थव्यपदेशमन्तरेण बुद्धे रूपोपलम्भनम्। तस्मान्न बुद्धिविषयं प्रत्यक्षम्, अर्थविषयं हि तत्। अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः।" [ शाबरभा० बृहती पृ० ८७ ]

तुलना-"परोक्षज्ञानार्थपरिच्छेदः परोक्षवत्।" [ प्रमाणसं० पृ० ९८ पं० १७ ]

**पृ० ३१. पं० ६. 'अन्यथानुपपन्नत्व'**-उद्धृतं पूर्वार्द्धं प्रमेयरत्नमालायां (३।१५)
20 प्रमाणनिर्णये च ( पृ० १२ )

तुलना-"तथा चान्यथानुपपन्नत्वमसिद्धस्य न सिद्ध्यति।" [सिद्धिवि० पृ० १३४ A.]

**पृ० ३१. पं० १३. 'अध्यक्षमात्मनि'**-तुलना-"प्रत्यक्षमात्मनि ज्ञानमपरत्रानुमानिकम्। प्रत्यात्मवेद्यमाहन्ति तत्परोक्षत्वकल्पनाम्॥" [ तत्त्वार्थश्लो० पृ० १६६ ]

**पृ० ३१. पं० २५. 'विषयेन्द्रिय'**-तुलना-"अपि चाध्यक्षताभावे धियः स्यान्नेह
25 गतो गतिः। तच्चाक्षमर्थो धीः पूर्वो मनस्कारोऽपि वा भवेत्॥ कार्यकारणसामग्र्यामस्यां सम्बन्धिता परम्। सामर्थ्यादर्शनात्तत्र नेन्द्रियं व्यभिचारतः॥ तथार्थो धीमनस्कारौ ज्ञानं तौ च न सिद्ध्यतः। नाप्रसिद्धस्य लिंगत्वं व्यक्तिरर्थस्य चेन्मता॥···" [ प्रमाणवा० ३।४६१-६३ ]

**पृ० ३१. पं० २५. 'मनस्कारादि'**-"मनस्कारश्चेतस आभोगः। आभुजनमाभोगः, आलम्बेन येन चित्तमभिमुखीक्रियते। स पुनरालम्बेन चित्तधारणकर्म। चित्तधारणं
30 पुनः तत्रवा ( तत्रैवा ) लम्बने पुनः पुनश्चित्तस्यावर्जनम्। एतच्च कर्म चित्तसन्ततेरालम्बननियमेन विशिष्टं मनस्कारमधिकृत्योक्तम्।" [ त्रिंशिकाभा० पृ० २० ] "विषये चेतस आवर्जनं ( अवधारणं ) मनस्कारः मनः करोति आवर्जयतीति।" [ अभिधर्मको० व्या० २।२४ ]

**पृ० ३२. पं० ७. 'असञ्चारोऽनवस्थानम्'**-तुलना-"ज्ञानान्तरेणानुभवेऽनवस्था तत्र च स्मृतिः। विषयान्तरसञ्चारस्तथा न स्यात् स चेष्यते॥" [ प्रमाणसमु० १।१३ ]
35 "ज्ञानान्तरेणानुभवो भवेत्तत्रापि च स्मृतिः। दृष्ट्वा तद्वेदनं केन तस्याप्यन्येन चेदिमाम्॥ मालां ज्ञानविदां कोऽयं जनयत्यनुबन्धिनीम्। पूर्वा धीः सैव चेन्न स्यात्सञ्चारो विषयान्तरे॥"

[ प्रमाणवा० ३।५१३–१४ ] " ज्ञानान्तरेणानुभवे सोऽर्थः स्वानुभवे सति। प्र ( अ ) सिद्धः सिद्धयसंसिद्धेः कदा सिद्धो भवेत्पुनः॥ तज्ज्ञानज्ञानजातौ चेदसिद्धः स्वात्मसंविदि। परसंविदि सिद्धस्तु स इत्येतत्सुभाषितम्॥ तस्याप्यनुभवे ( ऽसिद्धे ) प्रथमस्याप्यसिद्धता। तत्रान्यसंविदुत्पत्तावनवस्था प्रसज्यते॥ गोचरान्तरसञ्चारस्तथा न स्यात् स चेष्यते। गोचरान्तरसञ्चारे यदन्त्यं तत्स्वतोऽन्यतः॥ न सि ( द्धयेत्तस्य चा ) सिद्धौ सर्वेषामप्यसिद्धता। अतश्चान्ध्यमशेषस्य जगतः सम्प्रसज्यते॥" [ तत्त्वसं० पृ० ५६४ ] तत्त्वार्थश्लो० पृ० १६७। 5

**पृ० ३३. पं० ६. 'सारूप्येऽपि'**–पूर्वपक्षः–"हेतुभावादृते नान्या ग्राह्यता नाम काचन। तत्र बुद्धिर्यदाकारा तस्यास्तद् ग्राह्यमुच्यते॥" [ प्रमाणवा० ३।२२४ ] "अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम्। अन्यत्स्वभेदो ज्ञानस्य भेदकोऽपि कथञ्चन॥ तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता।" [ प्रमाणवा० ३।३०५ ] 10

**पृ० ३४. पं० १५. 'सत्यं तमाहुः'**–"तदुक्तं न्यायविनिश्चये–सत्यं तमाहु··· सदर्थमसदर्थं वा·····" [सिद्धिवि० टी० पृ० १८९] "सत्यं तमाहुर्विद्वांसो विद्यया विभ्रमेण यः।" [ प्रमाणसं० पृ० १०७ ]

**पृ० ३४. पं० १६. 'विषयज्ञान'**–स्वसंवेदनज्ञानवादिभिः बौद्धैः हि विषयज्ञानतज्ज्ञानयोः भेददर्शनात् तदाकारता प्रसाध्यते। ग्रन्थकृता उक्तं यत्–विषयज्ञानतज्ज्ञानभेदः निराकारत्वेऽपि सुघटः। बौद्धानां तदाकारतासाधनप्रकारः इत्थं द्रष्टव्यः– 15

"विषयज्ञानतज्ज्ञानभेदाद् बुद्धेर्द्विरूपता। स्मृतेरप्युत्तरे काले नह्यसावविभावितः॥" [ प्रमाणसमु० १।१२ ] "ननु चाकारः प्रमाणं स्वसंवेदनं फलमिति साकारसिद्धौ स्यात्, तदेव तु कथं सिद्धयति ? उक्तमत्र, अपि च–

विषयज्ञानतज्ज्ञानविशेषाद् बुद्धिरूपता। 20

विषये रूपादौ यज्ज्ञानं तदर्थस्वाभासम्, विषयज्ञाने तु यज्ज्ञानं तदर्थानुरूपज्ञानाभासम् स्वाभासञ्च। अन्यथा यदि विषयज्ञानमर्थाकारमेव स्यात् स्वाकारमेव वा विषयज्ञानज्ञानमपि [त]दविशिष्टं स्यात्। विषये यत् ज्ञानं तदर्थस्वाभासमिति साध्यम्, उत्तरो हेतुः, अन्यथेत्यादि [ब]ाधकप्रमाणम्।" [प्रमाणवार्त्तिकालं० पृ० ८३ ]

तुलना–"विषयज्ञानतद्विज्ञानयोरविशेषः–विषयाकारपरिच्छेदात्मनि ज्ञाने यदि स्वाकारपरिच्छेदो न स्यात् तद्विषये विज्ञाने विषयाकाररूपतैवेति तयोरविशेषः स्यात्।" [ राजवा० पृ० ३५ ] "घटविज्ञानतज्ज्ञानविशेषस्तेन दुर्लभः।" [ मी० श्लो० पृ० ३२४ ] 25

**पृ० ३४. पं० २५. 'अर्थज्ञानस्मृता'**–बौद्धा हि विषयसंकलितज्ञानस्मृत्यन्यथानुपपत्त्या तदाकारतां प्रसाधयन्ति। केनचिदाशङ्कितम्–'यत् मास्तु तदाकारता, केवलं ज्ञानमर्थकार्यम्, अतः अर्थसंकलितज्ञानस्मरणं जायते, न तु तदाकारतया' तत्र समाहितं बौद्धैः–'यत् तदाकारतां विनापि यदि अर्थकार्यतामात्रेण अर्थसंकलितस्मरणं स्यात्तदा ज्ञानम् आलोकस्य मनस्कारस्य वा कार्यं भवति, अतः आलोकसंकलितस्य मनस्कारसंकलितस्य वा ज्ञानस्य स्मरणं स्यात्। न च दृश्यते अतः स्वीकार्यम्–यत् यदाकारं ज्ञानं तदाकारानुरक्तस्य स्मरणमिति।' यदि कारणत्वादेव अर्थस्य संकलनं ज्ञाने तदा घटेऽपि कुलालस्य कारणभूतस्य संकलनं स्यात्, तथा च घटस्मृतौ कुलालोऽपि स्मर्येत इत्यादि। ग्रन्थकृता अत्र तदाकारतास्थापनाय बौद्धैः य अतिप्रसङ्ग आपादितः स ज्ञानं निराकारं स्वीकृत्यापि शक्तिप्रतिनियमादेव समाहितः। अतिप्रसङ्गापादकः बौद्धग्रन्थस्त्वयम्– 30 35

"अर्थकार्यतया ज्ञानस्मृतावर्थस्मृतेर्यदि । भ्रान्त्या संकलनं ज्योतिर्मनस्कारेऽपि सा भवेत् ॥"

भ्रान्तिरिति सम्बन्धः । यद्यर्थस्य कार्यं विज्ञानम् अथापि अर्थे कार्यं व्यापारो यस्येति ज्ञानस्मृतौ नियमेन अर्थस्मरणम्, अतस्तदेव मूढमतिसन्तानस्य तथा भवति प्रतिपत्तिः । एवन्तर्हि ज्योतिर्मनस्कारेऽपि तथा प्रतीतिः स्यात् । यथा विषयकार्यता विज्ञानस्य तथा
5 आलोककार्यता मनस्कारकार्यतापि तेन द्वयसंकलनेनापि प्रतीयेत । न हि कार्यत्वे कश्चि-द्विशेषः । अथ विषये व्याप्रतत्वात् तत्संकलनं मनस्कारे तत्राव्याप्रि [ पृ ] तत्वात् तदा तर्हि आलोकेऽपि समान एव व्यापारः । न ह्यालोकमपहाय रूपे व्याप्रियते । तदसदेतत् । तस्मा-द्यथा आलोकप्रतिभासमिति न भवति तथा रूपप्रतिभासमिति न स्यात् ।...... तस्माद्रू-पाद्याकारमेव विज्ञानम् । कार्यतया तु तथा प्रतिपत्तौ—

10 सर्वेषामपि कार्याणां कारणैः स्यात्तथा ग्रहः । कुलालादिविवेकेन न स्मर्येत घटस्ततः ॥

तेनापि कार्योऽपि घटादिः स्वकारणविवेकेन न स्मर्येत । अथ अर्थकृतः कश्चिदतिशयो येन ज्ञानस्मरणे अर्थोवि ( पि ) स्मर्यते, ज्ञानग्रहणे चार्थग्रहः, केवलस्य ज्ञानस्य न ग्रहण-स्मरणे; घटादिस्तु केवलोऽपि गृह्यते तेनादानादिकञ्च । तदपि स्वपक्षबाधनाय । तथाहि—

'यस्मादतिशया (यो) ज्ञानमर्थसंसर्गभाजनम् । सारूप्यात्तत्किमन्यत्स्याद् दृष्टश्च यमलादिषु ॥

15 यदि तस्य विज्ञानस्य नार्थाकारता तदाऽर्थग्रहणेनैव सह विज्ञानं गृह्यते स्मर्यते चेति कोऽयं नियमः । तदर्थान्तर्गतं तु नियमेन तद्ग्रहणेनैव गृह्यत इति भवति नियमः । तस्माद-र्थस्वरूपमेव विज्ञानमर्थग्रहणानान्तरीयकग्रहणं तत्स्मरणानान्तरीयकस्मरणञ्च ॥" [ प्रमाण-वार्त्तिकालं० पृ० ८८-८९ ]

**पृ० ३६. पं० ६. 'अन्तःशरीर'**—प्रज्ञाकरो हि स्वप्नावस्थायां सूक्ष्मशरीरं
20 स्वप्नान्तिकनामानं स्वीकरोति । तस्मिन्नेव त्रासलंघनधावनादयो भवन्ति । तदेव स्वप्नान्तिकं शरीरमत्र ग्रन्थकृता 'अन्तःशरीर' शब्देन आक्षिप्तम् । तन्निर्देशश्चेत्थम्—"यथा स्वप्नान्तिकः कायः त्रासलङ्घनधावनैः । जाग्रद्देहविकारस्य तथा जन्मान्तरेष्वपि ॥" [ प्रमाणवार्त्तिकालं० लि० पृ० १४८ ] "प्रज्ञाकरस्तु स्वप्नान्तिकशरीरवादी स्वप्नदशायामपि व्यवहारादिनिर्भासज्ञा-नस्य साक्षात् चिकीर्षादिप्रभवनियममभ्युपगच्छति..." [ सिद्धिवि० टी० पृ० १३८ B. ]

25 **पृ० ३६. पं० १०. 'विप्लुताक्षा'**—विज्ञानवादिनः विप्लुताक्षबुद्धि=तैमिरिकः । चन्द्रद्वयबुद्धि-दृष्टान्तेन सर्वेषां प्रत्ययानां निरालम्बनत्वं साधयन्ति । तथाहि—" विज्ञप्तिमात्र-मेवेदम् असदर्थावभासनात् । यथा तैमिरिकस्यासत्केशचन्द्रादिदर्शनम् ॥ " [ विज्ञप्तिमात्र० विंशतिका पृ० १] "अत एव सर्वे प्रत्ययाः अनालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति प्रमा-णस्य परिशुद्धिः । " [ प्रमाणवार्त्तिकालं० पृ० २२ ]

30 तुलना—" विप्लुताक्षा यथा बुद्धिः वितथप्रतिभासिनी । तथा सर्वत्र किन्नेति जडाः सम्प्रतिपेदिरे ॥ सर्वज्ञानानां स्वयमविषयीकृतानां निर्विषयतासिद्धिः इष्टविघातकृत् विरुद्धः स्याद्वाददलंघने । " [ सिद्धिवि० पृ० ३३७ ]

**पृ० ३६. पं० १६. 'प्रमाणमात्मसात्कुर्वन्'**—"तदुक्तं न्यायविनिश्चये—प्रमाण-मात्मसात्कुर्वन्' इत्यादि । " [ सिद्धिवि० टी० पृ० २६८ B. ] प्रमाणसं० पृ० १०३।

35 **पृ० ३६. पं० २८. 'इन्द्रजालादिषु'**—" तथा चोक्तमकलंकदेवैः— इन्द्रजाला-दिषु..." [ आप्तप० पृ० ४९ ] सिद्धिवि० टी० पृ० २०८ B.

**पृ० ३७. पं० १. 'तत्र शौद्धोदनेरेव'**–" तदुक्तं न्यायविनिश्चये-तत्र शौद्धोदनेरेव···तत्राद्यापि जडासक्तास्तमसो··" [ अष्टसह० पृ० ११६ ]

तुलना–" शौद्धोदनेरेव प्रज्ञापराधोऽयं लोकातिक्रान्तः कथं बभूवेत्यतिविस्मयमास्महे। तन्मन्ये ( तमन्ये ) पुनरद्यापि कीर्त्तयन्तीति किं बत परमन्यत्र मोहनीयप्रकृतेः।" [ अष्टश०, अष्टसह० पृ० ११६] " कथञ्चिद् याथात्म्यप्रतिपत्तिमन्तरेण यथादर्शनमेवेत्यादि ब्रुवतः क्षणिकभ्रान्तैकान्तचित्तसन्तानान्तराणि स्वभावनैरात्म्यं वा ब्रुवतः शौद्धोदनेः तावदयं प्रज्ञापराधः कथमिति सविस्मयं सकरुणं नश्चेतः। सन्त्यस्यापि अनुवक्तार इति किमन्यदनात्मज्ञतायाः।" [ सिद्धिवि० पृ० ७४ ] "आचार्यस्तस्यैव तावदिदमीदृशं प्रज्ञास्खलितं कथं वृत्तमिति सविस्मयानुकम्पन्नश्चेतः। तदपरेऽप्यनुवदन्तीति निर्दयाक्रान्तभुवनं दिग्व्यापकं तमः। " [ वादन्यायटी० पृ० ५१ ]

**पृ० ३७. पं० ६. 'विभ्रमे विभ्रमे'**–तुलना–"भ्रान्तावपि यदि भ्रान्तिः भ्रान्तिरेव विशीर्यते। भ्रान्तावभ्रान्ततावित्तौ भ्रान्तिः सेति प्रतीयते॥" [प्रमाणवार्तिकालं० लि०पृ०३०३]

" तदुक्तं न्यायविनिश्चये-विभ्रमे··" [सिद्धिवि० टी० पृ० ६२ A.] अष्टसह०पृ०११६। "सर्वथा विभ्रमे तस्य···" [ प्रमाणसं० पृ० १०६ ]

**पृ० ३८. पं० ३. 'परितुष्यति'**–अत्रायं पूर्वपक्षः–" मणिप्रदीपप्रभयोः मणिबुद्ध्याभिधावतोः। मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥ " [ प्रमाणवा० ३।५७ ]

**पृ० ४०. पं० ६८. 'विज्ञप्तिर्वितथा'**–पूर्वपक्षः–" यथा [ स्व प्र ] त्ययापेक्षादविद्योपप्लुतात्मनाम्। विज्ञप्तिर्वितथाकारा जायते तिमिरादिवत्॥ असंविदिततत्त्वा च सा सर्वापरदर्शनैः।" [ प्रमाणवा० ३।२१७ ]

**पृ० ४१. पं० ६. 'सहोपलम्भ'**–विज्ञानवादिनः अर्थसंविदोः सहोपलम्भनियमादभेदं साधयन्ति। तथाहि–" सकृत्संवेद्यमानस्य नियमेन धिया सह। विषयस्य ततोऽन्यत्वं केनाकारेण सिद्ध्यति॥ विषयस्य हि नीलादेर्धिया सह सकृदेव संवेदनम्। धिया सह न पृथक्। ततः संवेदनादपरो विषय इति कथम्?" [ प्रमाणवार्तिकालं० पृ० ९१ ] "यद् यस्मादपृथक् संवेदनमेव तत्तस्मादभिन्नं यथा नीलधीः स्वस्वभावात्। यथा वा तैमिरिकज्ञानप्रतिभासी द्वितीय उडुपः–चन्द्रमाः। नीलधीवेदनञ्चेदम् इति पक्षधर्मोपसंहारः। धर्म्यत्र नीलाकारतद्धियौ, तयोरभिन्नत्वं साध्यधर्मः, यथोक्तः सहोपलम्भनियमो हेतुः। ईदृश एवाचार्यीये प्रयोगे हेत्वर्थोऽभिप्रेतः।" [ तत्त्वसं० पं० पृ० ५६७ ]

तुलना–"सहोपलम्भनियमात् स्याद्भेदो नीलतद्धियोः। असहानुपलम्भश्चेत् असिद्धः पृथगीक्षणात्॥ सहोपलम्भनियमादभेदैकान्तसाधने न कश्चिद्भ्रान्तिज्ञानं स्यात् सुषुप्तवत् भ्रान्तिप्रत्यक्षयोः तेन तदेकान्तः, भ्रान्तिविविक्तप्रत्यक्षस्वभावोपपत्तेः। बहिरन्तश्च नीलतद्धियोर्दर्शनात् कुतः सहोपलम्भनियमः सिद्धः? सकृदेकार्थोपनिबद्धदृष्टीनां परज्ञानानुपलम्भेऽपि तदर्थदर्शनात् कुतो नियमः? तदेकक्षणवर्त्तिनां सहोपलम्भनियमात् स्वयं वा उत्पत्तेः सकलजगदेकसन्तानं प्रसज्येत। यदि पुनरेकज्ञानोपलम्भनियमः; असिद्धो हेतुः अनैकान्तिकश्च, नीलस्य अनेकज्ञानोपलम्भवत् बहूनामपि द्रव्याणामेकज्ञानोपलम्भाप्रतिषेधात्। यद्यसहानुपलम्भः; को विशेषः? प्रसज्यप्रतिषेधमात्रमसाध्यसाधनम् सत्येव (?) अर्थादर्थगतिलक्षणात्।" [ सिद्धिवि० पृ० ३३३-३३६ ] प्रमाणसं० पृ० १०९।

"तत्र भदन्तशुभगुप्तस्त्वाह–विरुद्धोऽयं हेतुः यस्मात् सहशब्दश्च लोकेऽन्यो (स्या)

न्नैवान्येन विना कचित्। विरुद्धोऽयं ततो हेतुर्यद्यस्ति सहवेदनम् ॥'''पुनः स एवाह-यदि सहशब्द एकार्थः तदा हेतुरसिद्धः; तथाहि-नटचन्द्रमल्लप्रेक्षासु न ह्येकेनैवोपलम्भो नीलादेः। नापि नीलतदुपलम्भयोः एकेनैवोपलम्भः। तथाहि-नीलोपलम्भेऽपि तदुपलम्भानामन्यसन्तानगतानामनुपलम्भात्। यदा च सत्त्वं प्राणभृतां सर्वे चित्तक्षणाः सर्वज्ञेनावसीयन्ते तदा कथ-
5 मेकेनैवोपलम्भः सिद्धः स्यात्। किंच, अन्योपलम्भनिषेधे सत्येकोपलम्भनियमः सिद्ध्यति। न चान्योपलम्भप्रतिषेधसंभवः; स्वभावविप्रकृष्टस्य विधिप्रतिषेधायोगात्। अथ सहशब्द एककालविवक्षया; तदा बुद्धविज्ञेयचित्तेन चित्तचैत्तैश्च सर्वथाऽनैकान्तिकता हेतोः। यथा किल बुद्धस्य भगवतो यद्विज्ञेयं सन्तानान्तरचितं तस्य बुद्धज्ञानस्य च सहोपलम्भनियमेऽप्यस्त्येव च नानात्वम्, तथा चित्तचैत्तानां सत्यपि सहोपलम्भे नैकत्वमित्यतोऽनैकान्तिको हेतुरिति।'''स्या-
10 देतत् यद्यपि विपक्षे सत्त्वं न निश्चितं सन्दिग्धं तु ततश्चानैकान्तिको हेतुः सन्दिग्धविपक्षव्यावृत्तिकत्वात्।'''" [ तत्त्वसं० पं० पृ० ५६७-६९ ] शावरभा० बृहतीपं० १।५। शा० भा० भामती २।२।२८। योगसू० तत्त्ववै० ४। १४। न्यायकणि० पृ० २६४। अष्टश०, अष्टसह० पृ० २४२। प्रमेयक० पृ० २१। न्यायकुमु० पृ० १२२। सन्मति० टी० पृ० ३५२। स्या० रत्ना० पृ० १५२।

**पृ० ४१. पं० २२. 'तत्र दिग्भाग'**-तुलना-" षट्केन युगपद्योगात् परमाणोः
15 षडंशता। षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रकः ॥" [ विज्ञप्ति० विंशिका पृ० ७ ] चतुःशतक पृ० ४८। "यद्वा सर्वात्मना वृत्तौ अनेकत्वं प्रसज्यते। एकदेशेन चानिष्टा नैको वा न कचिच्च सः ॥" [ तत्त्वसं० पृ० २०३ ] न्यायकुमु० पृ० २२७।

**पृ० ४१. पं० २७. 'न चैकमेकरागादौ'**-तुलना-"एकस्य चावृतौ सर्वस्यावृतिः स्यादनावृतौ। दृश्येत रक्ते चैकस्मिन् रागोऽरक्तस्य वाऽगतिः ॥" [ प्रमाणवा० २।८५ ] "रक्ते
20 च भाग एकस्मिन् सर्वं रज्येत रक्तवत्। विरुद्धधर्मभावे वा नानात्वमनुषज्यते ॥" [ तत्त्वसं० पृ० १९८ ] अवयविनिरा० पृ० ८७। न्यायकुमु० पृ० २२८।

**पृ० ४२. पं० ५. 'चित्रं तदेकमिति'**-अत्रायं पूर्वपक्षः-"चित्रं तदेकमिति चेदिदं चित्रतरं ततः। नैकस्वभावं चित्रं हि मणिरूपं यथैव तत् ॥" [ प्रमाणवा० ३।२०० ]

तुलना-"तत्र चित्रं भवेदेकमिति'''वेत्सि'''" [ प्रमाणसं० पृ० १०३ ]

25 **पृ० ४३ पं० १८ 'अत्यासन्नानसंसृ'**-पूर्वपक्षः-" अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे। उक्तास्ते संचितास्ते हि निमित्तं ज्ञानजन्मनः ॥" [ प्रमाणवा ३।१९५ ]

**पृ० ४३. पं० २५. 'कारणस्याक्षये'**-" तदुक्तं न्यायविनिश्चये-कारणस्या'''" [ सिद्धिवि० टी० पृ० ४६ B. ३१४ A. ३४३ A. ]

**पृ० ४३. पं० २९. 'समवायस्य'**-अत्रायं पूर्वपक्षः-अयुतसिद्धानामाधार्याधार-
30 भूतानां यः सम्बन्धः इहप्रत्ययहेतुः स समवायः।'''इह तन्तुषु पटः इह वीरणे कट इह द्रव्ये गुणकर्मणी'''।" [ प्रश० भा० पृ० ६६९ ]

**पृ० ४४. पं० ३. 'शाखा वृक्षेऽपि'**-तुलना-लघी० टि० पृ० १४६ पं० ७।

**पृ० ४४. पं० ६. 'तुलितद्रव्यसंयोगे'**-तुलना-" गुरुत्वाधोगती स्यातां यद्यस्य स्यात्तुलानतिः।" [ प्रमाणवा० ४।१५४ ]

35 **पृ० ४४. पं० ११. 'आसूक्ष्मतः'**-तुलना-" आसूक्ष्माद् द्रव्यमालायास्तौल्यत्वादंशुपातवत्। द्रव्यान्तरगुरुत्वस्य गतिर्नेत्यपरोऽब्रवीत् ॥" [ प्रमाणवा० ४।१५६ ]

पृ० ४४. पं० १५. **'ताम्रादि'**–तुलना–" तस्य क्रमेण संयुक्ते पांशुराशौ सकृच्युते । भेदः स्याद्गौरवे तस्मात् पृथक् सह च तोलिते ।। क्रमेण माषकादीनां संख्यासाम्यं न युज्यते । सर्षपादेर्महाराशेरुत्तरोत्तरोत्तरवृद्धिमत् ।।···" [ प्रमाणवा० ४।१५७–५८ ]

पृ० ४४. पं० २६. **'गुणपर्ययवद्द्रव्यम्'**–तुलना–" गुणाणमासओ दव्वं एकदव्वस्सिया गुणा । लक्खणं पज्जवाणं तु उभओ अस्सिया भवे ।। " [उत्तरा० २८।६] "दव्वं सल्लक्खणियं उप्पादव्वयधुवत्तसंजुत्तं । गुणपज्जयासयं वा जं तं भण्णंति सव्वण्हू ।। " [ पंचास्ति० गा० १० ] " गुणपर्ययवद् द्रव्यम् " [ तत्त्वार्थसू० ५।३८ ] " तं परियाणहु दव्वु तुहुँ जं गुण-पज्जयजुत्तु । सहभुव जाणहि ताहँ गुण कम-भुव पज्जउ वुत्तु ।।" [ परमात्मप्र० गा० ५७ ] लघी० टि० पृ० १४२ पं० २७ ।

पृ० ४५. पं० ७. **'भेदज्ञानात्'**–तुलना–" भेदज्ञानात् प्रतीयन्ते यथा भेदाः परिस्फुटम् । तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ।।" [ जैनतर्कवा० पृ० ११० ] " तथा चोक्तं न्यायविनिश्चये–भेदज्ञानात्···" [ सिद्धिवि० टी० पृ० १६९ A. ]

पृ० ४५. पं० ११. **'सदोत्पाद'**–द्रष्टव्यम्–लघी० टि० पृ० १४२ पं० २१ ।

पृ० ४५. पं० १६. **'प्रत्यक्षप्रतिसंवेद्यः'**–तुलना–"तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः । पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ।।" [ मी० श्लो० पृ० ६९५ ] "तदयं भावः स्वभावेषु कुण्डलादिषु सर्पवत् ।" [ प्रमाणसं० पृ० ११२ ]

पृ० ४५. पं० २४. **'स्वलक्षण'**–तुलना–प्रमाणसं० पृ० १०३ ।

पृ० ४६. पं० ५. **'तद्भावः'**–तुलना–"तद्भावः परिणामः ।" [तत्त्वार्थसू० ५।४२]

पृ० ४६. पं० ११. **'भेदानां'**–अत्रायं पूर्वपक्षः–"नैकस्मिन्नसंभवात्" [ब्रह्मसू० ·३] "भेदानां बहुभेदानां तत्रैकस्मिन्नयोगतः ।" [ प्रमाणवा० १।९१ ]

पृ० ४६. पं० १३. **'अन्वयो'**–तुलना–प्रमाणसं० पृ० १०७ ।

पृ० ४६. पं० २३. **'उत्पादविगम'**–तुलना–" उत्पादविगमध्रौव्यद्रव्यपर्यायक· । कृत्स्नं श्रीवर्धमानस्य वर्धमानस्य शासनम् ।। " [ सिद्ध० द्वात्रिं० २०।१ ]

पृ० ४६. पं० १८. **'नौयानादिषु'**–नौयानादीनि विभ्रमकारणानि । द्रष्टव्यम्–लघी० टि० पृ० १४८ पं० ८ ।

पृ० ४६. पं० २२. **'तस्माद् दृष्टस्य'**–अत्रायं पूर्वपक्षः–"तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रान्त्या न निश्चय इति साधनं सम्प्रवर्त्तते ।।" [ प्रमाणवा० १।४६ ]

पृ० ४६. पं० २५. **'प्रत्यक्षं कल्पना'**–अत्रायं पूर्वपक्षः–"प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति ।" [ प्रमाणवा० ३।१२३ ]

पृ० ५०. पं० १४. **'अविकल्पक'**–पूर्वपक्षः–"प्रत्यक्षं कल्पनापोढम्···" [प्रमाणसमु० १।३] "यज्ज्ञानमर्थे रूपादौ नामजात्यादिकल्पनारहितं तदक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम् ।" [ न्यायप्रवे० पृ० ७ ] "तत्र कल्पनापोढमभ्रान्तं प्रत्यक्षम् ।" [ न्यायबि० पृ ११ ] तत्त्वसं० पृ० ३६६ । "तत्रायं न्यायमुखग्रन्थः–यज्ज्ञानमर्थरूपादौ विशेषणाभिधायकाभेदोपचारेणाविकल्पकं तदक्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम् ।" [ तत्त्वसं० पं० पृ० ३७२ ]

**पृ० ५०. पं० २३. 'मानसम्'**–"तस्मादिन्द्रियविज्ञानानन्तरप्रत्ययोद्भवः। मनः···" [प्रमाणवा० ३।२४३] "स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तत् मनोविज्ञानम्।" [न्यायबि० पृ० १७] "इदमित्यादि यज्ज्ञानमभ्यासात् पुरतः स्थिते। साक्षात्करणतस्तत्तु प्रत्यक्षं मानसं मतम्॥" [प्रमाणवार्तिकालं लि० पृ० ४१०]

5 **पृ० ५१. पं० १६. 'प्रोक्षितम्'**–"प्रोक्षितं-यज्ञादौ मन्त्रादिसंस्कृतं मांसादि।" [शब्दकल्पद्रुमः]

**पृ० ५१. पं० २७. 'चतुःसत्य'**–"चत्वार्यार्यसत्यानि। तद्यथा-दुःखं समुदयो निरोधो मार्गश्चेति।" [धर्मसं० पृ० ५] "सत्यान्युक्तानि चत्वारि दुःखं समुदयस्तथा। निरोधो मार्ग एतेषां यथाभिसमयं क्रमः॥" [अभिधर्मको० ६।२]

10 **पृ० ५१. पं० २९. 'योगिविज्ञानम्'**–"प्रागुक्तं योगिनां ज्ञानं तेषां तद्भावनामयम्। विधूतकल्पनाजालं स्पष्टमेवावभासते॥" [प्रमाणवा० ३।२८१] "भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति।" [न्यायबि० पृ० २०] तत्त्वसं० पृ० ३९८।

**पृ० ५२. पं० १. 'श्रोत्रादिवृत्तिः'**–पूर्वपक्षः–"इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्।"

15 [योगसू० व्यासभा० पृ० २७]

तुलना–"कापिलास्तु श्रोत्रादिवृत्तेः प्रत्यक्षत्वमिच्छन्ति।···" [प्रमाणसमु० पृ० ६४] न्यायवा० पृ० ४३। "वार्षगण्यस्यापि लक्षणमयुक्तमित्याह-श्रोत्रादिवृत्तिरिति।" [न्यायवा० ता० टी० पृ० १५५] न्यायमं० पृ० १००। "श्रोत्रादिवृत्तिः भ्रान्तेऽपि नहि नाम न विद्यते। न च ज्ञानं विना वृत्तिः श्रोत्रादेरुपपद्यते॥" [प्रमाणवार्तिकालं लि० पृ ४४०] तत्त्वोप० लि०

20 पृ० ७७। "श्रोत्रादिवृत्तिरध्यक्षमित्यप्येतेन चिन्तितम्। तस्या विचार्यमाणाया विरोधश्च प्रमाणतः॥" [तत्त्वार्थश्लो० पृ० १८७] नयचक्रवृ० पृ० ७३ A. षड्द० बृह० पृ० ४[illegible] प्रमाणमी० पृ० २४।

**पृ० ५२. पं० ४. 'तथाक्षार्थ'**–पूर्वपक्षः–"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम[illegible]देश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।" [न्यायसू० १।४] प्रश० भा० पृ० ५५३। [illegible]

25 **पृ० ५२. पं० १०. 'लक्षणं'**–तुलना–प्रमाणसं० पृ०९९। तत्त्वार्थश्लो० पृ०१[illegible]।

इति प्रथमः प्रत्यक्षप्रस्तावः।



**पृ० ५२. पं० २१. 'साधनात्'**–तुलना–"साध्याविनाभुवो लिंगात् साध्यनिश्चायकं स्मृतम्। अनुमानं तदभ्रान्तं प्रमाणत्वात् समक्षवत्॥" [न्यायाव० श्लो०५] लघी०का० १२। "साधनात्साध्यविज्ञानमनुमानं विदुर्बुधाः। प्रधानगुणभावेन विधानप्रतिषेधयोः॥"

30 [तत्त्वार्थश्लो० पृ० १०७] प्रमाणप० पृ० ७०। परीक्षामु० ३।१४। प्रमाणनय० ३।९। प्रमाणमी० १।२।७। न्यायदी० पृ० २०। जैनतर्कभा० पृ० १२।

**पृ० ५३. पं० २. 'साध्यं'**–"एवं हि यैरुक्तम्-साध्यं···" [तत्त्वार्थश्लो० पृ० २१४, १९७] "तदुक्तमकलंकदेवैः-साध्यं···" [प्रमाणप० पृ० ७२] "···साध्याभासं यथा सत्ता भ्रान्तेः पुरुषधर्मतः।" [प्रमाणसं० पृ० १०२] प्रमाणनि० पृ० ६१। "तदुक्तं न्यायविनि-

35 श्चये-साध्यं···" [न्यायदी० पृ० २१]

तुलना-"पक्षः प्रसिद्धो धर्मी, प्रसिद्धविशेषेण विशिष्टतया स्वयं साध्यत्वेनेप्सितः, प्रत्यक्षाद्यविरुद्ध इति वाक्यशेषः।" [ न्यायप्रवे० पृ० १ ] "साध्याभ्युपगमः पक्षः प्रत्यक्षाद्यनिराकृतः।" [ न्यायाव० श्लो० १४ ] "स्वरूपेणैव स्वयमिष्टोऽनिराकृतः पक्षः इति।" [ न्यायबि० पृ० ७९ ] "इष्टमबाधितमसिद्धं साध्यम्।" [ परीक्षामु० ३।१५ ] "अप्रतीतमनिराकृतमभीप्सितं साध्यम्।" [ प्रमाणनय० ३।१२ ] जैनतर्कभा० पृ० १३। "सिसाधयिषितमसिद्धमबाध्यं साध्यं पक्षः।" [ प्रमाणमी० १।२।१३ ] 5

**पृ० ५३. पं० १५. 'भ्रान्तेः'**-तुलना-"भ्रान्तेः पुरुषधर्मत्वात्" [ न्यायवा० पृ० २० ] प्रमाणसं० पृ० १०२।

**पृ० ५४. पं० ७. 'व्याधिभूत'**-तुलना-"व्याधिभूतग्रहेन्द्रियप्रवृत्तिनिवृत्त्योः मन्त्रौषधादिशक्तेश्च कुतः सिद्धिः?" [ सिद्धिवि० पृ० ३४९ A. ] 10

**पृ० ५७. पं० १४. 'नो चेद्विभ्रम'**-तुलना-"नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम्।" [ प्रमाणवा० १।४५ ]

**पृ० ५६. पं० २. 'मेचकादिवत्'**-तुलना-"यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः। चित्रत्वाद्वस्तुनोऽप्येवं भेदाभेदावधारणम्॥ यदा तु शबलं वस्तु युगपत्प्रतिपद्यते। तदान्यानन्यभेदादि सर्वमेव प्रलीयते॥" [ मी० श्लो० पृ० ५६१ ] नरसिंहमेचकवद् वस्तुनो 15 जात्यन्तरात्मकत्वाभ्युपगमात्।" [ अनेकान्तजय० पृ० २८१ ]

**पृ० ५६. पं० १६. 'प्रत्यभिज्ञा'**-"प्रत्यभिज्ञा द्विधा इत्यादिवचनात्।" [ सिद्धिवि० टी० पृ० १७८ B. ]

**पृ० ६२. पं० ३. अप्रत्यक्षेऽपि'**-"अप्रत्यक्षेऽपि...तद्गुणो ज्ञानं नो जातिप्रदर्शनात्।" [ प्रमाणसं० पृ० १०७ ] 20

**पृ० ६२. पं० २८. 'विकृतेरविकारिणी'**-तुलना-"प्रसुप्तिकाद्यवस्थासु शरीरेष्वपि। नान्यथात्वं मनोबुद्धेस्तस्मान्नेयं तदाश्रिता॥" [ तत्त्वसं० का० १९३४ ] "न च विकारेऽपि यन्न विक्रियते तत्तत्कार्यं युक्तमतिप्रसङ्गात्।" [ तत्त्वसं० पं० पृ ५२७ ] क..मु० पृ० ३४६।

**पृ० ६२. पं० २९. 'निर्ह्रासा'**-तुलना-"बुद्धिव्यापारभेदेन निर्ह्रासातिशयावपि। 25 प्रज्ञादेर्भवतो देहनिर्ह्रासातिशयैर्विना॥" [ प्रमाणवा० २।७३ ]

**पृ० ६३. पं० २४. 'जातिस्मरणां'**-तुलना-"जाइस्सरो न विगओ सरणाओ बालजाइसरणोव्व। जह वा सदेसवत्तं नरो सरंतो विदेसम्मि॥" [ विशेषा० गा० २१५० ] "जाईसरणं च इहं दीसई केसिंचि अवितहं लोए। पुव्वभवणवियसेवियसंवादातो अणेगभवं॥" [ धर्मसंग्र० गा० १४६ ] "नात्मापि लोके नोऽसिद्धो जातिस्मरणसंश्रयात्।" [शास्त्रवा० १।४०] 30

**पृ० ६३. पं० २८. 'नास्मृतेऽभिलाषो'**-"न स्मृतेरभिला.....इत्यकलंकवचनम्..." [ तत्त्वार्थश्लो० पृ० ३२९ ]

**पृ० ६३. पं० ३१. 'जातमात्रेऽपि'**-तुलना-"पूर्वानुभूतस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसम्प्रतिपत्तेः।" [ न्यायभा० ३।१।१९ ] न्यायमं० पृ० ४७०। तत्त्वसं० पं० पृ० ५३२। "पढमो थणाहिलासो अण्णाहाराहिलासपुव्वोऽयं। जह बालहिलासपुव्वो जुवाहिलासो य 35

देहहिओ ॥" [विशेषा० गा०२१४०] "जो बालथणभिलासो पढमो अहिलासपुव्वगो सोवि। अहिलासत्ता जूणो जह विलयाहारअहिलासो ॥" [ धर्मसंग्र० गा० १४५ ]

**पृ० ६४. पं० १५. 'तथा रागादयो'**–तुलना–"रागद्वेषादयश्चामी पटवोऽभ्यासयोगतः। अन्वयव्यतिरेकाभ्यां भवन्तः परिनिश्चिताः ॥" [ तत्त्वसं० पृ० ५४६ ]

5 **पृ० ६६. पं० २. 'न चेत्स'**–तुलना–"तदुक्तम्–स्वतोऽन्यतो वा विवर्त्तेत क्रमाद्धेतुफलात्मना ।" [ सिद्धिवि० टी० पृ० ३५९ A. ]

**पृ० ६६. पं० २०. 'साधनं'**–तुलना–प्रमाणसं० पृ० १०२। "अन्यथानुपपत्त्येकलक्षणं तत्र साधनम् ॥" [ तत्त्वार्थश्लो० पृ० २१४ ] परीक्षामु० ३।१५। "तथा चाभ्यधायि कुमारनन्दिभट्टारकैः–अन्यथानुपपत्त्येकलक्षणं लिंगमंग्यते। प्रयोगपरिपाटी तु प्रतिपाद्यानु-
10 रोधतः ॥" [ प्रमाणप० पृ० ७२ ]

**पृ० ६६. पं० २३. 'विरुद्धासिद्ध'**–तुलना–"हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः ।" [ परीक्षामु० ६।२१ ]

**पृ० ६७. पं० १. 'एकं चलं'**–तुलना–"एकं··· आवृतैरावृतं रूपं रक्तं रक्तै···" [ प्रमाणसं० पृ० १०२ ]

15 **पृ० ६८. पं० २७. 'रूपादीनि'**–तुलना–"नीलादीनि निरस्यान्यच्चित्रं चित्रं यदीक्षसे ।" [ प्रमाणवा० ३।२०२ ]

**पृ० ७३. पं० २७. 'शिलाप्लवः'**–तुलना–"स्वलक्षणानि परिस्फुटम् अक्षबुद्धौ प्रतिभासन्ते इति शिलाप्लवं कः श्रद्धधीत ?" [ सिद्धिवि० पृ० १२५ B. ]

**पृ० ७४. पं० १. 'अन्यथानुपपन्न'**–श्लोकोऽयं सिद्धिविनिश्चयेऽपि विद्यते। [illegible]
20 काकृता चायं पात्रस्वामिकर्त्तृकत्वसमालोचनपुरस्सरं भगवत्सीमन्धरस्वामिकर्त्तृकतया नि[illegible] [ सिद्धिवि० टी० पृ० ३०० A. ] न्यायविनिश्चयविवरणे आराधनाकथाकोशे च अस्य पद्मावती[illegible] भगवत्सीमन्धरस्वामिसकाशादानीय पात्रस्वामिने समर्पणञ्च समुल्लिखितम्। श्लोकोऽयं त[illegible] र्थश्लोकवार्त्तिके वार्त्तिककार ( राजवार्त्तिककार ) कर्तृकतया तत्त्वसंग्रहादिषु च पात्रस्वामिप्र[illegible] तृकतया समुद्धृतः। तथाहि—

25 "तथाह च–अन्यथानुपपन्न···" [तत्त्वार्थश्लो० पृ० २०३] "हेतुलक्षणं वार्तिककारेणैवमुक्तम्– अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्। इति।" [तत्त्वार्थश्लो० पृ० २०५] प्रमाणप० पृ० ७२। जैनतर्कवा० पृ० १३५। सूत्रकृतांगटी० पृ० २२५। प्रमाणमी० पृ० ४०। "अन्यथेत्यादिना पात्रस्वामिमतमाशङ्कते–अन्यथानुपपन्नत्वे ननु दृष्टा सुहेतुता। नासति त्र्यंशकस्यापि तस्माल्क्लीबास्त्रिलक्षणाः ॥ ···नान्यथानुपपन्नत्वं यत्र तत्र···अन्यथानुपपन्नत्वं···" [तत्त्वसं०पृ०४०६]
30 "तदुक्तं जैनैः–अन्यथानुपपन्नत्वं···" [ सन्मति० टी० पृ० ५६० ] न्यायदी० पृ० ३२। "तदुक्तं पात्रस्वामिना–अन्यथानुप···" [ स्या० रत्ना० पृ० ५२१ ]

तुलना–"अन्यथाऽसम्भवो ज्ञातो यत्र तत्र त्रयेण किम्।" [ प्रमाणसं० पृ० १०४ ]

**पृ० ७५. पं० २४. 'तुलोन्नाम'**–तुलना–"तुलोन्नाम·· तादात्म्यं सहचारतः।" [ प्रमाणसं० पृ० १०७ ] "परस्पराविनाभूतौ नामोन्नामौ तुलान्तयोः।" [ सिद्धिवि०पृ० ३१५ A. ]

**पृ० ७५. पं० २६. 'चन्द्रार्वाक्परभागयोः'**—तुलना—"तदेतस्मिन् प्रतिबन्धनियमे कथं चन्द्रादेरर्वाग्भागदर्शनात् परभागोऽनुमीयेत नानयोः कार्यकारणभावः सहैव भावात्। न च तादात्म्यलक्षणो भेदात्।" [सिद्धिवि० पृ० ३०६ B.]

**पृ० ७६. पं० ७. 'एतेन पूर्ववत्'**—अत्रायं पूर्वपक्षः—"अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोदृष्टं च।" [न्यायसू० १।१।५]　　5

**पृ० ७६. पं० ७. 'वीत'**—पूर्वपक्षः—"तत्र प्रथमं तावत् द्विविधं वीतमवीतं च। तत्र अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्। व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्। तत्र अवीतं शेषवत्। वीतं द्वेधा पूर्ववत्, सामान्यतोदृष्टञ्च।..." सांख्यतत्त्वकौ० पृ० ३०।

**पृ० ७६. पं० ७. 'संयोग्यादौ'**—पूर्वपक्षः—"अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्।" [वैशे० सू० ९।२।१]　　10

**पृ० ७६. पं० १०. 'अन्यथानुपपन्नत्व'**—तुलना—"अन्यथानुपपन्नत्वं हेतोर्लक्षणमीरितम्। तदप्रतीतिसन्देहविपर्यासैस्तदाभता॥" [न्यायाव० श्लो० २२]

**पृ० ७६. पं० १८. 'निर्व्यापारो'**—तुलना—प्रमाणसं० पृ० १०७।

**पृ० ७६. पं० २८. 'सत्त्वमर्थे'**—तुलना—"अन्यथा निश्चितं सत्त्वं विरुद्धमचलात्मनि।" [प्रमाणसं० पृ० १०७]　　15

**पृ० ७६. पं० ३१. 'सर्वज्ञप्रतिषेधे'**—तुलना—"सर्वज्ञवीतरागयोर्विप्रकर्षाद्वचनादेस्तत्र सत्त्वमसत्त्वं वा सन्दिग्धम्, अनयोरेव द्वयो रूपयोः सन्देहेऽनैकान्तिकः।" [न्यायबि० पृ० १०५] "उक्त्यादेर्दोषसंक्षयो नेत्येके व्यतिरेकोऽस्य सन्दिग्धो व्यभिचार्यतः॥" [प्रमाणवा० १।१४२] परीक्षामु० ६।३३। प्रमाणनय० ६।५७।

**पृ० ७८. पं० २२. 'परदुःखपरिज्ञानात्'**—तुलना—"सर्ववेदने तु परसन्तान-　　20
[...]द्वेदने रागादिमत्त्वमिति न सत्; तथाहि—परसन्तानसंवित्तौ वीतरागित्ववेदने। तस्य [...]वमप्यस्तीत्येतदत्यन्तदुर्घटम्॥ यदैवासौ रागी पररागवेदने तथा परवीतरागवेदने [...] रागोऽपि। उभयमपि तदैवेति चेन्न; एकेनाप्यनुभूतत्वाभावे रागी कथं मतः। तटस्थस्य हि [...]संवित्तौ न रागित्वादिसंभवः॥ तथाहि—न घटवेदने घटीभवति। एवं रागादयोऽपि परसन्तानान्तर्गतास्तटस्थतया अवगम्यमाना न रागित्वं निर्वर्त्तयन्ति।" [प्रमाणवार्त्तिकालं० लि० पृ० ४३४]　　25

**पृ० ७८. पं० ३०. 'असिद्धश्चाक्षु'**—तुलना—"तत्र शब्दानित्यत्वे साध्ये चाक्षुषत्वादित्युभयासिद्धः।" [न्यायप्रवे० पृ० ३] "अविद्यमानसत्ताकः परिणामी शब्दः चाक्षुषत्वात्।" [परीक्षामु० ६।२३।] प्रमाणनय० ६।५०।

**पृ० ७९. पं० ३. 'विरुद्धा'**—"एकलक्षणमाहात्म्याद्धेत्वाभासा निवर्तिताः। विरुद्धानैकान्तिकासिद्धाज्ञाताकिञ्चित्करादयः॥ अन्यथानुपपत्त्या निर्णीतो हेतुः। अन्यथैवोपपत्त्या विरुद्धः। अन्यथा वोपपत्त्याऽनैकान्तिकः। तथा अन्यथा च सम्भूष्णुरसिद्धः। अज्ञाने पुनरज्ञातोऽकिञ्चित्करः तथैव। न ह्येकलक्षणाभावे त्रिलक्षणं गमकम्। अनुपलब्धस्तावच्चात्र निश्चेतुमशक्यैव।" [सिद्धिवि० पृ० ३४३-४४]　　30

**पृ० ७९. पं० २७. 'तत्र मिथ्योत्तरं'**—तुलना—"दूषणाभासास्तु जातयः।"

[ न्यायबि० पृ० १३३ ] न्यायप्रवे० पृ० ९ । प्रमाणमी० २।१।२९ । "अस्तु मिथ्योत्तरं जातिरकलङ्कोक्तलक्षणा ।" [ तत्त्वार्थश्लो० पृ० ३०९,३१० ]

पृ० ७९. पं० ३०. 'दध्युष्ट्रादेः'–पूर्वपक्षः–"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः । चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ।।" [ प्रमाणवा० १।१८३ ]

5 पृ० ८०. पं० २. 'विदूषकः'–तुलना–"मिथ्यार्थाभास्थिरज्ञानचित्रसन्तानसाधकः। तत्त्वज्ञानगिराङ्ग (?) दूषकस्त्वं विदूषकः ।।" [ सिद्धिवि० पृ० ३३० B. ]

पृ० ८०. पं० १५. 'साधर्म्यादिसमत्वेन'–"साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुषपत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।" [ न्यायसू० ५।१।१ ]

10 वादविधि-प्रमाणसमुच्चय-न्यायमुख-तर्कशास्त्रोपायहृदयादिषु साधर्म्यादिसमानां जातीनां वर्णनमस्ति । द्रष्टव्यम्–प्रमाणमी० भाषाटि० पृ० ११३ । न्यायकुमु० टि० पृ० ३२३ ।

पृ० ८०. पं० १५. 'नेह प्रतन्यते'–तुलना–"छलजातिनिग्रहस्थानभेदलक्षणं नेह प्रतन्यते विस्तरभयात् अन्यत्र तद् द्रष्टव्यम् ।" [ सिद्धिवि० पृ० २५६ B. ]

पृ० ८०. पं० २०. 'असाधनाङ्ग'–पूर्वपक्षः–"असाधनाङ्गवचनमदोषोद्भावनं

15 द्वयोः । निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते ।।" [ वादन्याय पृ० २ ]

तुलना–"असाधनाङ्गवचनमदोषोद्भावनं द्वयोः । निग्रहस्थानमिष्टं चेत् किं पुनः साध्यसाधनैः ।।" [ सिद्धिवि० पृ० २७२ A. ] तत्त्वार्थश्लो० पृ० २८१ । प्रमेयक० पृ० २०३ A. प्रमाणमी० २।१।३५ ।

पृ० ८०. पं० २८. 'दृष्टान्तः'–तुलना–"साध्यसाधनयोर्व्याप्तिर्यत्र निश्चीयते

20 तराम् । साधर्म्येण स दृष्टान्तः सम्बन्धस्मरणान्मतः ।। साध्ये निवर्त्तमाने तु साधनस्याप्[illegible] संभवः । ख्याप्यते यत्र दृष्टान्ते वैधर्म्येणेति स स्मृतः ।।" [ न्यायाव० श्लो० १८–१९ ] [illegible] क्षामु० ३।४७–४९ । प्रमाणनय० ३।४०–४४ । [illegible]

पृ० ८०. पं० २८. 'तदाभासाः'–तुलना–"साधर्म्येणात्र दृष्टान्तदोषा न्या[illegible]नेह दीरिताः । अपलक्षणहेतूत्थाः साध्यादिविकलादयः ।।" [ न्यायाव० श्लो० २४ ] परीक्षामु० [illegible]।

25 ४०–४५ । प्रमाणनय० ६।५८–७९ । प्रमाणमी० २।१।२२–२७ ।

पृ० ८१. पं० ३. 'वादः'–तुलना–"विरुद्धयो धर्मयोरेकधर्मव्यवच्छेदेन स्वीकृततदन्यधर्मव्यवस्थापनार्थं साधनदूषणवचनं वादः ।" [ प्रमाणनय० ८।१ ] प्रमाणमी० २।१।३० ।

पृ० ८१. पं० ५. 'आस्तां तावद्'–उद्धृतेयं कारिका–तत्त्वार्थश्लो० पृ० २७९ ।

पृ० ८१. पं० ८. 'वितण्डादिः'–"यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाध-

30 नोपालम्भो जल्पः । स प्रतिपक्षस्थापनाहीनो वितण्डा ।" [ न्यायसू० १।२।१,२ ]

पृ०८१. पं१ १२. 'प्रामाण्यं यदि'–श्लोकोऽयं प्रमाणसंग्रहेऽपि (पृ० १२७) विद्यते।

इति द्वितीय अनुमानप्रस्तावः ।

पृ० ८१. पं० २७. 'सिद्धं प्रवचनं'–तुलना–"कृत्स्नं श्रीवर्धमानस्य वर्धमानस्य शासनम्।" [ सिद्ध० द्वात्रिं० २१।१ ] प्रमाणसं० पृ० ११६।

पृ० ८२. पं० ५. 'पुरुषातिशयो'–पूर्वपक्षः–"पुरुषातिशयापेक्षं यथार्थमपरे विदुः। इष्टोऽयमर्थः [ प्रत्येतुं शक्यः ] सोऽतिशयो यदि ॥ अयमेवं नवेत्यन्यदोषा निर्दोषतापि वा। दुर्लभत्वात् प्रमाणानां दुर्बोधेत्यपरे विदुः ॥" [ प्रमाणवा० १।२२०-२१ ] 5

तुलना–"पुरुषातिशयोऽज्ञेयो विप्रलम्भी किमिष्यते ॥" [ प्रमाणसं० पृ० ११६ ] "विप्रलम्भशङ्कानुबन्धात् इत्यधिकारिकारिकां विप्रलम्भो वचनं तस्याशङ्का तस्या अनुबन्धात् कारणात् पुरुषातिशयः किमिष्यते ? नेष्टव्य इत्यर्थः''' तदनुबन्धिकारणं दर्शयन्नाह–चेष्टते व्याप्रियते वेद्यादि यथाकृतम्, क इत्याह–वीतदोषो वीतरागः, क इव दोषवदिति। दूषणान्तरमाहपुरुषातिशयः सन्नपि ज्ञातु यद्यशक्यः किमिष्यते? [ सिद्धिवि० टी० पृ० ३९३ B. ] 10

पृ० ८२. पं० १२. 'सिद्धहिंसा'–तुलना–"प्रसिद्धहिंसानृतस्तेयाब्रह्मपरिग्रहस्वविपक्षगुणोत्कर्षमाशंसमानः यथार्थदर्शनादिगुणो नेति निःशङ्कं नश्चेतः।" [प्रमाणसं० पृ० ११६]

पृ० ८२. पं० १५. 'हेयोपादेयतत्त्वस्य'–पूर्वपक्षः–"हेयोपादेयतत्त्वस्य सोपायस्य प्रसिद्धितः। प्रधानार्थाविसंवादनुमानम्परत्र वा ॥" [ प्रमाणवा० १।२१९ ]

पृ० ८२. पं० २८. 'भावनापरिपाकतः'–पूर्वपक्षः–"तस्माद् भूतमभूतं वा यद् यदेवाभिभाव्यते। भावनापरिनिष्पत्तौ तत्स्फुटाकल्पधीफलम् ॥" [ प्रमाणवा० ३।२८५ ] "भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानम्" [ न्यायबि० पृ० २० ] "किंच, ये ये विभाव्यन्ते ते ते भान्ति परिस्फुटम्। भावनापरिनिष्पत्तौ कामादिविषया इव ॥ ''' भूतार्थभावनोद्भूतः प्रमाणं तेन तन्मतम्।" [ तत्त्वसं० पृ० ८९६ ] 15

तुलना–"चतुःसत्यभावनोपायं निर्वाणं सकलं कथम् मिथ्याज्ञानतः तत्त्वप्रतिपत्तिः। ...मतत्त्वभावनाप्रकर्षपर्यन्तजं तत्त्वज्ञानञ्च। मिथ्यैकान्ताविशेषे नैरात्म्येतरपक्षयोः न कश्चि...ः।" [ सिद्धिवि० पृ० ३५४-५५] "यदि पुनः चिन्तामयीमेव प्रज्ञामनुशीलयतां विभ्रम...निर्मलमनःप्राप्तिः निर्वाणम्, तच्च कथम् अतत्त्वभावनातः, मिथ्याभावनायां तत्त्वज्ञानं ...शोकभयोन्मादादिवत्।" [ सिद्धिवि० पृ० ३८७ ] 20

पृ० ८३. पं० ३. 'निरुपद्रवभूतस्य'–तुलना–"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः। न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥" [ प्रमाणवा० १।२२३, २।२१० ] 25

पृ० ८३. पं० ९. 'यस्तावत् करुणा'–तुलना–लघी० टि० पृ० १३१ पं० १२।

पृ० ८३. पं० १०. 'सन्तानः'–तुलना–लघी० टि० पृ० १३१ पं० ३।

पृ० ८३. पं० २४. 'विश्वलोकाधिक'–पूर्वपक्षः–'सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः। यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकीर्त्तने ॥" [ मी० श्लो० पृ० ८८ ] "ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये। अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥ तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम्। कीटसंख्यापरिज्ञाने तस्य नाद्योऽपि युज्यते ॥" [ प्रमाणवा० २।३०, ३१ ] 30

पृ० ८४. पं० ६. 'सकलज्ञस्य'–तुलना–"सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी। विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः ॥" [ तत्त्वसं० पृ० ६५ ] प्रमाणसं० पृ० १००। तत्त्वार्थश्लो० पृ० १३,१४। "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः ॥" 35

